संस्कृतस्य साहाय्येन भाषाणां तत्त्ववेत्तृभिः ।
भाषावैज्ञानिकं शास्त्रं पाश्चात्यैर्निर्मितं नवम् ॥४१॥

नाना भाषाणामेककुलोद्भवत्वं कथं निर्धार्यत इत्याकाङ्क्षायामाह—

निरीक्ष्य वर्गभेदांश्च कृत्वा सिद्धान्तनिर्णयम् ।
जीवजन्तुद्रुमादीनां वंशा वर्गाः प्रजातयः ॥४२॥
पृथक् पृथक् समादिष्टा यथा वैज्ञानिकैरिह ।
भाषावैज्ञानिकैस्तद्वद्वाग्वंशा अपि निश्चिताः ॥४३॥
सर्वा विश्वस्य भाषा हि नाना वंशोद्भवा मताः ।
लक्ष्येते साम्यवैषम्ये भाषावंशनृवंशयोः ॥४४॥

एकस्यैव भाषापरिवारस्य नानादेशेषु व्याप्ता विविधाकारप्रकाराश्च शतशो भाषाः कथं दृश्यन्त इत्येतदेव दृष्टान्तत्रयेण स्पष्टीक्रियते—

नाभिं श्रिता यथैवाराश्चक्रे सम्यक् प्रतिष्ठिताः ।
वृताः परिधिना यद्वच्चक्रमेकं निगद्यते ॥४५॥
नाना देशेषु कालेषु व्याहृता विविधैर्जनैः ।
तथैव सहजा भाषाः कथ्यन्तेऽत्र सनाभयः ॥४६॥

उदाहरणान्तरं प्रदर्श्यते—

यथैकस्माद्द्रुमाज्जाता द्रुमाः शाखाश्च भूरिशः ।
पृथग्भूतास्तथा भाषा दृश्यन्त एकवंशजाः ॥४७॥

तृतीयं दृष्टान्तमुपस्थाप्यते—

भाषावृत्तान्यनेकानि महावृत्तेऽल्पवृत्तवत् ।
श्लिष्टान्यत्र मिथो यानि साम्यं तेष्वधिकं स्फुटम् ॥४८॥
देशान्तराणि गच्छद्भिर्भाषामेकां प्रयोक्तृभिः ।
प्रवासिनां गणैर्नीता भाषा देशान्तरं स्वकाः ॥४९॥
तत्र ता विस्तृता यत्र पुनर्वासो व्यधायि तैः ।
भारोपीया गिरो व्याप्ता एवं भूमण्डलेऽखिले ॥५०॥

एतत्कथं ज्ञातुं शक्यते यत्का भाषा एककुलोद्भवाः सन्तीत्या-

कांक्षायामाह—

स्वराणां व्यञ्जनानाञ्च निपातानान्तथैव च ।
प्रकृतिप्रत्ययादीनां पदानाञ्चैकरूपता ॥५१॥
दृश्यन्ते यासु भाषासु ताः सर्वा दूरगा अपि ।
मन्यन्त एकवंशीया भारोपीयं कुलं यथा ॥५२॥

प्रमुखा भाषापरिवाराः परिगण्यन्ते—

भारूपाद्या गिरां वंशा नैकाः प्रोक्ता दिशानया ।
भारूपवाण्टुसेमेटिग्द्राविडैकाक्षराबयः ॥५३॥
यूरालाल्ताइकाद्याश्च भाषावंशा मता इह ।
भाषावंशेषु विश्वस्य भारोपीयो महत्तमः ॥५४॥
संस्कृतग्रीकलातिन्या अन्याश्चैवास्य वंशजाः ।
तुलनात्मकपद्धत्या सम्बन्धोऽत्र विनिश्चितः ॥५५॥
यूरोपस्य गिरस्तद्वद्भारतेरानयोरपि ।
संस्कृतस्य सजातीया भारोपीयकुलोद्भवाः ॥५६॥

सर्वा अपि भारोपीया भाषाः 'केन्तुम्' 'शतञ्चे'ति वर्गद्वये विभक्ताः पुनश्च प्रत्येकस्य वर्गस्य पञ्चसंख्याका उपवर्गाः सन्ति—

एकाकराः समाकाराः सहजाः संस्कृतस्य ये ।
ग्रीकेतालीयकेल्टिक्यट्यूटानीयास्तुखारिकः ॥५७॥
आर्मेनियश्च बाल्टिक्यः स्लाव ईरान्य एव च ।
जाता आद्यार्यभाषाया भाषावर्गा इमे दश ॥५८॥
पुरैवाद्यार्यभाषाया विभाषे द्वे मते इह ।
'केन्तुं'-'शत'ञ्च विख्याते तयोराख्ये प्रकल्पिते ॥५९॥
ग्रीकाद्याः पञ्च पूर्वोक्ता केन्तुंवर्गगता मताः ।
संस्कृताद्याश्च पञ्चान्ये 'शतं'वर्गे स्थिरीकृताः ॥६०॥

भारोपीयकुले प्रत्नतमेति मन्यमानामेकामपरां 'हित्ति'भाषां विशिनष्टि—

कैश्चिच्छोधकरैर्ज्ञाता बद्धा कीलाक्षरेषु या ।
काप्यद्यभाषया नेदीयसी हित्तिर्मता मृता[1] ॥६१॥

---

१. मतामृता इत्यपि पदच्छेदोऽभीष्टः। भाषावैज्ञानिकैर्या 'हित्ति' भाषा मृतेत्युच्यते सा अमृताप्यस्ति।

न केवलं भारतेऽपि तु यूरोपेऽपि भाषाद्वयं संस्कृतेन सह सर्वथा साम्यमावहति। तयोरेका जार्मण्यवर्गस्य प्रत्नतमा 'गॉथिक' भाषासीत्। गॉथिकीं विशिनष्टि—

जार्मण्यस्यैव वर्गस्य संज्ञा ट्युटानिकोच्यते।
विभक्ता अस्य वर्गस्य भाषा निम्नोच्चवर्गयोः ॥६२॥

आङ्ग्लाद्या निम्नवर्गीया उच्चाश्च जर्मनादिकाः।
एका जार्मण्यभाषासीद् गॉथिकी संस्कृतानुजा ॥६३॥

चतुर्थे शतके ख्रीष्ट उलिफल्लाख्यो बुधोत्तमः।
बाइबिलस्य गॉथिक्यामनुवादञ्चकार ह ॥६४॥

नाजानदद्य कोऽपीमां विभाषां संस्कृतानुजाम्।
गॉथिक्यामनुवादं चेद् व्यधान्नासौ महामनाः ॥६५॥

फ्रान्त्स बॉप्पाऽख्य जार्मण्यो भाषाशास्त्रपितामहः।
पठन्नाहानुवादन्तं संस्कृतैवास्ति गॉथिकी ॥६६॥

यूरोपेऽद्यापि प्रचलिता संस्कृतसदृशी एकान्या भाषा बाल्टिक-वर्गीया लिथ्वानीयास्ति। तां लिथ्वानीयां विशिनष्टि—

रूसस्य पश्चिमे भागे समुद्रपर्वतावृतः।
लघिष्ठो विद्यते देशो लिथ्वानीयेति विश्रुतः ॥६७॥

जना अद्यापि तत्रत्या आबालवृद्धयोषितः।
वाचं संस्कृतकल्पां हि व्याहरन्तीति शुश्रुमः ॥६८॥

यूरोपे प्रचलिताः सर्वाः संस्कृतसजातीया भाषा परिगण्यन्ते—

ग्रीकेतालीयलातीनीस्पेनीयापुर्तगालिकाः।
फ्रान्सीया चायरीया च जार्मण्या इंग्लिशा डचा ॥६९॥

पोलीया स्वीडिया डेन्या वाचोऽन्याः स्केण्डिनेविकाः।
लिथ्वान्या लेटिशाल्बेन्या आर्मेनीया तथैव च ॥७०॥

स्लावीया विविधाभाषा रूसीबुल्गारियासमाः।
जिप्सी च भारतीयानां भाषा तत्र प्रवासिनाम् ॥७१॥

यूरोपे व्याहृता अन्या विभाषाश्च शताधिकाः।
संस्कृतस्य सजातीयाः सन्तीमा निखिला गिरः ॥७२॥

नव्यैर्भाषावैज्ञानिकैर्भारतेरानयोर्भारोपीया भाषा एव 'आर्यभाषा' इति परिभाषिता:—

संस्कृतप्राकृतावेस्तपारसीहिन्दवीसमा:।
प्रोच्यन्त 'आर्यभाषा' हि भारतेरानदेशयो: ॥७३॥

ईरानदेशीया आर्यभाषा वर्ण्यन्त—

ज़न्दावेस्तेति विख्यातं पारसीधर्मपुस्तकम् ।
तस्य 'गाथाख्य' मन्त्राणां भाषा वेदानुकारिणी ॥७४॥

अधिदेवाधियज्ञाद्या: समाना विषया अपि ।
ईरानस्यैव भाषासीद्विख्याता प्रत्नपारसी ॥७५॥

अवस्ताया यथा भाषा वेदभाषा प्रतीयते ।
लोकसंस्कृततुल्यास्ति तथैव प्रत्नपारसी ॥७६॥

संस्कृते प्रत्नपारस्यां चास्ति नो महदन्तरम् ।
संस्कृतस्य विभाषैव सर्वथा सा प्रतीयते ॥७७॥

तस्या जाता: पहलवी च नवीना पारसी दरी ।
ईरानीया विभाषास्तु नैका: सन्ति न संशय: ॥७८॥

अधुना क्रमप्राप्ता: प्रत्ना नवीनाश्च प्रमुखा आर्यावर्तीया भारोपीया भाषा निर्दिश्यन्ते। संस्कृतभाषा तु प्राच्योदीच्येति भेदद्वयमावहति, परं प्राकृतादिवदाधुनिका हिन्द्यादय आर्यभाषा: प्रच्यावाच्यप्रतीच्यो-दीच्या मध्यदेशीयाश्चेति पञ्चसु वर्गेषु विभक्ता इत्यपि प्रतिपाद्यते—

व्याहरन् यां पुरा वाचं मानवा: सप्तसिन्धुषु ।
भाषावैज्ञानिकै: सा वाक् प्राकृता परिभाषिता ॥७९॥

रूपं तस्या: पुरा वाचो वेदेष्वद्यापि रक्षितम् ।
प्राकृताख्या विभाषास्तु नैका: साहित्यरक्षिता: ॥८०॥

उदीच्या च प्रतीच्या चावाच्या च मध्यदेशजा ।
प्राच्या च देश उत्कीर्णा अशोकेनेह प्राकृता: ॥८१॥

शौरसेनी महाराष्ट्री मागधी चार्धमागधी ।
पैशाचीति नवा नैका: पाल्याद्यास्तु पुरातना: ॥८२॥

अपभ्रंशभाषा निरूप्यन्ते—

अवहट्टा (अपभ्रंशा) भिधा भाषा नागराचोपनागरा।
व्राचडेति त्रिधा भक्ता: साहित्ये यत्नजा स्मृता: ।।८३।।
प्राकृताधुनिकयोर्मध्ये स्थितिस्तासामिहोच्यते ।
अपभ्रंशा जनैर्नोक्ता: कदाचिदिति मन्यते ।।८४।।

आर्यावर्ते प्रयुक्ता आधुनिका: प्रमुखा आर्यभाषा विभाषाश्च संख्यायन्ते—

पश्तो सिन्धी च पञ्जाबी लँहन्दा सैव पश्चिमा ।
गुजराती मराठी द्वे ओड़िया बंगलासमी ।।८५।।
नयपाली कुमायूनी काश्मीरी चैव डोगरी ।
पर्वतीया विभाषास्तु नैका: सन्ति हिमालये ।।८६।।
मैथिली भोजपुर्यौ द्वे तृतीया चावधी स्मृता ।
इमास्तिस्रो विभाषा हि पूर्व्या हिन्द्या:प्रकीर्तिता: ।।८७।।
पश्चिमायास्तु बुन्देली व्रजभाषा च कोमला ।
खड़ीबोल्याश्च रूपे द्वे हिन्दी चोर्दु मते उभे ।।८८।।
राजस्थान्यास्त्रयो भेदा मध्यदेशे च मालवी ।
आद्यभारतभाषाया वाचो विकसिता: क्रमात् ।।८९।।
प्रोच्यन्त आर्यभाषा या उत्तरे भारतेऽधुना ।
भारतेरानवर्गीया: सविभाषा: शताधिका: ।।९०।।

ग्रीकलातिनीगॉथिकलिथ्वानीयाद्या यूरोपीया भाषा संस्कृत-सजातीया एवेत्युच्यतेऽत: संस्कृतस्य यूरोपीयभाषाणाञ्च साजात्यसूचकं प्रमुखं तत्त्वजातं प्रदर्श्यते—

परस्मा आत्मनेभाषे भावे कर्मणि चात्मने ।
अडागमश्च भूतेऽथ प्रयोगो लुङ्लिटोरपि ।९१।।
धातुप्रत्यययोर्मध्ये स्यागमश्च भविष्यति ।
ददातिगणधातूनां द्विरुक्तिस्सार्वधातुके ।।९२।।
परोक्षे यङ्लुगन्ते च द्वित्वेऽभ्यासाल्पप्राणता ।
सुपान्तिङाञ्च सारूप्यं सादृश्यं सर्वनामसु ।।९३।।

उपसर्गनिपातानां धातूनाञ्चैकरूपता ।
त्रीणि वचनलिङ्गानि समास्सर्वा विभक्तयः ॥९४॥

सङ्ख्यानामेकरूपत्वं पश्वादीनां समाभिधा ।
परिवारसदस्यानां समनामानि सर्वथा ॥९५॥

नाम्नां परस्सहस्राणां मूलैक्यं स्पष्टमेव यत् ।
प्रतनभारूपभाषासु सामान्येनोपलक्षितम् ॥९६॥

संस्कृतग्रीकलातिन्यावेस्तादिषु समं स्फुटम् ।
समासामार्यभाषाणां तत्त्वं साजात्यसूचकम् ॥९७॥

ग्रीकलातिनभाषे हि संस्कृतस्यैव सोदरे ।
आयर्शास्तु केल्टिक्या आंग्लाद्या जर्मना अपि ॥९८॥

रूसीबुलगादिकाःस्लाव्या बाल्टिक्ये लिथ्वलेटिशे
फ्रेञ्चेतालीयारोमान्साः संस्कृतेन समाः समाः ॥९९॥

तालव्यनियमे प्रोक्ते भाषावैज्ञानिकैर्नवैः ।
महत्त्वं वेदभारत्याश्चीयते नापचीयते ॥१००॥

प्रत्नैर्माता मता यासौ मातृकल्पाग्रजा नवैः ।
भाषावैज्ञानिकैः सर्वैं यथापूर्वं हि सादृता ॥१०१॥

वेदवागृषिभिः सूक्ताः सप्तसिन्धुनिवासिभिः ।
सैव प्रत्याद्यभाषायाः[1] पूर्वपाश्चात्यसम्मता ॥१०२॥

भूतल आर्यभाषास्तु प्रोच्यन्ते बहुसंख्यकाः ।
एका संस्कृतभाषैव संयोजयति ताः समाः ॥१०३॥

भारूपप्रमुखा भाषा व्याख्याता अनया दिशा ।
नामूलं लेखितुं किञ्चिदहमत्रोत्सहे परम् ॥१०४॥

विषयः संस्कृतस्यायं संस्कृते नैव[2] लभ्यते ।
इति संचिन्त्य तत्पूर्त्यै प्रयत्नोऽयं मया कृतः ॥१०५॥

---

१. आद्यभाषायाः प्रतिनिधिरिति यावत् ।

२. संस्कृतेनेवे'ति पदच्छेदोऽपीष्टः ।

भारोपीयासु सर्वासु वाक्षु व्याप्तास्ति संस्कृता ।
नैकैर्निदर्शनैरस्या महत्त्वं प्रतिपाद्यताम् ॥१०६॥

कृत्वा भारूपभाषाणां तुलनां संस्कृतेन तु ।
महत्त्वं सुरभारत्या दर्शयन्तु जनान्बुधाः ॥१०७॥

तथ्यं ब्रवीमि विदुषां पुरतो विनम्रं
वागर्थरूपमधिकृत्य नवं पुराणम् ।
प्रोक्तं यदत्र सदसत्समवेक्ष्य तत्त्वं
ग्राह्यं भवेत् किमपि तत्प्रथयन्तु लोके ॥१०८॥

## अथ ध्वन्यादिविषयकम्

## द्वितीयं प्रकरणम्

ध्वनीनां पदरूपाणां वाक्यस्यार्थादिकस्य च।
भारोपीयार्यभाषाणां विकासोऽत्र निरूप्यते ॥१॥

सार्थकनिरर्थकभेदाभ्यां ध्वनेस्तावद्द्वैविध्यम्—

ध्वनिस्तु द्विविधो ज्ञेयः सार्थकश्च निरर्थकः।
सार्थको मानवस्यास्ति तदन्यश्च निरर्थकः ॥२॥

मानवध्वनिः परिभाष्यते—

मूलैककस्तु शब्दानामभेद्यो ध्वनिरक्षरः।
सन्ति मानवभाषासु ध्वनयो बहुसंख्यकाः ॥३॥

ध्वनीनां यानि चिह्नानि लिप्यर्थं निश्चितानि वै।
तान्येवात्राभिधीयन्ते वर्णा अप्यक्षरा अपि ॥४॥

प्रयाशो 'वर्ण'शब्दोऽयं ध्वन्यर्थेऽपि प्रयुज्यते।
अक्षरार्थः क्वचिद्वर्णः क्वचिद्ध्वन्यर्थकोऽप्ययम् ॥५॥

पर्याया इव मन्यन्ते ध्वनिवर्णाक्षराः समे।
पर्यायौ परिभाष्येते आक्षरिकस्वरात्मकौ ॥६॥

त्रिषष्ठिर्वा चतुःषष्ठिर्ध्वनय संस्कृते मताः।
प्रायः षड्विंशतिर्वर्णा यूरोपीयासु वाक्षु च ॥७॥

रूस्यादिष्वधिका जाताः संयुक्ताक्षरमेलनात्।
आद्यभारूपभाषाया ध्वनयः संस्कृते यथा ॥८॥

अन्यापेक्षया संस्कृतवर्णमालायाः वैशिष्ट्यं व्यनक्ति—

वर्णमालासु भाषाणां निबद्धा ध्वनयोऽखिलाः।
संस्कृते वर्णमालाया ध्वनिविन्याससत्क्रमः ॥९॥

स्थानयत्नानुसारित्वाद्ध्वनिविज्ञानसम्मतः।
प्रत्नपारस्यवर्णानां मालापि संस्कृतानुगा ॥१०॥

यदृच्छानिर्मिताः सर्वा इतरा वर्णमालिकाः।
संस्कृतामनुसृत्यैव वर्णमालां सुयोजिताम् ॥११॥

निर्मिताद्याद्यभाषायाः सम्पूर्णा वर्णमालिका।
संस्कृतेऽपि परं लुप्ता ध्वनयो जसामा मनाक् ॥१२॥

ध्वनयो वर्णा वा भाषाश्च विभिन्नासु लिपिषु लिख्यन्ते। अतः भारोपीयभाषाणां प्रमुखा लिप्यो निर्दिश्यन्ते—

लिपिश्च वर्णमाला च भिन्ने स्त उभये अपि।
ब्राह्मी लिप्या यथोद्भूता लिप्यो भारतवासिनाम् ॥१३॥

लिप्यो रूसादिदेशानां ग्रीकलिप्याः समुद्गताः।
लातिन्याङ्ग्लीयफ्रेञ्चादिगिरां यूरोपवासिनाम् ॥१४॥

रोमनाख्या लिपिर्व्याप्ताद्यत्वे भूमण्डलेऽखिले।
परं ब्राह्मीसमुद्भूता जयति देवनागरी ॥१५॥

लिप्युच्चारणयोर्लिप्यां शब्दरूपं सुरक्ष्यते।
विक्रियन्ते पुरा शब्दा वाण्यां पश्चाच्च लेखने ॥१६॥

ध्वनिभिरेव शब्दाः शब्दैश्च भाषाः स्वं स्वं रूपमाकलयन्ति। अतः प्रथमं ध्वन्युत्पत्तिप्रकारादिकं प्रोच्यते—

स्वरतन्त्र्यौ हि विद्येते श्वासस्य नलिकामुखे।
न तन्त्रीसदृशे ते स्त ओष्टाकारे तु ते उभे ॥१७॥

स्वरूपस्थे श्लथे दूरस्थिते नोत्पादयतो ध्वनिम्।
श्वासाहते समीपस्थे ते ध्वन्युत्पादनक्षमे ॥१८॥

स्थूलतन्त्र्यौ मनुष्याणां तथा तन्व्यौ तु योषिताम्।
रुक्षं ध्वनिन्तु स्थूले ते व्यङ्क्तस्तन्व्यौ तु कोमलम् ॥१९॥

कण्ठाधःस्थन्तु तत्स्थानं स्वरयन्त्रमिहोच्यते।
तत्रैव पूर्वमुदभूताः स्थानयत्नादिभेदतः ॥२०॥

नानाकारप्रकाराणि गृह्णन्ति ध्वनयो मुखे।
श्रोतुं योग्यौ भवेत्स्फोटादोष्ठाभ्यां निर्गतो ध्वनिः[1] ॥२१॥

---

१. अग्रे ३७ तमी कारिकाप्यवलोकनीया।

वागिन्द्रियाणां बाह्याभ्यन्तरप्रयत्नाभ्यामेव ध्वनय आविर्भवन्तीत्यतोऽनयोः स्वरूपं निरूप्यते—

**ध्वनेरुच्चारणे यत्नौ जायेते आस्यकण्ठयोः ।**
**आस्य आभ्यन्तरः प्रोक्तः कण्ठ्यस्तु बाह्य ईरितः ॥२२॥**

**आभ्यन्तरप्रयत्नोऽसौ य आस्ये[1] जिह्वया कृतः ।**
**बाह्यस्तु स्वरतन्त्रीभ्यां जातो यत्नो मतो बुधैः ॥२३॥**

बाह्याभ्यन्तरयोः प्रयत्नयोर्विभेदा उच्यन्ते—

**यत्ना अभ्यान्तराः पञ्च स्पृष्टविवृतसंवृताः ।**
**ईषत्स्पृष्टस्तथैवेषद्विवृत इति संज्ञकाः ।२४॥**

**संवारनादघोषाश्चाघोषश्वासविवारिताः ।**
**[2]दूरसामीप्यजास्तन्त्र्योर्बाह्या यत्ना अमी स्मृताः ।२५॥**

**नादघोषौ तथा श्वासाघोषौ पर्यायवाचिनौ[3] ।**
**अल्पप्राणमहाप्राणौ श्वासन्यूनाधिकाश्रितौ ॥२६॥**

केषां केषां ध्वनीनामुच्चारणे के के बाह्यप्रयत्ना अपेक्ष्यन्ते—

**वर्गाणां प्रथमाश्चैव द्वितीयाः शसषा अपि ।**
**विवाराघोषश्वासाश्च घोषाश्चान्ये प्रकीर्तिताः ॥२७॥**

केषां ध्वनीनामुच्चारणाय महाप्राणस्य (अधिकस्य श्वासस्येतियावत्) आवश्यकता वर्तते, के च ध्वनयोऽल्पेनैव श्वासेनोच्चारयितुं शक्यन्ते—

---

१. ओष्ठात्प्राक्काकलकादिति महाभाष्य उक्तम् । काकलकं हि नाम ग्रीवाया-मुन्नत प्रदेश इति कैयटेन च स्पष्टीकृतम् । काकलमेव भाषायां 'घण्टी' त्युच्यते ।

२. अन्योऽन्यं दूरे स्थितवत्योः स्वरतन्त्र्योर्विवारावस्थायां (स्वाभाविक्यां स्थित्या-मिति यावत्) श्वासोऽनिरुद्धभावेन बहिरागच्छति, एतस्यामवस्थायां स्वरतन्त्रीभ्यां सह श्वासस्य घर्षणं न जायते अत एव ते उभे न प्रकम्पेते । एतस्मादेव कारणादेते प्रयत्ना 'विवाराघोषश्वासा' इत्युच्यन्ते ।

३. अनयोरन्यतरेणैव नाम्ना वाह्यप्रयत्नः सम्यगवगन्तुं शक्यते, नामद्वयन्तु स्पष्टीकरणार्थमेवेति प्रतिभाति ।

**ऊष्माणश्च द्वितीयाश्च चतुर्था ध्वनयस्तथा ।**
**महाप्राणा इमे प्रोक्ता अल्पप्राणास्तथापरे ।।२८।।**

ध्वनीनामुच्चारणे जिह्वा मुख्यं कार्यं निर्वहति—

**आभ्यन्तरेषु यत्नेषु ध्वनीनां स्थाननिर्णये ।**
**ध्वन्युच्चारणयन्त्रेषु जिह्वाकार्यं विशिष्यते ।।२९।।**

उच्चारणावसरे जिह्वायास्तिस्रोऽवस्था जायन्ते—

**अधः स्थिता मुखेः जिह्वा मध्यगाप्यथवोर्ध्वगा ।**
**उच्चारणे तु जिह्वाया एषावस्थात्रयी मताः ।।३०।।**

आभ्यन्तरप्रयत्नस्य विवृतादिभेदानां को रहस्य इत्युच्यते—

**अधः स्थानुत्थिता जिह्वा श्वासमार्गं रुणद्धि नो ।**
**भवत्यास्यस्य विवरं पूर्णतो विवृतं[1] तदा ।।३१।।**
**स्वराणां तत्र ज्ञातानां यत्नो विवृत ईरितः ।**
**यदेषदुत्थिता जिह्वावृणोत्यल्पं मुखं तदा ।।३२।।**
**ऊष्माणस्तत्र जायन्त ईषद्विवृतसंज्ञकाः ।**
**श्वासावरोधं कुरुते जिह्वा पूर्णोत्थिता मुखे ।।३३।।**
**संवृताख्येन यत्नेन तदैषोऽकार उच्यते ।**
**ईषत्संवृतयत्नेन चान्तःस्थानां समुद्भवः ।।३४।।**

श्वासस्यागमनमवरोधः स्फोटश्चेति त्रिविधया श्वासस्थित्या ध्वनिराविर्भवति, श्रोतुं शक्या च जायत इत्याह—

**स्पर्शाघातावरोधाश्च ध्वन्यभिव्यक्तिहेतवः ।**
**श्वासस्यागमनाद्रोधात्स्फोटाच्च जायते ध्वनिः ।।३५।।**
**स्पष्टं स्पर्शेष्विदं तस्मात्स्पर्शाः स्फोटाः प्रकीर्तिताः ।**
**मृदुतालु च[2] मूर्धानं तालु वर्त्सं[3] रदाँस्तथा ।।३६।।**

---

१. विवृतमुद्घाटितम् (खुला हुआ) इति यावत् । २. संस्कृते 'कण्ठ' इति नाम्ना प्रसिद्धमेतत्स्थानं वस्तुतो 'मृदुतालु' अस्ति । ३. हिन्द्यां 'मसूड़ा' इति ख्यातं दन्तोपरिस्थितं स्थानमेव 'वर्त्स' मित्युच्यते । वेदे तु 'वर्स्व' नाम्नाभिहित मेतत्स्थानम् । आङ्ग्लीयौ t. d ध्वनी वर्त्स्याविव न तु मूर्धन्यावित्यपि ज्ञेयम् ।

जिह्वाश्वासावुभावोष्टौ स्पृष्ट्वोत्पादयतो ध्वनीन्।
ध्वन्युर्मयः स्फुटाः प्राप्ताः श्रूयन्ते श्रवणेन्द्रियैः ॥३७॥
विद्युत्तरङ्गितः शब्दो यन्त्रैर्दूरेऽपि श्रूयते।
शब्दस्य नित्यता सिद्धा यन्त्रैर्वैज्ञानिकैर्भृशम् ॥३८॥

जिह्वाया भागत्रयं तस्यास्ये स्पर्शस्थानानि च प्रोच्यन्ते—

अग्रो मध्यश्च पश्चश्च जिह्वाभागास्त्रयो मताः।
कोमलं तालु पश्चेन मूर्धानं मध्यपश्चिमा ॥३९॥
तालु पश्चाग्रभागेनाग्रेण वर्त्सं रदाँस्तथा।
जिह्वा स्पृशति मूर्धानं परावृत्योत्थिता यदा ॥४०॥
संस्कृतस्य टवर्गीया जायन्ते ध्वनयस्तदा।
कुटुचुतुपुभेदैस्तु स्पर्शाः पञ्चविधाः स्मृताः ॥४१॥
येऽत्रोक्ता अकुहाः कण्ठ्यास्ते सन्ति मृदुतालुजाः।
इचुयशास्तु तालव्या ऋटुरषा हि मूर्धिनजाः ॥४२॥
दन्त्या लृतुलसा ज्ञेया ओष्ठ्यावुपू बधैर्मतौ।
दन्तौष्टजो वकारस्तु टडावाङ्ग्लौ तु वर्त्सजौ ॥४३॥
अइऋलृउ वर्णानां क्रमाद्व्यक्तिः शलो यणः।
वर्त्स्यतालव्ययोर्मध्ये मूर्धन्यस्योचिता स्थितिः ॥४४॥
ध्वनीनां स्थानयत्नाद्याः प्रोक्ता ये ऋषिभिः पुरा।
वैज्ञानिकैर्ध्वनेर्यन्त्रैस्तत्सर्वं सुपरीक्षितम् ॥४५॥

स्वरव्यञ्जनयोर्लक्षणन्तयोरन्तरञ्च—

स्वरव्यञ्जनभेदाभ्यां ध्वनयो द्विविधा मताः।
'स्वराः स्वयं विराजन्त' इति प्राह पतञ्जलिः ॥४६॥
विनैवान्यसाहाय्येन प्रोच्चार्यन्ते यतः स्वराः।
स्वराणामेव प्राधान्यमतः प्रोक्तं बुधोत्तमैः ॥४७॥
स्वराणां ये साहाय्येन प्रोच्यन्ते ते हि व्यञ्जनाः।
अकाराद्याः स्वरा ज्ञेयाः काद्या हान्ताश्च व्यञ्जनाः ॥४८॥

स्वराः कतिविधा इत्युच्यते—

मूलसन्ध्यर्धभेदैस्तु स्वराः पूर्वं त्रिधा मताः ।
पुनस्ते त्रिविधा जाता ह्रस्वदीर्घप्लुता इति ॥४६॥

उदासीनस्वरः 'श्वा'ऽऽख्यो भाषावैज्ञानिकैर्मतः ।
अकारेकारयोर्मध्ये तत्स्थितिश्चापि निश्चिता ॥५०॥

'श्वास्त्यावश्यको नैवेतदस्ति नूतनं मतम् ।
लीरिञ्जयलवर्णैस्तन्निर्वाहस्तैः प्रकल्पितः ॥५१॥

मूलस्वराः के सन्तीत्युच्यते—

आद्य भारूपभाषाया अ a ए e ओ o इति संज्ञिका ।
व्याहृताद्यापि यूरोपे सैषा मूलस्वरत्रयी ॥५२॥

संस्कृतेऽकारतां यातौ ए ओ मूलस्वरावुभौ ।
ए ओ यौ संस्कृते सन्धिस्वरौ मूलस्वरौ न तौ ॥५३॥

अर्धस्वराः के क इत्युच्यते—

यणो जाता इकः सन्ति प्रोक्तास्तेऽर्धस्वरा अतः ।
सम्प्रसारणितास्ते नो नव्यैर्मूलस्वरा मताः ॥५४॥

सन्धिस्वरा विवेच्यन्ते—

सन्धिस्वरास्तु भूयांसो भाषास्वन्यासु संस्थिताः ।
ए ओ ऐ औ इमे श्लिष्टाश्चत्वारः संस्कृते तु ते ॥५५॥

व्यञ्जनानां भेदा उच्यन्ते—

स्पर्शान्तःस्थोष्मभेदैस्तु व्यञ्जनास्त्रिविधा इह ।
स्पर्शाः काद्या मपर्यन्ता यरलवा यणो मता ॥५६॥

ऊष्माणः शसषा हश्च रलौ तु तरलौ स्मृतौ ।
संघर्षिणो जकाराद्या ध्वनयो नैव संस्कृते ॥५७॥

प्राधान्यतो ध्वनिपरिवर्तनेनैव भारोपीया भाषा पृथक् पृथक् रूपण्याकलय्य नानाविधा जाता अतस्तन्निरूपणं विधीयते—

अनेकैर्व्याहृता भाषा भारोपीयकुलोद्भवाः ।
ध्वनीनां परिवृत्त्यैव जाता नानाविधाः पुरा ॥५८॥

**भाषाणामैक्यज्ञानाय विज्ञेया ध्वनयोऽखिलाः ।**
**प्रोच्यतेऽतो विभाषाणां ध्वनीनां परिवर्तनम् ।।५९।।**

अस्ति नाम ध्वनिपरिवर्तनस्य कोऽपि नियमो यमनुसृत्य ध्वनयः परिवर्तन्तेऽथवा यदृच्छयैव ध्वनिविकृतिर्जायतेऽतो ध्वनिपरिवर्तन-नियमादिका निर्दिश्यन्ते—

**एकवर्गीय (वंशीय) भाषाणां ध्वनीनां परिवर्तनम् ।**
**भवत्येकेन रूपेण सो ध्वनेर्नियमो मतः ।।६०।।**

संस्कृते प्रोक्ताः सन्धिनियमा अपि ध्वनिनियमा एव—

**सन्धीनां नियमा यद्वदत्र प्रोक्ताः सनातनाः ।**
**तद्वद्ध्वनिविकाराणां नियमा निश्चिता नवैः ।।६१।।**

ध्वनयो विकृता भवन्ति विकसिता वा इत्याकांक्षायामाह—

**विकासश्च विकारश्च पर्यायौ हि यथार्थतः ।**
**ध्वनेर्विकार एवातस्तद्विकासोऽपि कथ्यते ।।६२।।**

**न विकारो विकासो वा केवलं परिवर्तनम् ।**
**ध्वनीनां परिवृत्त्यैव भाषा जाता नवा नवाः ।।६३।।**

अस्ति किमपि कारणं ध्वनिपरिवृत्तेरथवाऽकारणमेव ध्वनयः परि-वर्तन्त इत्याकांक्षायामाह—

**यत्नलाघवमाद्यं हि ध्वनिविकृतिकारणम् ।**
**प्रमादाशक्त्यविद्यादि कारणानीतराण्यपि ।।६४।।**

**प्रत्यक्षा च परोक्षा वातिपरोक्षापि कुत्रचित् ।**
**शब्दनिर्वचने तिस्रो वृत्तयोऽमी पुरा मताः ।।६६।।**

**ध्वनयः परिवर्तन्ते शब्दसौश्रवसे क्वचित् ।**
**ग्रीक्यां सुध्वनिः सोऽयं युफोनिरिति कथ्यते ।।६५।।**

पूर्वैराचार्यैरुक्ता प्रत्यक्षादिवृत्तयोऽपि ध्वनिपरिवर्तनमेव निर्दि-शन्ति—

ध्वनिवैशिष्ट्यवशादेवादावेव भारोपीया भाषा विभाषयोर्द्वयो-र्विभक्ता आसन्—

कण्ठश्च कण्ठतालव्यस्तथा कण्ठोष्ट्य एव च ।
आद्यभारूपभाषायां कवर्गस्त्रिविधोऽभवत् ॥६७॥

अभवंस्ते त्रयो भेदाः कः क्यः क्व इति संज्ञकाः ।
विभाषाणां हि वर्गौ द्वौ तदाश्रित्यैव कल्पितौ ॥६८॥

भारोपीयाः समाः वाचो विभक्ता वर्गयोर्द्वयोः ।
'केन्तुं'वर्गगताः काश्चिच्'छतं' वर्गगताः पराः ॥६९॥

संस्कृतग्रीकलातिन्याद्यासु प्रत्नासु वक्षु वै ।
कण्ठ्यः कवर्गः सर्वत्र विद्यतेऽपरिवर्तितः ॥७०॥

'शतं'वर्गीयभाषाणां प्रमुखं ध्वनिवैशिष्ट्यं व्यनवित—

क्यक्ववर्गौ 'शतं'वर्गे द्विधा तालव्यमागतौ ।
संघर्षित्वमथोष्माणं क्यवर्गोऽत्राप्तवान्पुरा ॥७१॥

प्रोच्यन्ते प्रत्नतालव्या ऊष्माणोऽतः क्यवर्गजाः ।
क्ववर्गस्तु चवर्गोऽभूत्तालव्यसहितो यदि ॥७२॥

नव्यतालव्य इत्युक्तश्चवर्गस्तु क्ववर्गजः ।
प्रत्नेभ्यो नव्यतालव्या भिन्नाः सन्ति न संशयः ॥७३॥

अधुना 'केन्तुं'वर्गस्य प्रमुखं ध्वनिवैशिष्ट्यमुच्यते—

केन्तुंवर्गे नवैर्रूपैः क्ववर्गः परिवर्तितः ।
ग्रीकायान्तु क्ववर्गस्य दृश्यते त्रिविधा गतिः ॥७४॥

ओकारेण तथाभ्याञ्च सकारेणानुनासिकैः ।
रलाभ्यामपि युक्तः क्ववर्गः पवर्गतां गतः ॥७५॥

तालव्यस्वरयुक्तश्चेत्तवर्गत्वं जगाम सः ।
क्वचिदिकारयुक्तोऽपि पवर्गे परिवर्तितः ॥७६॥

क्ववर्गस्य गतिर्भिन्ना ग्रीकलातिन्ययोरभूत् ।
क्यक्ववर्गावुभावेव परिवृत्तिं गताविह ॥७७॥

संस्कृतस्य सघोषमहाप्राणा घधभाः ट्यूटानीयानीयाङ्ग्लादिषु, बाल्टोस्लावीयरूस्यादिषु च सर्वत्र सघोषा (गदबा) एव विद्यन्ते। परन्तु ग्रीकेतालीयवर्गेष्वनेकत्र ते अघोषाः खथफा जाताः। अनया दृष्ट्यापि भारोपीया भाषा वर्गद्वये विभाजयितुं शक्यन्ते—

सघोषा गदबाः प्राणाधिक्येन घधभा इह।
अघोषाः खथफा ग्रीकलातिन्यादिषु प्रायशः ॥७८॥

सघोषा 'भ्रातृ'वर्गीया अघोषा 'फ्रेतृ'वर्गगाः।
भाषाः शक्या विभक्तुं हि वर्गयोरनयोरपि ॥७९॥

ध्वनिपरिवर्तने सन्धीनां स्थानमतीव महत्त्वमावहत्यतः सन्धिलक्षणं तद्भेदाश्च निरूप्यन्ते—

परिवृत्तिर्ध्वनेः सन्धिर्बाहुल्येनान्ययोगतः।
अज्झल्विसर्गभेदैस्तु सन्धयोऽत्र त्रिधा मताः ॥८०॥

उच्चारणे तु श्रूयन्ते वाक्षु सर्वासु सन्धयः।
संस्कृत एव विद्यन्ते लेखेऽप्युच्चारणेऽपि च ॥८१॥

आद्यभारोपीयभाषाया व्यञ्जनध्वनयो बाहुल्येन संस्कृत एव रक्षिताः। परमत्राप्यनेकत्र घधभानां हकार एवावशिष्टः परमन्यत्र ते गदबा एव विद्यन्ते। एवमेव संस्कृतेऽन्यदपि ध्वनिपरिवर्तनं जातम्। तदेवाभिधत्ते—

ध्वनयो घधभा आद्याः संस्कृत एव रक्षिताः।
शिष्यतेऽत्र क्वचित्तेषां महाप्राणांश एव 'हः' ॥८२॥

गदबाः खथफा वा स्युः सर्वास्वन्यासु वाक्षु ते।
तालव्या ध्वनयः सर्वाः संस्कृतेऽपि नवोद्गताः ॥८३॥

भारोपीयः 'स्क' एवात्र छकारे परिवर्तितः।
तवर्गजष्टवर्गोऽभूद्द्राविडीवाक्प्रभावतः ॥८४॥

अवेस्ताप्रत्नपारस्योर्नित्यं वेदेषु प्रायशः।
लकारस्याभवद्रेफो यूरोपे तु ल एव सः ॥८५॥

पारस्यां संस्कृते हिन्द्यां लकारः पुनरागतः।
वेदेषु प्रायशो दृष्टो व्यत्ययोरलयोरपि ॥८६॥

संघर्षी जो विलुप्तोऽत्र ध्वनिमन्यमवाप वा ।
दीर्घीकुर्वन्स्वरं पूर्वं 'ज्दो'ऽत्र प्राप डकारताम् ॥८७॥

ए e ओ o मूलस्वरावाद्यौ अकारत्वं गताविह ।
अन्ये च संस्कृतेऽप्येवं ध्वनयः परिवर्तिताः ८८॥

संस्कृते जातं मुख्यं ध्वनिपरिवर्तनमुक्त्वाधुना ग्रीकलातिन्यास्वन्यासु भाषासु जातं ध्वनिपरिवर्तनं निर्दिश्यते—

ध्वकारस्य गकारोऽथ थकारो ग्रीकभाषिते ।
स्लावेरान्योःजकारस्याद्धकारोऽन्यत्र जायते ॥८९॥

बाल्टोस्लावीयभाषासु 'हः' ध्वनिर्नैव विद्यते ।
घकाराद्यांश भूतो गो हस्य स्थानेऽत्र भाष्यते ॥९०॥
सकारस्य हकारोऽपि भेरान्यादिषु जायते ।
आङ्ग्ल्यां हका'र एवाभूत्खकारोऽपि ककारजः ॥९१॥
शब्दादावागमोलोपो हकारस्य स्वरैः सहः ।
ग्रीकपञ्जाब्यहिन्दीष्वागमो लोपस्तु लातिने ॥९२॥

तकारस्य सकारोऽपि ग्रीक्यादिषु विलोक्यते ।
ग्रीक्यां जातं प्रभूतं हि ध्वनीनां परिवर्तनम् ॥९३॥
पदस्यादौ सकारस्य हकारो ग्रीकभाषिते ।
ग्रीक्यामेव पदादौ तु यकारोऽपि विलुप्यते ॥९४॥
स्वरमध्यौ सहौ लुप्तौ ग्रीकपारस्यहिन्दिषु ।
पदान्तोपधयोः फ्रेञ्चपञ्जाब्योरपरास्वपि ॥९५॥
व्यञ्जनानि विलुप्यन्ते नमयोरनुनासिकः ।
शब्दादौ युक्तवर्णात्प्राङ्नव्यास्वेव स्वरागमः ॥९६॥

स्वरभक्तिरपनिहितिश्च परिभाष्येते—

संयुक्तवर्णयोर्मध्ये स्वरभक्तिः स्वरागमः ।
शब्देऽपनिहितिः प्रोक्ता सजातीयस्वरागमः ॥९७॥
बाहुल्यमस्या वेस्तायामन्यत्राप्यवलोक्यते ।
लोपागमादिभिः शब्दा रूपं गृह्णन्ति नूतनम् ॥९८॥

लोपागमादिभिर्ध्वनयः परिवर्तन्त[1] इति तु सत्यम्, परं यत्नलाघवाद्यतिरिक्तमस्त्यन्यदपि ध्वनिविकृतिकारणमित्युच्यते—

**यत्नलाघवसौकर्यं कारणे ध्वनिविकृतेः ।**
**अज्ञानेनाथवाशक्त्या ध्वनयः परिवर्तिताः ॥९९॥**

**वाचि रम्यत्वमाधातुं ध्वनयो विकृताः क्वचित् ।**
**शब्दस्य मृदुता सैषा सुध्वनिर्रम्यतोच्यते[2] ॥१००॥**

आङ्ग्लजार्मण्यादिषु संस्कृतस्य स्पर्शध्वनयः परिवर्तिताः । संस्कृतग्रीकलातिन्यादिप्रत्नभाषाणां स्पर्शवर्णानामेषा परिवृत्तिः कञ्चिन्नियममनुसृत्यैव जाता न तु यदृच्छयैव । तद्यथा—

**शब्देषु संस्कृतादीनां स्पर्शा येऽद्यापि रक्षिताः ।**
**सकृदाङ्ग्ल्याञ्च जार्मण्यां द्विवारं परिवर्तिताः ॥१०१॥**

**आदावेवाभवत्तत्र प्रथमं परिवर्तनम् ।**
**सप्तमे शतके जातं द्वितीयं परिवर्तनम् ॥१०२॥**

तत्र पूर्वं तावन्निम्नजार्मण्यास्वाङ्ग्लीयादिषु स्पर्शा निम्नरूपेण परिवर्तिताः—

**येऽत्र घोषा महाप्राणास्तत्राल्पप्राणतां गताः ।**
**अल्पप्राणाः सघोषाश्चाघोषेषु परिवर्तिताः ॥१०३॥**

**अल्पप्राणाः अघोषा ये महाप्राणास्तु तेऽभवन् ।**
**अल्पप्राणाः सघोषास्ते जाता आघातपूर्वकाः ॥१०४॥**

एष एव नियमः स्पर्शाक्षरैरेवं वक्तुं शक्यते—

**चतुर्थोऽभूत्तृतीयो वै तृतीयः प्रथमोऽभवत् ।**
**प्रथमश्च तृतीयोऽभूत्पूर्वाघातस्तृतीयकः ॥१०५॥**

**ककारस्य हकारोऽभूत्खकारस्यावशेषभाक् ।**
**आघातपरकः सस्तु रेफ आङ्ग्ल्यामजायत ॥१०६॥**

---

१. वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥

२. सं० सु-ध्वनि>ग्रीक Eu-phony (ग्रीक्यामनेकत्र सकारो लुप्यते, घधभाश्च फकरे परिवर्तन्ते)।

क्वचिद्ध्वनिनियमोऽयमव्याप्त्यादिदोषग्रस्तः प्रतीयते । यथा हि-नियममेनमनुसृत्य संस्कृतस्य तृतीयाक्षरा आङ्ग्ल्यां प्रथमाक्षरा जायन्ते, परं संस्कृतस्य 'दुहितृ' इत्यादि शब्दानां दकार आङ्ल्या डॉटर doughter सदृशेषु शब्देषु द कार एवास्ति । स प्रथमाक्षरे तकारे कथं न परिवर्तित ? इत्याशङ्कायामाह—

**संस्कृते चाङ्ग्लभाषायां तृतीया उभयत्र ये ।**
**चतुर्थेभ्यस्तृतीयास्ते जाताः प्रागेव संस्कृते ॥१०७॥**

स्पर्शवर्णानामिदं मिथः परिवर्तनमाङ्ग्ल्यादिषु यूरोपीयास्वेव वाक्षु जायते इति न शङ्क्यम् । यतोहि हिन्दीपञ्जाबीराजस्थान्याद्यासु भारतीयासु पारस्यादिष्वपि चानेकत्र तथैव ध्वनिपरिवृत्तिरवलोक्यते । तद्यथा—

**प्रथमानां तृतीया हि तेषां वा विपरीतता ।**
**भेरान्यास्वपि नव्यासु यथाङ्ग्ल्यां कासुचित्क्वचित् ॥१०८॥**

**प्रथमस्य द्वितीयोऽपि [1]जायतेऽत्रापि कुत्रचित् ।**
**समाना विकृतिर्दृष्टाङ्ग्लीयभेरान्ययोर्ध्वनेः ॥१०९॥**

सामान्यतया बाहुलकनियमानुसारेणैव ध्वनिपरिवर्तनं जायते । परं ग्रीकांग्लजर्मनसंस्कृतप्राकृतादिषु ध्वनिपरिवर्तनं निरपवादमित्याह—

**बाहुलकेनैवे प्रायोऽत्र ध्वनीनां परिवर्तनम् ।**
**ध्वनीनां विकृतिर्नित्या ग्रीकाङ्ग्लप्राकृतादिषु ॥११०॥**

**शब्दादौ सयुताः स्पर्शा ये सन्ति संस्कृतादिषु ।**
**आङ्ग्लाद्यास्वपि भाषासु ते सन्त्यपरिवर्तिताः ॥१११॥**

स्पर्शवर्णातिरिक्तमप्याङ्ग्लभाषायां यत्किञ्चिद्ध्वनिपरिवर्तनम-वलोक्यते । तद्यथा—

**उपधायामनकत्र नमौ च परिवर्तितौ ।**
**शब्दस्यान्ते नकारान्त आङ्ग्ल्यां स्वार्थे 'ड' इष्यते ॥११२॥**

---

१. क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः
क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य
चतुर्विधं बाहुलकं वदन्ति ॥

शब्दान्ते डागमो राजस्थान्यादिष्वपि जायते ।
फ्रांसीस्यामथ पञ्जाब्यां नव्यास्वन्यासु वाक्षु च ॥११३॥

पदान्ते स्वरयुक्तो नो जायते ह्यनुनासिकः ।
क्तिन्प्रत्यस्य 'ते' रन्ते प्रत्यय 'ओन' प्रयुज्यते ॥११४॥

स एवायं तिओन (tion) भूत्वाग्ल्यां 'शनु' च्चार्यते जनैः ।
सम्भाष्येते 'तदौ' वत्स्यौं 'टडा' वाङ्ल्याञ्च जर्मने ॥११५॥

अकारो जर्मने वर्ग एकारो गद्यतेऽखिले ।
आङ्ग्ल्यां ज्ञेयमिदं मुख्यं ध्वनीनां परिवर्तनं ॥११६॥

निम्नजार्मण्यशब्देषु प्रोक्ता या ध्वनिविकृतिः ।
मूलशब्देषु तस्या हि व्याप्तिः प्राधान्यतः स्मृता ॥११७॥

समासे तद्धिते चैव ध्वनयोऽपरिवर्तिताः ।
समस्तास्ताद्धिताः शब्दा आङ्ग्ल्याञ्च संस्कृते समाः ॥११८॥

ध्वनिभिः सहाङ्ग्लभाषायां नामान्याख्यातानि च (धातवस्तेषां रूपाण्यपीति यावत्) संस्कृतस्यैव विद्यन्ते । यथाहि—

सरलानि च धातूनां रूपाणि कठिनानि च ।
द्विधा यान्यङ्ग्लभाषायां मूलं तेषां हि संस्कृते ॥११९॥

लटोऽस्ति प्रथमं रूपं लिटो रूपं द्वितीयकम् ।
तृतीयं शतृरूपञ्च रूपाणि कठिनानि वै । १२०॥

लटो हि प्रथमं क्तस्य रूपे द्वे सरले उभे ॥
संस्कृते धातुरूपाणि तान्येवाङ्ग्ल्यां गतानि वै ॥१२१॥

सन्ति विशेषणावस्थासूचकाः प्रत्ययास्तु ये ।
आङ्ग्लाद्यासु य इष्टाद्याः संस्कृतस्यैव तेऽखिलाः ॥१२२॥
तत्त्वं प्रभूतमाङ्ग्ल्यां हि संस्कृतस्यास्त्यसंशयम् ।

एवमाङ्ग्लभाषाध्वनिजातमन्यच्च संस्कृतसम्बद्धं तत्त्वमुक्त्वाधुना जर्मनभाषाया संस्कृतसाजात्यं सूचयन्पूर्वं तावत्तस्यां जातं ध्वनिपरिवर्तनं व्यनक्ति । अत्रेदमवधेयं यदुच्चजार्मण्यके वर्गे द्वितीयमिदं ध्वनिपरिवर्तनं सप्तमशताब्दे जातम् । आङ्ग्लाद्यां निम्न जार्मण्य भाषास्तु ततः प्रागेव विभक्ता जाता अतएवेदं द्वितीयं ध्वनिपरिवर्तनं

जर्मनाद्यास्वेव जातम्। संस्कृतादीनां ये ध्वनयःपूर्वमाङ्ग्लाद्यासु परिवर्तिता बभूवुस्त एवोच्चजार्मण्यासु जार्मनादिभाषासु पुनः परिवर्तिताः। आङ्ग्लभाषाया ध्वनयो जर्मने निम्नरूपेण परिवर्तिताः—

**उच्चजार्मण्य एवाभूद्द्वितीयं परिवर्तनम्।**
**स्पर्शा अप्याङ्ग्लभाषायाः परिवृत्तिं गताः पुनः ॥१२३॥**
**तृतीया आङ्ग्लभाषायाः प्रथमा जर्मनेऽभवन्।**
**प्रथमाश्च द्वितीया वै द्वितीयाश्च तृतीयकाः ॥१२४॥**
**टकारस्य सकारोऽभूत् ट्सकारोऽपि क्वचिद्भवेत्।**
**परिवृत्तेः क्रमं प्राह शार्मण्यो विबुधो ग्रिमः ॥१२५॥**
**व्यधत्ताञ्च परिष्कारं ग्रासमान्वर्नरौ बुधौ।**

आङ्ग्लापेक्षया जर्मनभाषा संस्कृतस्य कथं नेदीयसीत्याकांक्षायामुच्यते—

**जातेऽपि स्पर्शवर्णानां द्विवारं परिवर्तने ॥१२६॥**
**संस्कृतस्याधुनाप्येषा नेदीयस्यस्ति जर्मना।**
**कवर्गस्तयुतो लुप्त आङ्ग्ल्यां नोच्चार्यतेऽथवा ॥१२७॥**
**गघावन्यपरिस्थित्यामपि लुप्तौ स्त आङ्ग्लके।**
**परं जर्मनभाषायां ध्वनयस्ते सुरक्षिताः ॥१२८॥**
**प्रत्यया सुप्तिङाद्याश्च लुप्ता आङ्ग्ल्यां न जार्मने।**
**तत्र तिङ्प्रत्ययाः सन्ति ति अन्ति सदृशा अपि ॥१२९॥**
**केचित्सुप्प्रत्यया सन्ति जार्मण्यां संस्कृते यथा।**
**संस्कृते जार्मने चैव सामीप्यं दृश्यते स्फुटम् ॥१३०॥**

विभिन्नासु भाषासु जातमनकेविधं ध्वनिपरिवर्तनं निरूप्याधुना ध्वनिपरिवर्तनविषये कांश्चित्सामान्यनियमान्प्रतिपादयति। प्रथमन्तावत् कस्मिंश्चिदपि शब्दे विद्यमानौ भिन्नाकारावपि ध्वनी कदाचित्समानौ जायेते। एतदेव 'सदृशीकरणं' परिभाष्यते—

**सहावस्थितयोः शब्दे वर्णयोर्भिन्नरूपयोः।**
**जायते यत्समानत्वं 'सदृशीकरणं' हि तत् ॥१३१॥**

अतो विपरीतं क्वचित्समानावपि द्वौ ध्वनी भिन्नरूपे जायेते। तदेव विषमीकरणं परिभाष्यते—

सहावस्थितयोः शब्दे वर्णयोरेकरूपयोः ।
'विषमीकरणं' तद्या जायते भिन्नरूपता ॥१३२॥

अनुकरणवशादपि ध्वनयः परिवर्तन्ते, पदानि च नवानि रूपाण्याकलयन्ति । तदेवा'नुकरणं' विशिनष्टि—

पदान्तरस्य सादृश्यात्त्यक्त्वा तु सरणिं स्वकाम् ।
पदत्वमाप्नुवन्नङ्गो रूपं गृह्णाति तादृशम् ॥१३३॥

अनुकरणं तदेवोक्तं नवनिर्मितिसाधनम् ।
करिणा हरिणा सार्धं जातो द्वन्द्वोऽनुकृत्य यः ॥१३४॥

वयं यथा तथा यूयं जाता विस्मयपूरिताः ।
अत्यजन्प्रकृतिं केचिदनुकृत्य पदान्तरम् ॥१३५॥

एवं ध्वनय एव भाषाणामाद्या मूलभूताश्चावयवाः । प्राधान्यतो ध्वनिपरिवर्तनेनैव च भाषा नानारूपेषु विभक्ता इत्यतो ध्वनिविषयं निरूप्याधुना शब्दादयः केचिदन्ये विषया विवेच्यन्ते—

सार्थका ध्वनयः शब्दास्ते च सन्ति चतुर्विधाः ।
उपसर्गनिपातौ च नामाख्याते तथैव च ॥१३६॥

विशेषणादिकाश्चाष्टौ भेदाः पाश्चात्यसम्मताः ।
'सुप्तिङन्तं पदं' प्राह पाणिनिर्मुनिसत्तमः ॥१३७॥

त्रीणि वचनलिङ्गानि सन्त्यष्टौ च विभक्तयः ।
लातिन्यादिषु पञ्चैव सर्वाः सन्ति विभक्तयः ॥१३८॥

द्विवचनं विलुप्तञ्च लातिन्यादिषु प्रायशः ।

सर्वाण्याख्यातजानि नामानीत्युच्यते । भारोपीयासु प्रचलिताः सर्वेऽपि प्रमुखा धातवश्च संस्कृत उपलभ्यन्तेऽतो धातुनिरूपणमारभ्यते—

धातवः पाणिनिप्रोक्तास्तज्जाः शब्दाश्च भूरिशः ।
व्याप्ता भारूपभाषासु देहेऽस्मिन्धातवो यथा ॥१३९॥

धातोर्लक्षणादिकं प्रोच्यते—

क्रियानिष्पादको धातुः स एवाख्यातमुच्यते ।
आख्यातजानि नामानि सर्वाणीत्यपि मन्यते ॥१४०॥

धातुभेदावुभौ प्रोक्तावकर्मकसकर्मकौ ।
फलव्यापारयोरेकसंश्रयेऽकर्मको मतः ॥१४१॥

भिन्नाश्रये द्वयोर्धातुः प्रोच्यतेऽत्र सकर्मकः।
मुख्यगौणविभेदाभ्यां कर्माण्यत्र द्विधा मतम् ॥१४२॥

सविकरणाविकरणभेदाभ्यां धातुरूपाण्यप्यत्र द्विधा—

विकरणविहीनानि विकरणयुतानि च।
धातुरूपाणि ग्रीकायामवेस्तायाञ्च कुत्रचित् ॥१४३॥

क्वचिद्वेदेषु दृश्यन्ते लौकिके संस्कृते नहि।
उत्तमस्यैकवाचित्वे प्रत्यय ओ (आ) विधीयते ॥१४४॥

विकरणयुते रूपेऽस्मिन्मि नैव प्रयुज्यते।
परमाकारयुक्तो 'मिप्' संस्कृतेऽस्ति नवागतः ॥१४५॥

आत्मनेपदिनः केचित्परस्मैपदिनोऽपरे।
द्विधा तिङ्प्रत्ययाः सन्ति क्रियार्थस्य विभेदतः ॥१४६॥

कर्त्रर्थिका क्रिया यत्र प्रत्यया आत्मनेपदे।
परस्मैपदिनस्ते चेत्परार्थं द्योतते क्रिया ॥१४७॥

मुख्यगौणविभेदाभ्यां द्विधा तिङ्प्रत्ययाः पुनः।
द्विकर्मकास्तथैवैककर्मका अपि धातवः ॥१४८॥

भारोपीयभाषासु प्रचलिता (संस्कृत) धातवः कतिसंख्याकाः—

पञ्चशतमिता आसन्न्यूना वा धातवः पुरा।
वर्धमाना क्रमाज्जाताः पञ्चदशशताधिकाः ॥१४९॥

एकत्र सोपसृष्टा येऽनुपसृष्टाः परत्र ते।
भारोपीयासु भाषासु विद्यन्ते धातवः समाः ॥१५०॥

उपसर्गैर्युता जाता धातवो बहुसंख्यकाः।
भारूपाः संस्कृतस्यैते संख्याता मूलधातवः ॥१५१॥

भारोपीया (संस्कृत) धातवः किं स्वरूपाः ?

प्रमिताः सूक्ष्मरूपाश्च धातवोऽत्राभवन्पुरा।
प्रभूतास्त्र्यक्षराश्चैव प्रभूतार्थास्ततोऽभवन् ॥१५२॥

केचिदेकस्वराः सन्ति प्रभूताः द्विस्वरास्तथा।
त्रिस्वरा अपि विद्यन्ते भारोपीया हि धातवः ॥१५३॥

स्वरश्च व्यञ्जनश्चैव व्यञ्जनश्च स्वरस्तथा।
स्वरो व्यञ्जनयोर्मध्ये व्यञ्जनौ स्वरव्यञ्जनौ ॥१५४॥

स्वरूपेण तु विद्यन्ते पञ्चधा इह धातवः।
सर्वत्र धातवस्ते हि ध्वनिषु विकृतेष्वपि ॥१५५॥

स्वराणामवस्थात्रयं प्रदर्शयति—

दुर्बला च गुणावस्था वृद्ध्यवस्था तथैव च।
अकारस्य यणश्चैव स्वरावस्थात्रयी मता ॥१५६॥

गुणस्यैकत्र दौर्बल्यं वृद्धिश्चान्यत्र जायते।
क्षयोऽकारस्य दौर्बल्यं यणश्च सम्प्रसारणम् ॥१५७॥

गुणावस्थैव धातुषु मूलावस्था स्वरस्य वै।
गुणं विधाय धातूनां मता पाणिनिनापि सा ॥१५८॥

तत्समास्तद्भवाश्चैव देशजाश्च विदेशजाः।
शब्दाश्चतुर्विधा वाक्षु नव्यासु तु विशेषतः ॥१५९॥

संयुक्ता च वियुक्ता च भाषावस्थे उभे मते।
संयोगावस्थिताः प्रत्ना वियुक्ताश्च नवाः स्मृताः ॥१६०॥

युक्ता विभक्तयः प्रत्नवाक्षु नव्यासु ताः पृथक्।
नवीनास्वपि संयोगावस्थास्ति कासुचित्क्वचित् ॥१६१॥

ध्वनिभिः शब्दाः शब्दैश्च वाक्यं वाक्येन चार्थावगतिर्जायतेऽतो ध्वनीँश्छब्दाँश्च निरूप्य वाक्यार्थादिका निरूप्यन्ते—

कृत्तद्धितसमासैश्च युक्तः क्रियाविभक्तिभिः।
वाक्यं स्याद्योग्यताकांक्षासत्तियुक्तः पदोच्चयः ॥१६२॥

कृत्तद्धितप्रत्यययोः को भेदः—

कृत्प्रत्ययास्तु कथ्यन्ते धातुभिः शब्दसाधकाः।
शब्दैश्च शब्दजनकास्ताद्धिताः प्रत्यया मताः ॥१६३॥

कृत्प्रत्यया हि कथ्यन्ते सर्वे प्राथमिका अपि।
ताद्धिताः प्रत्ययास्तद्वन्मता द्वैतेयिका इह ॥१६४॥

को नाम समासः कतिविधाश्च ते—

षोढा समासाः सन्त्यत्र समासः शब्दमेलनम्।
ग्रीक्यादौ वेदवत्सन्ति समासाः स्वल्पशब्दकाः ॥१६५॥

कतिविधा गतयोऽर्थस्य—

मुख्योऽर्थोऽर्थान्तरञ्चैव सङ्कोचोऽर्थस्य विस्तरः ।
समुत्कर्षापकर्षाद्या अर्थस्य गतयो[१] मताः ॥१६६॥
संस्कृतग्रीकलातीनीरूसीफ्रेञ्चाग्लजर्मनाः ।
फारसीवंगहिन्द्याद्या सजातीयाः समा गिरः ॥१६७॥
विषयः संस्कृतस्यायं संस्कृतेनैव[२] लभ्यते ।
इति कृत्वा यथाशक्ति प्रयत्नोऽत्र विधीयते ॥१६८॥

इति ध्वन्यादिविषयकं द्वितीयं प्रकरणम् ।

१. वाच्यलक्ष्यव्यङ्ग्यादयोऽर्था अप्यत्रैवान्तर्भवन्ति ।
२. संस्कृते नैव इति पदच्छेदोऽपि कर्तुं शक्यते ।

# संस्कृत यूरोपीया भाषाश्च

## ध्वनि-निरूपणम्

आङ्ग्लजार्मण्यग्रीकाद्याः भाषा यूरोपव्याहृताः ।
संस्कृतेन निरुच्यन्ते ता योजयति संस्कृता ॥

# संस्कृतं यूरोपीया भाषाश्च

## अथ प्रथमोऽध्यायः

### ध्वनिनिरूपणम्

आत्मा बुद्ध्या समेत्यर्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति सः प्रेरयति मारुतम् ।।
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ।
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।।
वर्णाञ्जनयते तेषां विभागः पञ्चधा[1] स्मृतः ।
स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः[2] ।।

इत्यादि पद्यजातैर्ध्वनेरुत्पत्तेस्तस्य च नानारूपेष्वभिव्यक्तेर्वैज्ञानिकं रहस्यमाविष्कृतं पुरैव भगवता पाणिनिना ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ।।

इत्यादिना ध्वनिविकासस्य क्षयवृद्धिपरिवृत्त्याद्यात्मिका पञ्चविधा गतिरप्यभिहिता पूर्वाचार्यैरेव ।

एवं यास्कस्य मुनित्रयस्य च पन्थानमेवानुसरद्भिरपि पाश्चात्यैर्विशेषतो जार्मण्यैर्भाषावैज्ञानिकैर्ग्रीकलातिन्यादिसंस्कृतसजातीयभाषाणां तुलनात्मकाध्ययनोत्थनवनीतनिभा नैके नवनवा ध्वनिनियमनिकषाः व्याकरणराद्धान्ताश्च निर्धारिताः ।

तदाश्रयेणावेस्तिकनवपुराणपारसीरूसीबुलगारीयाल्बेनीयानार्मेनीयलिथ्वानीयग्रीकलातिनेतालवीस्पेनीयपुर्तगालीयफ्रान्सीस्यायरिशीयांग्लजार्मण्यस्वीडीयडेनिशट्टित्तीय प्रभृतीनां यूरोपेरानमध्यैशियाभाषाणां संस्कृतसाजात्यं हस्तामलकवत्प्रतिभाति ।

---

१. स्थानप्रयत्नादीनां वैज्ञानिकी व्याख्या १७-१९ पृष्ठेष्ववलोकनीया ।
२. पाणिनीयशिक्षा, ६-७, ९-१० ।

अनेन ध्वनिविज्ञानेनैवेतदपि ज्ञातुं शक्यते यद्विकासमनुसृत्यैक एव ध्वनिः कथं नानाविधानि रूपाण्याकलयतीति । यथा हि—

आं० warm, ग्रीक thermos, लातिनी forum जां० german, फा० गर्म् —हि० घाम, घमोरी ।

इत्येते आपाततः परस्परं भिन्नाः प्रतीयमानाश्शब्दास्संस्कृतस्य घर्मस् < *ghormos, इत्येकेनैव शब्देन निष्पन्नाः ।[1]

एवमेव सं० गौः आं० Cow, ग्रीक bous, फा. गाव्[2] अथवा सं० अश्वः < *ek$_v$v, ग्रीक hippos, लातिनी aquo फ़ा० अस्प्, अस्ब् सदृशेषु शब्देषु ध्वनयः कथं परिवर्तिताः कथञ्च संस्कृतीय √ घेट् (पाने) इत्यस्मात् लातिन्यां फेमिना (femina), फेमिनिन (feminine), आँ० वोमेन (woman) सदृशा धारु—(धात्री) सोदराश्शब्दा निष्पद्यन्ते, सं० सहस्र, पारस्यां हजार ग्रीक्यां च खिलो xilio भूत्वा आंग्ल्यां किलो kilo इति जायते, कथञ्च संस्कृतस्य नृ (नर्) एव ग्रीक्यां एन्थ्रोस (anthros) इति रूपमापद्यत इत्येतत्सर्वं भाषाविज्ञानाङ्गभूतध्वनि-विज्ञानाश्रयेण सुस्पष्टमवगन्तुं शक्यते ।

ग्रीकलातिन्याद्याः सर्वा अपि यूरोपीया भाषाः प्रायशः संस्कृतानुरूपा एव ध्वनयो बिभ्रति । संस्कृतसजातीयभाषाणां नामाख्यातोपसर्गनिपातेति शब्दचतुष्ठय्या[3] ध्वनिषु कियत्साम्यं कुत्र कीदृशश्च विकासो जात इति विवेचयितुं प्रथमं ध्वनिनिरूपणमेवारभ्यते ।

२. स्वरव्यञ्जनभेदाभ्यां ध्वनयस्तावद्द्विविधाः । तयोश्च—'स्वयं राजन्त इति स्वराः', 'न पुनरन्तरेण च व्यञ्जनस्योच्चारणमपि भवति' इत्यादिभिः पतञ्जलिना प्रोक्तैः प्रमाणैस्स्वराणां प्रामुख्यं सिद्ध्यति । भाषाविज्ञाने स्वराश्च मूलस्वरार्धस्वरसन्धिस्वरभेदैस्त्रिधा । पुनस्ते ह्रस्वदीर्घभेदाभ्यां द्विविधाः । तत्र—*अ a *ए e *ओ o इति भारोपीया मूलस्वरास्त्रयः ।

*(य्) इ *(व्) उ *(र्) ऋ, *(ल्) लृ *न् (अ), *म् (अ) इति षट् अर्ध-

---

१. घ घ्य ध्वकाराणां संस्कृतेरानीयग्रीकलातिनीजार्मण्यादिषु हकारगकारजकारखकारथकारफकारवकारादिषु परिणतिरग्रे प्रपञ्चयिष्यते ।

२. तथाचोक्तमाचार्येण पतञ्जलिना—'एकस्यैव गौः शब्दस्य गावी, गोणी, गोता, इत्यादयो नानाकृतयो जायन्ते । महाभाष्य—१-१

३. सर्वनामविशेषणौ योजकद्योतकौ च इति शब्दानां चतुरो भेदान् पृथग्गणयित्वा अष्टौ शब्दभेदाः कृताः पाश्चात्यैर्वैयाकरणैः ।

स्वरा अन्तःस्था वा। इकारादयो यकारादीनामेव परिस्थितिविशेष उत्पत्त्य सम्प्रसारणितानि वैकल्पिकान्याक्षरिकाणि रूपाणि सन्ति। अतएव ते अर्धस्वरा इत्युच्यन्ते। मूलस्वरैस्सहार्ध-स्वराणामन्तःस्थानां वा संयोगाज्जाताःसन्धिसंयुक्तस्वरास्संस्कृते तु अ+ई=ए, अ+उ= ओ. आ+ए=ऐ, आ+ओ=औ' इति चत्वार एव। किन्तु यूरोपीयासु वाक्षु तु ते भूयांसो वर्तन्ते। एतदतिरिक्तम् 'श्वा' इत्याख्य उदासीन स्वरोऽपि स्वीक्रियते।

३०. तदेवम् भाषाविज्ञाने—

**स्वराः**

I मूलस्वराः— क. ह्रस्वाः अ a, ए e, ओ o,
ख. दीर्घाः आ ā, ए ē ओ ō

II अर्धस्वराः— क. ह्रस्वाः य् y (इ i) व् v (उ u) र् r (ऋ ṛ) ल्(लृ ḷ)
न् n ( अ a इन् in) म् ṁ (अ a इम् im)

ख. दीर्घाः ई ī ऊ ū ॠ ṝ लॄ ḹ

यकारादिवत् नमावप्यन्तःस्थौ स्तः। एतयोराक्षरिके रूपे नम तु संस्कृते सर्वत्र अकारात्मना परिणतौ लातिन्याञ्च इन् in, इम् im, इति रूपमापन्नौ। अन्यासु भारोपीयासु भाषासु तु नानारूपेषु परिणतौ।

**सन्धिस्वराः**— अ आ a ā ए ऐ e ē ओ ओ o ō इत्येतै मूलस्वरैस्सहोच्चार्यमाणा अर्धस्वराः संयुक्त स्वरा इति व्यपदिश्यन्ते । ते च भूयांसः सन्ति, तथापि प्रमुखाः संयुक्तस्वराः एवं परिगणयितुं शक्यन्ते—

भारोपीयाः संस्कृते

* अa—i(इ)
*एe —i(इ)
*ओo—i(इ)
} = ए ē

संश्लिष्टस्वराः

यद्यपि संस्कृते भारोपीय (a e o) मूलस्वरैः सह इकारस्य मेलनेन ए इत्युच्चार्यते स्वतन्त्राक्षररूपेण च लिख्यते, तथापि यूरोपीयासु भाषासु अवेस्तायां च संयुक्तस्वराः पृथगेव लिख्यन्त उच्चार्यन्ते च। एवमेव अa एe ओ o इत्येतैर्भारो-

पीयैर्मूलस्वरैः सह उ u कारस्यावस्थित्यापि—

*अ a—uउ
*ए e—uउ } =ओ o
*ओo—uउ

इति संयुक्तस्वरत्रयी निष्पद्यते। 'संस्कृते तु एषा संयुक्तस्वरत्रयी ओकार-रूपेण परिणमति। परमन्यासु सजातीयभाषासु तु एते त्रयोऽपि सन्धिस्वरा स्तथैव पृथक् लिख्यन्त उच्चार्यन्ते च । अनेनैतत् सुस्पष्टं ज्ञातुं शक्यते यत्संस्कृतस्य संन्धिस्वरयोः एकारओकारयोः स्थाने यूरोपीयासु भाषासु ai, ei, oi, (एकारस्य स्थाने), au, eu, ou, (ओकारस्य स्थाने) लिख्यत उच्चार्यते च ।

एवमेव आ ā ए ē ओ ō इत्येतैर्दीर्घमूलस्वरैस्सह i इकारस्य u उकारस्य च संयोगेनापि संयुक्तस्वरा निष्पद्यन्ते । संस्कृते तु ते ऐ, औ रूपमाकलयन्ति । संस्कृते ऐ औ इत्येतयोः प्रथमाक्षरे यद् ह्रस्वः 'अकारः' श्रूयते तत्तु व्यञ्जनपरकमेव, स्वर-परे तु तत्र दीर्घः 'आकार' एव श्रूयते। यथा— 'रैः' (ह्रस्वाकारश्रुतिः "रायः" दीर्घ आकारः । एवमेव 'गौः' 'गावः' इत्यत्रापि औकारे अकारआकारौ श्रूयेते ।

एवं संस्कृतस्य ए ऐ ओ औ इति चतुर्णां संयुक्त (संश्लिष्ट) स्वराणां स्थाने यूरोपीयासु भाषास्ववेस्तायाञ्च सर्वत्र—

a i, e i, o i, a u, e u, o u,
ā i. ē i, ō i, ā u, ē u, ō u,

इति स्वाभाविकरूपेणैवावस्थिताः सन्ति । एवमेव मूलस्वरैः सह दीर्घार्ध-स्वरा (ई ī ऊ ū ॠ ṝ लॄ?) अपि संयुज्य संयुक्तस्वरान्निष्पादयन्ति । संस्कृतसजा-तीयभाषाणां तुलनात्मकाध्ययन एतत् सर्वं सम्यगवगन्तव्यम् ।

### अ a

४. यद्यपि संस्कृते भारीपीय ए e ओ o इत्येतावपि अकारे परिणतौ तथा-प्येतादृशा अपि नामाख्यातोपसर्गनिपाताश्च सन्ति यत्र संस्कृतवदन्यास्वपि सजातीय भाषासु अ a एव विद्यते । यथा हिः—

सं० √अर्ह्, अर्हन्, अर्घः < *arg$^{w}$hos (अर्घ्वोस्)

ग्रीक arkho फा० अर्ज्मन्द् (आदरणीय)

अश्मन् सं० aśman < *ak$_{y}$mon (वज्रः, पाषाणः), अवे, पु. फा आस्मान् आकाशम् ग्रीक akmon, लातीनी, आ० acms (शिखरम्, परिपूर्णता) फा० आस्मान् ।

सं० वै० √अज् (गतौ), अजामि < √ *agomi, अवे-अजा aza, आर्मे. acem, ग्रीक, ला० √ago पु० आयरीय agim.

सं० वै० अज्रः (विस्तीर्णप्रदेशः flat, plain) < *agros.

ग्रीक agros ला० agor, गा. akros, अं० acre, (हिं० एकड़ इसी से बना है ।)

सं० अक्षः, ग्रीक haxon ला०, अं० axis, axle.

सं० अरः (चक्रस्य, यथा 'अरैः सन्धार्यते नाभिः' the spoke of a wheel) < *alio, ग्रीक allos, आर्मे ail, ला० alius पु० उ० जा० ahra, लिथु arzis, पु० च० स्ला० (बुल्गा) or.

सं० अन्ति-के, (वै. निपातः निकटे, समीपे, सम्मुखे, पुरा), ग्रीक, ला० anti अं० anti, antique (प्रत्नम् ।)

सं० अप (उपसर्गः दूरे विपरीतं यथा अपगतिः), अवे० अप् पु० फा० अप्, ग्रीक apo, ला० अं० ab, (यथा abuse, abnormal)

सं० √अन् (प्राणने) अनीति, प्राणीति, ग्रीक halemos (वायुः) लातीनी, आं० ani-mal (प्राणी), लातिनी ani-mus.

सं अत्ता atta (माता), अत्तिका attikā (ज्येष्ठा भगिनी)

ग्रीक eatta (पिता) पु० आयरीय aita, अं aunt, बाल्तोस्ला तथा पु० बु oticy (पिता)

सं० मदामि madāmi (वै) ग्रीक mado (मज्जामि,आर्द्रीभवामि) लातिनी mado.

सं० अन्यः anyas, लातिनी alius. अं० alien, (अन्यदेशीयः)

सं० कपिः kapis, लातिनी आं० ape.

अ < *e (ए) ओ०

भारोपीयौ मूलस्वरौ 'ए' e ओ' o अपि संस्कृतेऽकारे परिणतौ । यथा—

सं० पञ्च < *pank$^{w}$e

सं० दश < *dek$_{y}$e, ग्री० deke.

सं० शत < *K$_{y}$emtum, ग्री० he-kton ला० Centum.

सं० च (निपा०) Ca < *K$^{w}$e ग्री० te ला० que.

सं० ददर्श dadarśa, ग्री dedorke.

सं० अविः avis ग्री० ois ला० ovis.

सं० पतिः patis, ग्री posis ला० poties.

सं० अपस् apas (वै० कर्म), ला० opus (कर्म)

सं० अस्थिन् asthin, ग्री० osteon, ला० os.

सं० दमः damas, ग्री० domos ला० domus पु० बुल्गा० domu, रूसी dom ('d' सर्वत्र 'द' इत्युच्चार्यते।)

आ < ā ē ō

५. यथा भारोपीया a, e, o इति त्रयोऽपि ह्रस्वा मूलस्वराः संस्कृते अकारे परिणताः। तथैव ā ē ō इति दीर्घा मूल स्वरा अपि आकारे परिणताः। अत्र संस्कृतेऽन्यासु सजातीयासु भाषासु च आकारः सममेव तिष्ठति, सहैवेतादृशाः शब्दा, अप्युपात्ता यत्र भारोपीयौ ē ō संस्कृते आ ā कारे परिणतौ।

सं बाहुः bāhus < *bhāghus अवे, पु० फा० बाज़ु, ग्रीक pakhus आं bogh. (शाखा)।

सं० मातर् māter, पु० फा० अवे. मातर्, ग्रीक (क्षे०) mater लातिनी mater, ऐंग्लो से०, आं mother.

सं भ्रातर् bhrātar, पु० फा० ब्रातर्, ग्रीक fratar, आं brother फा० बिरादर् कुर्द 'ब्रा' पंजाबी 'भ्रा'।

सं० नावम् nāvam (द्वि० ए० व०), लातीनी nāvem.

सं० नाव्य nāvya, अवे० नाव्य आं० navy, navigate.

सं० स्वादुः svādus, लातीनी svāvis ग्रीक hādus, (आं० sweet)

सं० तायुः tāyus (वै. स्तेनः), अवे. तायु. पु० बुल्गा० तायि taji (तायु चौर्येण)

सं० नामन् nāman, अवे पु० फा० नामन्, गा name, आं. name.

सं० आ < * ए ē यथा भारोपीयौ मूल स्वरौ e, o संस्कृते अकारे परिणतौ तथा दीर्घ ē ō अपि आकारे परिणतौ। तद्यथा—

सं० √धा, धास्यामि, धान; ग्रीक (भवि०) thēso, गौ० ga-deths लिथ्वा० (भवि.) de-siu, फा० √दास्तान्, दान् आं do.

सं० प्रातः prātas * √ple, ग्रीक ple-res (पूर्ण) लातीनी ple-nus, (पूर्ण), आं० complete.

सं० मा (निषेधार्थको निपातः), ग्रीक mē, फा० म, हि० मत ।

सं० लोपास् (वै) lopās, ग्रीक lapīz, alues (लोमटः), हि० लोमड़ी ।

सं० मास् (वै.) mās (चन्द्रमा), मासः (कालपरिमाणविशेषः), ग्रीक mēn, (ष० ए० व० mēn-os) (मासः), (प्र० ए० व०) meis, mēnē लातिनी mēns-i-s, पु० आयरीय mi सम्ब० mis (मासः); गा० mena, लिथ्वा. mena, पु० बुल्गा mesenci (मेसेचि-चन्द्रमा), अवे, फा० मह्, माह (चन्द्रः मासश्च) आं moon, हि० महीना । माङ्-माने धातोर्निष्पन्नास्सर्वेऽप्येते शब्दाश्चन्द्रस्य मासस्य च वाचकाः सन्ति ।

सं० राजन् rājan, ला rēx, reg-is पु० आयरीय ri, आं regal, royal, (वि०)

सं० राः० (कर्म ब० व०) द्रविणं, राज्यकोषः, ला० rē-s.

सं० तातः (प्रियः भ्राता, पुत्रो पिता च), ग्रीक tethe tethic, (मातामही पितामही हिं० 'दादी' (आं० aunt इति यावत्) लिथ्वा dēde (पितृव्यः), प्र बुल्गा dēdwo (पितामह) हिं दादा, दादी, ताया, तायी, ताऊ। सम्प्रति बहुप्रयुक्तः संस्कृतज्ञैस्तिरस्कृतश्च आं० dady शब्दोऽपि हिं 'दादा'वत् सं० वै० 'ततः' (पिता) एवास्ति ।

सं० सामि sāmi, अं० semi (अर्धार्थको निपातः ।)

सं० √वा, वाति vati, ग्रीक ha(f) ē si (वाति) पु० उ० ज० wāan (√वा), अं० wind, लिथ० ve-jes (वायुः)

सं० वातः vātas फा० बाद ।

सं० रामः rāmas, अं० ram.

---

१. चन्द्रश्चासौ मास् इति व्युत्पत्त्या चन्द्रमा प्रकाशकत्वाह्लादकत्व मापकत्वेति गुणत्रयं व्यनक्ति । ध्वनिविज्ञानेनाग्रजा प्रमाणितापि candle 'चन्द्र' स्य नार्हति षोडशीमपि कलाम् ।

संस्कृतवद् फा. माह् शब्दोऽपि चन्द्रः मासश्चेत्यर्थद्वयं बिभर्ति । फारस्यां चन्द्रार्थको 'मह्' इत्यपि दृश्यते ।

आ— स्त्री प्रत्ययः

यथा संस्कृते 'आ' स्त्रीप्रत्ययो वर्तते तथैवान्यासु सजातीयभाषास्वप्येषः स्त्रीवाचक 'आ' प्रत्ययो वर्तते। यथा—

सं० ग्नाः Gnās (वै० स्त्रियः, देवपत्न्यः), ग्रीक mna<bna<*Gna, पु० आय mna, kona, आर्मे kanai-k अं० queen, फ़ा. जन० ज़नां, हि० उर्दू जनानाप्येष एव।

सं० ग्मा, क्ष्मा, ज्मा kṣmā, jmā, (वै० भूमिः), ग्रीक khamai क्ष्मायाम्। ला० humu-s, homo, पु० बुल्गा० zemlia (भूमि गाँ० Jmo (ज्मायाः), लातीनी अं० human (नरः) अप्येतस्मादेव।

सं० विधवा vidhavā, गाँ० viduvo, पु० उ० ज० vituva, पु० सैक्स vidowa ए० सै० videwe अं० vidow पु० आयर fido, पु० बुल्गा vidowa फा० बेवा।

सं० छाया chāyā, लातीनी skia, अं० skiāgrām (एक्सरे चित्रम्), फा० साया।

सं० अश्वा aśvā, लातीनी aquā, लिथ aszva.

सं० ज्या jya<*gy-ā ग्या, अवे. ज्या, फ़ा० जिह्, लिथ gya ग्या = सूत्रम्, ग्रीक bio-s (धनुः।)

सं० मनीषा manīṣa, लातीनी minarvā (वाग्देवी, सरस्वती)

**प्रथमाद्वितीययोर्द्विवचनप्रत्ययः 'आ'**

**एष 'आ' वेदेष्वेवोपलभ्यते लौकिकसंस्कृते त्वेष 'औ' इति जातः। वेदे यथा—**

**"द्वा सुपर्णा सयुजा सखायः' इत्यादि॥**

६. सं० आ ā<* ओ o

भारोपीय 'ओ'कारोऽपि संस्कृते 'आकारो' जातः। अन्यासु यूरोपीयासु सजातीयभाषास्वपि वेदवत् 'आ' ā ओ ŏ द्विवचनविभक्तिर्विद्यते। तद्यथा—

सं० द्वा dvā (वै०), ग्रीक dode, do-dekam (द्वादश), पु० आयरीय do आं० two.

सं० अष्टा aṣṭā (अष्टौ)<*ok̯to >ग्रीक ōktō लाति. octo, पु० आयरीय ocht, गा० aḥtau, आं० eight, फा० हश्त, हि० आठ।

सं० अर्भः arbhas, ग्रीक orpho, लाति० orbu अं० orphan.

सं० भरामसि (bharāmasi), अवे. बरमही, ग्रीक दो० pheromai.

सं० आस् ās (वै०), आस्यम् āsyam, अवे० vaxas, लाति० ōs, अनेनैव ōral[1] इति मौखिकमित्यर्थे विशेषणपदं जायते ।

इ i

७. संस्कृतस्य येषु पदजातेषु 'इ' ध्वनिर्वर्ततेऽन्यास्वपि भारोपीयभाषासु तत्र इ i ध्वनिर्विद्यते । यथाहि उत्तमपुरुषैकवचनस्य—

**मि प्रत्ययः**

सं० अस्मि *esmi. अवे० ahmi, पु० फा० a (h) mi, ग्रीक emmi eimi, lesben. हित्ती esmi, पु० बुल्गा० jesmi (उच्चा० 'येस्मि'), जा० im फा० 'एम्', अं० am.

सं० ददामि, ग्रीक didomi, पु० बुल्गा० domi, लिथ्वा० dumi रूसी dām (उच्चा० 'दाम्') ।

मध्यम पुरुषैकवचनस्य सि प्रत्यये इ—

सं० असि, अवे० अहि ग्रीक एइ ai, होमरीय ग्रीक essi, फा० ई ।

सं० भरसि (म० पु०, ए० व०), अवे० barahi, ग्रीक phereis.

सं० (आ) इहि <* इधि idhi, अवे० ithi, पु० फा० idiy (उच्चा० 'इदि') ग्रीक hithi (उच्चा० 'इथि')

अन्यपुरुषैकवचनस्य 'ति' प्रत्यये इ—

सं० अस्ति अवे० अस्ति पु० फा० अस्ति य्, ('अस्ति'-इत्युच्चार्यते), ग्रीक esti पु० बुल्गा० jesti ('येस्ति') जा० ist फा० अस्त् अं० is (अत्र'ति' विभक्ति-र्लुप्ता ।)

सं० भरति, *bhereti, अवे० बरइति, ग्रीक pherei पु० बुल्गा० bereti.

सं० दधाति, ग्रीक titheti

---

१. L. os, or mouth-al. uttered in spoken words; trassacted by word of mouth.—Shorter Ox. Eng. Dictionary.

इय्, इद् आदि सर्वनाम्नां मूलप्रकृतिः 'इ'—

सं० इदम् id-am ला० is, गाँ, is आ० it सं० इमम्, (द्वि० ए० व०), अवे०, पु० फा० इमम्, फा० इम् ।

उत्तमावस्थासूचके 'इष्ट'-प्रत्यये 'इ'

सं० स्वादिष्ट, ग्रीक hedistos, गाँ. sutisa, अं० sweetest.

सं० √मिह् mih, मिहिका mihikā, गाँ maistus (गोमयम्) प्र० उ० ज० mist, ऐ० से०, अं० mist ग्रीक homikla पु० बुल्गा० migla, लिथ्वा० migla (वाष्प).

सं० अविः avis, ग्रीक ois, ला० avias पु० उ० ज० ou, लिथ्वा० avis, रूसी ovica, आं ewe.

सं० विः (वै० पक्षी), ला० ovis, (पक्षी) ova अण्डः इत्यपि एष एव, (अनेनैवाङ्गल्यामपि प्रसिद्धं oval इति विशेषणपदं जातम् ।)

सं० अहिः ahis, अवे० azisan (फा० अज्दहा), ग्री hexis, hops ला० anguisa.

सं० अरिः aris, ग्री० heris (उच्चा० 'यारिस्', संघर्षः शत्रुता)

धातूनां प्रथमाक्षारे इः यथा—

सं० विद्मः vidmas, होमरीय ग्रीक fid-men, गाँ vit-um आं० wit, witness. (दृश्यतामग्रे वकराक्षरेषु)

सं० मिनोमि minomi, ग्रीक minuo, पु० बुल्गा० miniji, (कनिष्ठः लघुः) गाँ minus आं० mini, minimum, minor.

धातूनामभ्यासे । यथा हि—

सं० तिष्ठामि tiṣṭhāmi, ग्रीक histemi, लाति० si-sto आं० systom, systematic.

सं० बिभेमि bibhemi, पु० उ० जा० bi-bem.

सं० द्वि dwi, लाति bi, ए० सैक्स tvi, आं twilight (द्वाभा) आं० twin (युग्मम्) twig (शाखा).

सं० इतर itar, ग्रीक hyter, hytrodaxy.

सं० त्रि tri त्रिषु, सप्तमी ब० व० ग्रीक trisi, लाति० trise पु० बल्गा trichu, (त्रिशु) ।

सं० विषः viṣas<*visos, अवे० viso विसो ग्रीक ios, लाति० visus आं० virus (विषः, विषाक्तः) लिथ्वा०, बुल्गा, रूसीयादि बाल्टोंस्लावीयभाषासु इकारस्य एकारादि नानारूपेषु विकासो जातः। यथा

सं० दिनम् dinam, पु० बुल्गा० dini, रूसी den.

ई ī

संस्कृते यत्र ईकारस्तत्रान्यासु भारोपीयभाषास्वपि ईकारस्तिष्ठति। यथा—

सं० जीवः Jīvas<* $g^{w}$ī-vo-s, >ला० vīvo-s, लिथ्वा० gyva-s, पु० बुल्गा० ziva, पु० फा० जीवा, फा० ज़ीस्त।

सं० सीमन्, सीमा sīman, simā (षीयते, षिञ् बन्धने') ग्रीक hī-mā-s (चर्मरज्जुः, रश्मिः), hī-mon-ia (कूपरज्जुः) पु० आइस si-mē (रज्जुः) फा० सीमा (ललाटं, सीमन्तः रजतम्) [सीयते इति व्युत्पत्त्या सीमन्, सीमा इति चाकारान्तः इति शब्दद्वयं सीमन्तश्चेति भिन्नार्थकः शब्दोऽस्ति। तथैवान्यासु भारोयीयभाषासु विशेषतः पारस्यां सीमा-ललाटं, सीम-रजतं चेत्यर्थद्वयं विद्यते। संस्कृते सीमन् शब्दोऽण्डकोषार्थकोऽप्यस्ति।]

सं० पीत pīta (√पा पाने, क्त प्रत्यये), ग्रीक pīno (पिबामि) pīthe (पिब, पिबथ)

सं० पीतिः pītis (पानं, पू० बुल्गा० piti, हि० पीना।

सं० √श्रीञ् पाके, अभिश्रीणाति अभि-श्री-णा-ति abhi-śrīṇāti मिलति) मेलयति नयति वा)<*$k_{v}$'i-na-ti> ग्रीक Iklī-nē.klītu-s ला० in·cli-no, inclinate, inclination (अभिलाषः प्रवृत्तिः) in-cline नमति नामयति, इच्छति, ac-clini-s, ac-cli-nal (अधिरुह्यमाणं, ऊपर की ओर ढलवाँ होता हुआ, sloping upwords आं de-cline.

सं० √क्रीञ् (द्रव्यविनिमये), क्रीणाति krīṇāti, पु० आयरीय crīthid-emax (सं० क्रीतक), फा० खरीदन्, हि० खरीदना—लातिन्या समागत आं price शब्द आद्यः ककारः पकारो जातः।

सं० प्रीतः prītas, पु० आइस० frīda (अलंकरोति)।

सं० ग्रीवा grīva, पु० बुल्गा० griva, फा० गिरीबान (गरेबां)।

सं० उ u *u,

९ संस्कृते येषु शब्देषु उ, ऊ विद्येते तेषु शब्देषु तावेव ध्वनी अन्यत्राप्युपलभ्येते। अत्रेदमवधेयं यद् ग्रीकायां u स्थाने प्रयुज्यमानो y पूर्वं तावद् 'उ' ध्वनिमेव बिभ्रत स्म।

पश्चादस्योच्चारणं ü(ēu) वज्जातम्। ख्रीष्टाब्दारम्भेऽस्योच्चारणं आइ i इति जातम्। तथापि बायोतीय लाकोनीय, एर्यादीय, सीप्रीय, लेस्बीय प्रभृतिषु ग्रीकविभाषासु ऐतिहासिककालपर्यन्तं y, 'उ' एव उच्चार्यते स्म[१]। तत्पश्चात् सर्वत्र अस्य उच्चारणं 'आई' इति जातम्। अतएव सं० उदन्*, उद्र, udan, udra, ग्रीक्यां hydor, hydros, हीदोर्, हीद्रोस अद्यत्वे आंग्ल्यां 'हाइडोर्', 'हाइड्रोस्'। इत्युच्चार्यते। जार्मण्यभाषासु तदयोः 'ट', 'ड' इत्युच्चारणं तु अग्रे विवेचयिष्यते। एवमेव सं० उप, उपरि up, upari, ग्रीक hupo, huper (hypo) यथा hypocratic (उप-उपरितः कृतः-ग्राह्याडम्बरवान् इति यावत्)।

रूस्यामद्यापि y इत्यस्य 'z' y उच्चारणं क्रियते।

एतत्सम्भाव्यते यद्ग्रीकायामादौ तावत् u इत्येतस्य i इत्युच्चारणं केषुचिच्छब्देषु विषमीकरण प्रवृत्त्या जातं स्यात्। यथा -

संस्कृतेऽपि पुनाति punāti <*pu nu to s> ग्रीक pinutos √श्रु इत्यस्य च शृणोति इति रूपं विषमीकरणप्रवृत्त्या एव जायते। पारस्यां तु 'श्रृणु' इत्यस्य स्थानेऽद्यापि शुनू इति उकारवद्रूपं वर्तते। हिन्द्यामपि सुन, सुनता है इत्यादौ उकारः सुरक्षितः।

सं० सुतः sutas, ग्रीक uhia-s, uhio-s, पु० आयरीय suth (जन्म, फलम्),

सं० रुधिरः rudhiras, ग्रीक eruthro s, लाति rubro, (आं० red इत्यप्येष एव)

सं० स्रुतः Srutas, ग्रीक rhu-to-s (प्रवाहः), पु० आयर sruth (नदी) लिथ्वा sru-ta (प्रस्रावः), फा० रूद्-खन् (नदी)।

सं० द्रुः dru s, ग्रीक dru (वनम्), पु० बुल्गा० dru id es, पु० आयर. drui (आं० tree अप्येतस्मादेव), फा० दरख्त।

---

१. कार्ल ब्रुगमान : A comparative Grammer of the Indo Germanic Languages, Vol. 1, Page 48.

सं० बुध्नः budhnas (मूलमाधारश्च), ले० fundus (आं० foundation अप्येतस्मादैव) जा०, boden, आं० bottom, फा० बुन्, बुनियाद।

सं० √ बुध् budh, बोधते, ग्रीक peuthetai, लिथ्वा० bud-int (उत्तिष्ठति), पु० बुल्गा० bude-ati (जागर्ति) गॉ० ana budum पु० उ० जा० butum. पु० आइस् budom, (समर्पयामः), आं० bid.

सं० मस्तुः (तक्रम्) mastus, लिथ्वा० (ब० व०) musai, पु० बुल्गा० muchu, लाति० muscu s, आं० moss (शैदालम्), फा० मस्त (तक्रम्।)

ऊ ū

१०. संस्कृतस्य येषु शब्देषु 'ऊ' विद्यते अन्यास्वपि सजातीयभाषासु तत्प्रतिरूपेषु शब्देषु ऊ ū सुरक्षितोऽस्ति। यथा—

सं० धूमः dhūmas, ग्रीक thūmo-s, (कामः, साहसः, उत्साहः आत्मा च) enthu अप्येष एव। लाति० fū-mu-s, per-fume (सुगन्धिः) आंग्ल्यामप्येष शब्दोऽस्ति। लिथ्वा dumai, पु० बुल्गा० dymu, रूसी० dym उच्चा० (दीम) फा० दूद।

सं० शूकरः śūkaras, ग्रीक hu s, hum, लाति० sū-s, पु० उ० जा० sū, आं० swine. पंजाबी-राजस्थानी 'सू-र' हि. सूअर।

सं० कूपः kupas (गर्तम्, छिद्रम्), लाति० cūpa (शवपेटिका) आं० coupe, ('कूपे'—धूम्रयाने पुरुषयुगलकक्षः a compartment for two persons) इत्यर्थे एष शब्दोऽधुनारूढोऽस्ति), हि कूआ राज. कूड़ा पं. खूह।

सं० √भू bhū, भूतः bhūtas, ग्रीक phū-tali (वृक्षपरिपूर्णस्थानम्), लाति० fui, fuimus, आं० future (भविष्यत्कालः)

सं० अभूतम् abhūtam, (म० पु० द्वि० ब०) ग्रीक ephi-ton, ephu-ton

सं० भूतिः bhūtis लिथ्वा० ba-ti, पु० बुल्गा० bity.

सं० मूषः mūṣas, (मूषकः, मूषिका), ग्रीक mus, पु० बुल्गा० mysi mysi, mysika (उच्चा० 'मूसिका') आं० mouse, mice (ब० व०) फा० मूश। हि० पं० मूसा।

सं० शूरः śūras, अवे० सूर (दृढ़ः), ग्रीक a-kuros (अशूरः दुर्बलः, अप्रयोगार्ह invalid).

सं० नू nū, नूनम् (वेदे[1] एतौ निपातौ अधुनार्थकौ, अद्यार्थकौ च स्तः, किन्तु लोके निश्चयार्थकौ जातौ) अवे० नू० ग्रीक nu-n, आं० now.

सं० गूथम् gūtham, अवे० gūtha (धूलिः), फा० गू० आर्मे० ku-(सम्ब.) ku-oy (गोमयम्), हि० 'गू' ।

सं० भ्रूः bhrū-s, ग्रीक ophrūs, ophrūn, पु० आइस. brū-n, ए० सॅक्स० brū, आं० brow, फा० अब्रू ।

सं० स्थूरः sthūras, स्थूलः, स्थूणा, ग्रीक stu-ly-s, पु० आइस० tūn (स्तम्भः), फा० सुतून, राज० थूणी ।

अवे. पु आयर्, लाति० tu, पु० आइस thū पु० बल्गा ty, हि तू राज० थूं (एते सर्वेऽपि शब्दा सं० 'त्व' अथवा 'तु' इत्यस्माज्जाताः ।)

सं० पूतिः pūtis, ग्रीक putho (द्वेषयामि), ले० pus, puris, pū-teō (अहं पूतिगन्धियुक्तो भवामि) putrid (दुर्गन्धितः) ।

सं० √पू, पूत आं० purifi-cation, scence,-scent,-scible,-purid.

सं० ऊधन्, ऊधर्, ūdhan ūdhar, पु० उ० जा० utar, ए० सेक्स० ūder, आं० udder (अडर्) ।

सं० श्रूय-माणः, śrū-ya-māṇas, ग्रीक klu-te (लोट्) पु० बल्गा. sli-sati (श्रवणम्) stylije (गालिं ददाति) पु० उ० जा० hlūt, ए० सैक्स० hlūd, आं० loud (तीव्रो ध्वनिः) ।

सं० यू-यम् yū-yam, अवे० यूस, यूजेम, लिथ्वा० us (उच्चा० ('यूस्) आं० you.

सं० श्वश्रूः śvaśrū-s, पु० बुल्गा० svekry.

सं० स्यूतिः yūtis लिथ्वा siuti, आं० sewing.

सं० सूची sūchi फा० सूजन् हि० सूई ।

## स्वरव्यत्ययः

११. भारोपीयौ एकार ओकाराविति मूलस्वरौ संस्कृते अकारे आकारे वा परिणता विति तु प्रतिपादितम् । स्वरविवेचनविषय एवैतदपि ज्ञानमावश्यकं यत् संस्कृतस्य अ (आ), इ (ई), उ (ऊ), इति स्वरत्रयी अपि य्‌रोपीयासु विशेषतः आंग्लजार्म-

ण्यादि ट्यूटानीयासु भाषासु लातिन्यामपि च परिवर्तिता । संस्कृतस्याकारो लातिन्यां प्रायश इकारे परिणमति ।

तथैव संस्कृतस्याकार आंग्लजार्मण्यादिष्वपीकारे संस्कृतस्यैकारश्च तत्राकारे परिणमति । संस्कृतस्योकारश्च आँग्ल्यादिष्विकारो जायते ।

१२. सं० अ आ>इ ई (आङ्ग्ल्यादिषु)

सं० स्वसर् svasar आं. sister

सं० मध्य madhya, आं० mid.

सं० √अद् ad, आं० eat.

सं० अग्निः agnis लाति. ignis, आं. ignite.

सं० √भृ bhṛ, भर् bhar * bher, आं० bear.

सं० लघुः laghus, आं. light.

सं० बन्ध bandh, आं० bind.

सं० मनस् manas आं. mind.

सं० दन्ताः (ब. व.) dantās आं० teeth.

सं० अन्तर् antar आं० inter.

सं० अ a (निषेधार्थको निपातः), लाति. आं० im, in.

सं० मा mā (माम्), आं० me.

सं० त्वा tvā, आं० thee.

सं० मांस māns, आं. meat.

सं० पादः पात् pādas (प्र० ब० व०), आं. feet.

सं० स्वादः svādas, स्वादिष्टः svādiṣṭas >आं. sweet, sweetest.

सं० पञ्च् pañch <*penk$^{w}$e, आं० five.

सं० √धेट्र पाने dheṭ pāne धारुः dhārūs (वै० स्तनपानम्), लाति० famina, आं० femal. woman अपि एष एव ।

१३. अ आ >उ ऊ

सं० √माङ् (माने,) मास् (वै.) mās, आँ. moon.

सं० √धा dhā, आं० do. (डू इत्युच्चार्यते ।

सं० स्वनः svanas, आं. sound.

सं० श्वन्, śvan, आं hound.

सं० पद् pad, आं. foot.

सं० दन्त dant, दत् dat, आं. tooth.

१४. (क) इ ई >अ आ

सं० ईर्म irma (वै. बाहुः) आं arm.

सं० पितर् pitar, आं. father

(ख) संस्कृते इ ई आंग्ल्यां उ ऊ

सं० पितुः pitus (वै. अन्नम्, भोजनम्), आं food[1] शब्दोऽयं बाल्टोस्लावीयवर्गीय लिथ्वानीयबुल्गारियारूस्यादिषु 'पित्वानिया'दि रूपेण मूलध्वनिं सम्यक्तया रक्षंस्तिष्ठति ।

१५. उ ऊ>इ ई

सं० √भू bhu, *bhev, आं. be.

सं० जानु (प्र-ज्ञुः jānu. jnus आं० knee.

सं० √बुध् budh, आं० bid.

सं० द्रुः dru-s, आं. tree.

सं० मूषः muṣas, आं. mice.

सं० √पॄ pṛ, पूर्ण, pūrṇa आं. fill, (अत्र प्रत्ययस्य नः पूर्वसवर्णो जातः।)

सं० √स्रु sru, स्रुतः srutas, आं. stream (अत्र तकारागमो जातः)

१६. (क) सं० इ, ई, उ, ऊ आं० ए e, ऐ, ai, āi, ओ०, औ ou संस्कृतस्यैकारोकारावांग्ल्यादिषु क्वचिद् गुणवृद्धिरूपाण्यप्याकलयतः । तद्यथा—

सं० भ्रू. bhrū, आं० brow.

सं० बुघ्नः, budhnas (भूमितलम् , मूलम्), आं० bottom, जा० boden.

---

१. एवमनुमीयते यदत्र परवर्ती उकार पूर्वस्वरे इकरे सङ्क्रान्तः ।

सं० √भुज् bhuj भुग् bhug, भुग्न, आं० bow (तदपि भुग्नं भवति।) जा० bogen (bow, bend, curve)

सं० उलू (कः) ulū(kas), आं० owl.

सं० सूरः sūras (सूर्यः), आं० solar.

सं० √लुभ् lubh, आं० love.

सं० वृकः vṛkas, *verkas, आं. wolf

सं० मृदुः mṛdus, आं० mild.

(ख) क्वचिदन्त्य उकारोऽन्योऽपि च स्वरो घृष्यति (लुप्यते।) यथा—

सं० सूनुः sūnus, आं son (सूर्यार्थको sun अप्येष एव।)

सं० मनुः manus, आं० man.

सं० वधूः vadhūs, आं० wed (अत्र नामधातुर्जातः।)

एष ध्वनिव्यत्ययो बाहुल[1]केनैवावलोक्यते न तु सार्वत्रिकः। यतो हि सामान्यतः संस्कृतशब्देषु यूरोपीयभाषाशब्देषु च स्वरध्वनयः समाना एव विद्यन्ते। यत्र कुत्र-चित् स्वरव्यत्ययो जातः स एवात्र कैश्चिदुदाहरणैरुपस्थापितः। अन्यान्युदाहरणानि स्वयमुह्यानि।

## अर्धस्वरा अन्तस्था वा

१७. संस्कृते यरलवा इत्येते चत्वारोऽन्तस्था अर्धस्वरा इति मन्यते। मनयुक्ताः षड्ध्वनयः परिस्थितिविशेषे आक्षरिकाणि (सम्प्रसारणितानि स्वररूपाणीति यावत्) रूपाणि बिभ्रत्यतएवैते अर्धस्वरा इत्युच्यन्ते। यवरलादयोऽर्धस्वरा एव क्वचित्परि-स्थितिविशेषे इउऋलृ अ इत्याद्याक्षरिकेषु रूपेषु परिणमन्ति न तु सर्वत्र। केचिद्-यकारादय आक्षरिक (स्वरात्मकम्) मनाक्षरिक (व्यञ्जनात्मकम्) मित्युभयविधं रूपं दधति, केचिच्च केवलं व्यञ्जनात्मकमेवेत्यवधेयम्। यथा हि यज् धातोर्यकार उभयविधं रूपं धत्ते, परं यस् धातोर्यकारः केवलं व्यञ्जनात्मकमेव। यतो हि इयाज, इज्या, इष्ट इत्यादि रूपेषु यजतेर्यकार इकारे परिणमति, परं यस्तेः क्तान्त-रूपं यस्त (आं० yeast यीस्ट) मेव जायते।

---

१. क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥

**य, y, ज j, ( इ i)**

१८. यकारः संस्कृत एव सर्वत्र संरक्षितः, पदादौ तु आंग्लजार्मण्यादिट्यूटानिक वर्गीयभाषास्वपियकारः सुरक्षितः । ग्रीकलातिनलिथ्वानीयरूस्यादिष्वन्यासु यकारस्य विविधा गतयो जाताः । तद्यथा—

(क) ग्रीक्याम्—

ग्रीक्यां यकारस्य मुख्यतश्चतुर्धा गतिर्जायते ।

I पदादौ यकारो हकारे परिणमति ।

II स्वरमध्ये यकारो विलुप्यते ।

III उ (u) कारादौ यकारो ज़ (z) कारे परिणमति ।

VI सकारेण युक्तश्च यः सुरक्षितो वर्तते ।

(ख) लातिन्याम्

लातिन्यामपि य (y) कारस्य प्राधान्येन चतुर्विधा गतिर्जायते ।

I य (ज j) कारः सुरक्षितो वर्तते ।

II सम्प्रसारणितो भवति (इकारे परिणमति इति यावत् । क्वचिच्च एकारे परिणमति ।)

III स्वरमध्ये विलुप्यते ।

IV व्यञ्जनात्परो यकारोऽवस्थाद्वयमापद्यते—

क. यस्तु तत्रैव तिष्ठति पूर्वो व्यञ्जनश्च विलुप्यते ।

ख. स्वरे परिणमति ।

(ग) आंग्लजार्मण्यादिट्यूटानिकवर्गे—

अत्रापि यकारस्य विविधा गतयो जायन्ते । तद्यथा—

I पदादौ यकारः सुरक्षितः । (गॉथिक्यादिषु प्रत्नासु भाषासु y इत्यस्य स्थाने j इति लिख्यते, परमाधुनिकासु आंग्ल्यादिषु

---

१. लातिनलिश्वानियारूसीबुलगारियादिभाषासु j य इत्युच्चार्यते । प्राकृत हिन्द्यादि मध्याधुनिकार्यभाषास्वपि यकारस्य जकारोच्चारणं क्रियते लिख्यते च । एवं यजयोरनेकत्र व्यत्ययोदृष्टः । रलयोरभेदवद्यजोरप्यभेदो वक्तुं शक्यते ।

पुनः y इत्येव लिख्यते उच्चारणन्तु उभयत्रापि 'य' एव क्रियते ।

II स्वरमध्ये यो विलुप्यते । लुप्तः सन्नप्यनेकत्र 'य' उच्चार्यते ।

III लिथ्वानीयरूसीबुल्गारीयादिबाल्तोस्लावीयवर्गे य (j) सुरक्षितो वर्तते । अत्रापि j य इत्युच्चार्यते ।

IV पारस्यवेस्तादीरानीयभाषास्वपि संस्कृतवत् प्रायशो यकारः सुरक्षितः । नव्यपारस्याञ्च क्वचिद् यकारस्य जकारो जातः ।

१६. पदादौ यकारः (आंग्ल्यादिष्वपि सुरक्षितः)—

सं० यू-यम् yū-yam, गॉ० j-us, आं० you, लिथ्व० jus, (त्वम्), आर्मे० jer, फा० शुमा (अत्र आद्ययकारः लुप्तः) ।

सं० युवन् yuvan, यवसः yavasa-s, (वैदिकः यौवनोपेतः), लाति० juveni-s, juvencus, उम्ब्रे० ivengar, गॉ० juggs[1], आं० young, फा० जवान ।

सं० यकृत् ykṛt, यकर् yakar (न्) yakan अवे० याकर, फा०, हि० जिगर्, ग्रीक hēpar लाति० jocur आं० liver.

सं० √ युज्, युञ्जते, युगः yuga-s, युगम् yugam, ग्रीक jugo-n. लाति० jugu-m, आं० yoke, junction.

सं० √ यजति, यजते yajati, yajate, अवे० यजइतें ग्रीक haxomai, आं० exalt.

सं० √ या yā, 'याति इति' यामः (कालविशेषः प्रहरः) अवे० यार् (वर्षम्), ग्रीक horos[2] (वर्षम्), hor. जा० jahr (होरा), आं० hour,year.

---

१. गॉथिक्यां gg इत्यस्य उच्चारणं ng क्रियते juggs शब्दोऽयं युंग इत्युच्चार्यते।

२. एभिरन्यैश्च उदाहरणैरेतत्स्पष्टीभवति यत् पदादौ यकारः ग्रीक्यां हकारे परिणमति । यथा च संस्कृते यातेर् 'म' प्रत्यययोगेन कालवाचकः 'याम' शब्दः निष्पन्नस्तथैव 'र' प्रत्यययोगेन गॉ० jer, ज० jahr, आं० year शब्दा अपि निष्पन्नाः । पदादौ यकारस्य हकाराद् ग्रीक्यां hors इति जातः । स एव hour इति भूत्वा आंग्ल्यां पुनरागतः । horoscope (वस्तुतो वर्षदर्शनं वर्षफलम् वा 'जन्मपत्रार्थे रूढम्) इत्यत्र hors इति शब्दः वर्षार्थक एव ।

संस्कृतेऽपि होरा शब्दः ग्रीक्या एव आगतः इति तु सत्यं परमयं ग्रक्या होराशब्दोऽपि मूलतः संस्कृतस्य या धातोरेव निष्पन्न इत्यप्यवधेयम्— द्रष्टव्यमग्र ।

सं० √अय् ay, एति, अवे० अंयइति पु० फा० अइति(य्), फा आयद्, ग्रीक ei-si.

सं० यथा yathā, अवे०, पु० फा० यथा, ग्रीक ho-s गॉ० jains, लिथ्वा० jē.

२०. **पदमध्यगो यकारः**

**व्यञ्जनात्परो यकारोऽन्यासु सजातीयासु विशेषतो यूरोपीयासु भाषास्ववस्थाद्वयमापद्यते।**

**(क) पूर्वो व्यञ्जनो स्वरो वा विलुप्यते (ख) यकारश्च सुरक्ष्यते। यथा—**

सं० महीयस् mahīyas, > लाति० mahyor > major, आं० mayor, (अत्र हकारो लुप्तः अन्त्यसकारश्च रेफे परिणतः।)

सं० नप्त्यः (वै०) naptya-s > आं० nephew, (अत्र तकारो लुप्तः यकारश्च सुरक्षितः।)

सं० मध्यः madhya-s, लाति० medius, ग्रीक messo <*meth-yo-s गॉ० medjis, आ० medius, media, medium, पु० बल्गा० mezdu (सीमा, परिधिः)।

सं० अन्यः anya-s, ग्रीक hallo-s, लाति० alios, आं० align. (सर्वत्र नकारो लकारे परिणतः)।

सं० √स्पश् (वै०) spaś, पश्यामि paśyami लाति० con-spi-cio.

(ख) स्वरमध्यस्य यकारस्य लोपो यथा—

सं० अयः ayas, लाति० aer, aer-is (षष्ठी ए० व०), आं० iron, ore अत्रापि अन्त्यः सः रेफे परिणतः।

सं० त्रयः traya-s, ग्रीक treis <*tre(y)es>, गॉ० theirs, लाति ters, आं० three.

सं० √तर्ष् tarṣ, तर्षयामि tarṣayāmi, लाति० toreo, (शोषयामि, भर्जयामि) (आं० thirst अपि अनेनैव सम्बद्धः)।

सं० चीयते cīyatē, ग्रीक tio, आं० choice, (फा० चीदन्, हि० चुनना)

२१. व्यञ्जनयुक्तो यकारः सुरक्षितः। यथा—

सं० द्यौः dyāu-s, द्याम् द्युभिः, ग्रीक zeus, <*dyeus, लाति zen, zov, zovis <dyev (अस्यैव शब्दस्य सप्तम्यैकवचने लाति० diov-e, ग्रीक्याञ्च diovfei, >द्यौवि इति जायते।)

सं० पित्र्यः (वे०) pitryas, ग्रीक patrios, आं० patriot.

सं० मन्ये manyē, लिथ्वा० miniu, पु० बुल्गा० minjan.

सं० स्यूत syuta-s, गॉ० siujan. पु० उ० ज० siuvan, आं० sew, sewjng.

सं० स्यूमन् syūman, (रश्मिः) स्यूत, ग्रीक humān, (मृदुचर्म, चर्मतन्तुः रज्जुर्वा), hu-mn-os, आं० hymn 'हिम्' इत्युच्चार्यते, प्रार्थनासंगीतम्, यतो-ह्येतदपि स्यूतं—संगीतस्वरैः परस्परेण स्यूतं समवेतं वा भवति।

### व v

२२. यकारवद् वकारोऽपि सर्वासु संस्कृतसजातीयभाषासु विशेषतो धातोराद्यो-वकार आंग्लजार्मण्यादिषु भाषासु सुरक्षितस्तिष्ठति।

संस्कृतस्य वृत् वर्त्, विद्, विश्, वह्, वच् (वक्), वल्ग्० वा, विन्द्, वश्, वृ, वर् वेञ्, वृश्च (ओ वृश्चु छेदने), वम्, वन्, वभ्, इत्यादयो वकाराद्याः प्रभूता धातवः आंग्ल्याद्यासु सजातीयासु यूरोपीयास्वन्यासु च भाषासु प्राधान्येन प्रकृति-रूपेण विकृतिरूपेण चानेकत्र विद्यन्ते।

संस्कृतस्य व v जार्मण्यवर्गीय आंग्ल्याद्यास्वनेकासु भाषासु संघर्षी कठोरो वा w जातः। परं लातिन्यादिषु व v एवास्ति, इत्यवधेयम्।

**२३. पदादौ वकारो यथा—**

सं० √वह् <*vegh-o वहामि, vahāmi, ग्रीक hokho-s, ला० vehō. पु० आयर० fēn, गॉ० ga-viga, लिथ्वा० vezu, पु० बुल्गा० veza, पु० आइस० vega, ए० से० wagon. आं० wagon, van, पं० वगदा है, हि० बहता है।

सं० √वच् <*vēkʷ, वचः vacha-s ग्रीक fepos[1], लाति० √vocāre, आं० vocal, voice, प्रशा० en-wackemai (आह्वयामि)।

सं० √वम् vam, वमामि vamami, वमितं, वान्तम्। ग्रीक omeō, लाति० vomo, लिथ् vemiti लेटिश wentt आं० vomit.

सं० √विद्, vid वेद, वेत्ति vēd, vetti, (जानाति), आर्मे gitem, ग्रीक oide, foide, (वोइदे), लाति० √videre (दर्शने), आं० visa, अपि अनेनैव

---

१. ग्रीक्यां f व इत्युच्चार्यते, ककारस्य चात्र पकारो जातः।

सम्बद्धः, videō, पु० आयर० ad-fiadat, (वर्णनम्)। गॉ० vait (वेत्ति), लिथ्वा, vēidas (वदनम्), पु० बुल्गा० vedio, vediti, आं० visul, vision. जा० weisheit, आं० wisdom. wit-ness.

सं० विद्वान्, विद्वस् vidvas, ग्रीक oidos, (ज्ञानम्, अवबोधः)।

सं० √वल्ग् valg, वल्गामि valgāmi (चलामि), वल्गा (सापि अश्वं चालयति), जिह्वा च। पु० आयर lingim, ल <व्ल। आं० walk, walking, (अत्र लकारोऽप्यवशिष्टः गकारश्च ककारे परिणतः। (आंग्ल्या ककारमकारादिभ्यः पूर्वं लकारोऽनुच्चरितो silent वर्तते।) हि० लगाम।

सं० विंशतिः vinśati-s. लाति० viganti, ग्रीक hikosi.

सं० वत्स (रः) vatsas, लाति० vetus (वृद्धः पुराणः) ग्रीक hetos (पुरा वेतोस इत्येवोच्चार्यते स्म।)

सं० √विश् viś, <*vik$_y$, वेशः veśas, (भवनम्, गृहम्), लाति० vicus, गॉ० veissa (स्थानम्), ग्रीक oikos[1], आं० visit.

सं० विषः viṣas, लाति० आं० virus (poison)[2]।

सं० √वन् van (वण्, षण् सम्भक्तौ), आं० win, winner.

सं० √वह् vah, <*vedh[3], वधूः vadhūs, लिथ्वा० vedu पु० बुल्गा० veda, आयर्० fadim (वहामि) आं० wedding. (अत्र नामधातुः पुनर्जातः)।

सं० वर्तते, vartatē, लाति० verto, आं० in-vert, re-vert, con-vart, di-vert, जं० werden.

सं० √वृष् vṛṣ, वर्षम् varṣam, वर्षा, (धारासम्पातः), ग्रीक eherke, आयर० frass, आं० frost अपि एतस्मादेव।

---

१. ग्रीक्यां पदादौ वकारो लुप्यते संस्कृते च* क्यः शकारे परिवर्तते अतएव सं० √विश् *vek$_y$ धातोः एकत्र वेशः अन्यत्र च oikos इति निष्पद्यते। स एव oikos संस्कृते ओकः इति जातः इति मन्ये।

२. लातिन्यामांग्ल्यां च स्वरमध्यगः सकारः रेफे परिवर्तते।

३. संस्कृतस्य √वह् धातुः वहनार्थकाद वेध् *vedh धातोः गमनार्थकाद वेघ् vegh धातोश्च इति धातुद्वयादेकीभूतो जातः, परं 'वधू' शब्दे वैदिके 'वाघतः' सदृशेषु च शब्देषु धातुद्वयं स्पष्टमेव प्रतिभाति। पं० 'वगदा है' इत्यत्रापि भारोपीयो vegh धातुः सुरक्षितः।

सं० √वृ (ञ्) vṛ, वरः, ववार, वरति, वरयति-कामयते, लाति० velim, velle, लिथ्वा० velyti, पु० बुल्गा० voliti, गॉ० viljau, पु०उ०ज० willan, आं० will, जा० wille.

सं० वीरः vīras, लाति० vir (नरः, वेदेऽपि वीरशब्दः मनुष्यार्थेऽपि प्रयुज्यते), उम्बे० viro, गॉ० vair, आयर० jēr (अत्र वकारः यकारे परिणतः।)

सं० विधवा vidhavā, लाति vidua, ए०से० widewe, गॉ० viduvo, आं० widow, जा० witwe.

सं० वृकः vṛkas <*v·l̥qo-s, लिथ्वा० vilka-s, गॉ० vulfs, पु० बुल्गा० vluku, आं० wolf. फा० गुर्ग[1]।

सं० वाजः vājas, <*vag$^{w}$es (अन्नम्), आं० vegetable, vegetarian.

सं० वर्षिष्ठः varṣiṣṭhas (उच्चतमः), लिथ्वा० virszu-s, पु० बुल्गा० vrichu अग्रभागः)।

सं० √विन्द् vind, विन्दते, आं० wind (take one self. (The Shorter Oxford English Dictionary.) जा० wille.

सं० वयम् vayam, अवे० व एम्, पु० फा० वयम्, गॉ० veis, आं० we.

सं० वः vas (युष्माकम्) लाति० vos, रूसी० vos.

सं० वहित्रम् vahitram, लाति०, vehicle (संस्कृतस्य 'त्रः' लातिन्यां-cle कथं जायते दृश्यतामग्रे त्रः प्रत्ययः।)

सं० वा (निपातः, लोकेऽथवार्थको वेदे तु पारसीवदन्यार्थकोऽप्यस्ति।) लाति० ve.

**२४. वकारः पदमध्यगतः**

सं० सर्वः sarvas, अवे० हउर्व, ग्रीक oulos[2], holos <*olfo-s लाति० salvos, आं० whole, all, फा० हर[3]।

सं० स्वादुः svādus, स्वाद्वी svādvī, लाति० suādis, ए० से० swoti, आं० sweet.

---

१. फारस्यां पदाद्योः वकारः गकारे परिणमति अतएव सं० वज्रः पारस्यां गुर्ज़ इति जायते।

२. ग्रीकफारस्ययोः पदान्ते यवौ लुप्येते।

३. पदाद्यः सकारश्च हकारे परिणमति स च ग्रीक्यां क्वचिद्विलुप्यते।

सं० √स्वद्, स्वादः svad, svādas, आं० sweet.

सं० स्वर् svar, लाति० ser-esaec-s.

सं० श्वशुरः, श्वश्रूः śvaśuras, śvaśrus, लाति० sorrus <svecru-s, ग्रीक hekuros, पु० बुल्गा० svekruoe (श्वश्व्राम्) svekry (कर्ता)।

सं० तन्वी tanvi, लाति० tenua, अवे० जन्व zanva.

सं० दुवस् (वै०) duvas, दुवस्यति-सम्मानयति, आदरः, अलङ्कारः। लाति० bonus, आं० bonus, अत्र दकारः बकारे परिणतः।

सं० स्वेदः svedas, लाति० suvare, आं० sweat (स्वेट्)।

संस्कृतस्य नु, nu, न्व nu (ण्व ṇv) गॉथिक्यामांग्ल्यादिषु च न्न nn अथवा न n जायते। यथा—

सं० मनुः manus, गॉ० manu, आं० man.

सं० ऋण्वति ṛṇvati, रिणोति (प्रवहति), गॉ०, पु०उ०ज० rinnan, जा० renne, आं० run.

**२५. ग्रीक्यादौ वकारः**

एभिरुदाहरणैर्ग्रीकभाषेतिहासज्ञानेन च ज्ञायते यद्यथा ग्रीक्यां पदादौ यकारः परिवर्तितः (हकारो जातः इति यावत्) तथैव वकारस्यापि नानागतयो जाताः। ग्रीक्यां आदौ तावद् वः f रूपेण सुरक्षित आसीत्तस्योच्चारणञ्चार्ध-स्वररूपेणैव क्रीयते स्म। कालक्रमात् पदादौ वकारो घृष्टोऽनुच्चारितो वा जातः। पश्चाच्च पदमध्यगो वकारोऽपि लुप्तः अतएव सं वेद ग्रीक्यां oide इति जातः।

सं० वेशश्च ग्रीक oikos इति जायते। एवमन्यत्राप्युह्यम्।

सं० वास्तु vāstu, ग्रीक hastu.

सं० पूर्वः pūrvas, ग्रीक (डोरिक), pran <*pro-fa-n प्रोवान।

सदृशेषु शब्देषु ग्रीक्यां वकारस्य नानगतयो दृश्यन्ते।

**२६. बाल्टोस्लाविक्यां वकारः**

आंग्लजार्मण्यादिवत् लिथ्वानीयरूसीबुल्गारियादिबाल्टोस्लावीयवर्गेऽपि वकारः सुरक्षितः। पदादौ यथा—

सं० वाति vāti, वायुः vāyus, लिथ० veja-s, पु० बुल्गा० veja-ti. आं० wind.

सं० हुवति huvati (आह्वयति), पु० बुल्गा० juva-ti, फा० जवाब इत्यपि-

सं० ह्वा धातोरेव निष्पन्नः ।

सं० अद्वः advas, लिथ्वा० ed-va (एद्व) ।

सं० श्वेतः śvetas, श्वित्रः śvitras, लिथ्वा० szviti पु० बुल्गा० sviteti (प्रकाशते) आं० white.

सं० स्वः svas, लिथ्वा० es-va.

२७. श्व स्व इत्येतयोर्वकारः नानाभाषासु लुप्यते । यथा—

सं० स्वसृ svasṛ, स्वसर् svasar, लिथ्वा० sesu, पु० बुल्गा० sestra, आं० sister.[1] फा० ख्वाहर्, खाहर ।

सं० स्वप्नः svapnas, लिथ्वा० sapna-s, ग्रीक hypnos, आं० hypno. आं० hipnotize अपि एषएव। फा० ख्वाबीदन वकारो लिख्यते परं नोच्चार्यते, हि० सोता, सुलाता ।

---

१. आंग्ल्यादिषु स्वसृ, स्वसर् सदृशेषु शब्देषु 'सृ', 'सर्' इत्यनेन सह तकारो युज्यते ।

# रलयोर्विवेकः

**र r ल l ऋ r̥ लृ l̥**

२८. रलौ भाषाविज्ञाने 'तरला'वित परिभाष्येते। आद्यभारोपीयभाषायां रलयाः संकरो न जातः। तथैव च यूरोपीयासु भाषास्वपि विभिन्नेषु शब्देषु धातुषु च रलौ स्वीयां पृथक् सत्तां वहतः।

**लकारस्य बहिष्कारः**

परं गच्छति काले भेरानीयवर्गीयावेस्तायां प्रत्नपारस्याञ्च लकारस्य बहिष्कारस्य प्रवृत्तिः प्रादुरभूदेतादृशीचावस्था समागता यदवेस्ताप्रत्नपारस्ययोर्लकारः सर्वथाऽप्रयुक्तो जातः। अनयोरुभयोरपि भाषयोर्लकारः सर्वत्र रेफे परिणतः। (प्रत्नपारस्यां केवलं व्यक्तिवाचकसंज्ञायामेवैकत्र लकार उपलभ्यते।)

यतोहि वैदिका आर्या ईरानदेशीयाश्च बहुकालं सहैव न्यवात्सुरतएवावेस्ताया वेदानाञ्च भाषायां न केवलं महत्साम्यमपित्वैकात्म्यमप्यवलोक्यते। अतएवैषा लकारबहिष्कारप्रवृत्तिर्वेदेष्वपि वरीवर्ति। भाषयोरनयोरलयोर्विचारणायां प्रसक्तायामेतदन्तरं सुस्पष्टं प्रतिभासते यदवेस्तायां यथा लकारः सर्वथा बहिष्कृतो, वेदेषु तादृशो लकारबहिष्कारो नाभूदपितु लकारस्य स्थानं बाहुल्येन रेफेण गृहीतम्। परमनेके लकारवन्तः शब्दा वेदे स्वस्थितिं रक्षितवन्तः, किन्तूत्तरकालिके वैदिकवाङ्मये लकारस्य पुनरादानप्रवृत्तिः प्रादुरभूत। तदनुसारं परवर्तनि संहितासाहित्ये ब्राह्मणग्रन्थेषूपनिषत्सु च रलयोर्वैकल्पिकः प्रयोगः प्राचुर्येण दरीदृश्यते। पश्चात्कालिके लौकिकसंस्कृतसाहित्ये च लकारवन्ति शब्दरूपाणि धातुरूपाणि चानिर्बाधं पुनः स्वस्थानं लेभिरे।

संक्षेपेणैवं वक्तुं शक्यते—

**र् r ल् l ऋ r̥ लृ l̥**

सर्वासु संस्कृतसजातीयासु भाषासु रलौ तयोश्चाक्षरिकरूपौ ऋ लृ अपि उपलभ्येते।

## २६. भेरान्यासु लकारस्य बहिष्कारः

क. सर्वासु भारोपीयासु भाषासु रलावित्युभावपि ध्वनी विद्येते । परं रलयो-रपि कासुचिद् भाषासु परिवर्तनप्रवृत्तिरवलोक्यते । यथा हि ईरानदेशीयावेस्ताप्रत्न-पारस्ययोर्लकारस्य सर्वथा बहिष्कारो जातः । भाषयोरेतयोर्लकारस्य स्थाने सर्वत्र रेफ एव प्रयुक्तः । प्रत्नपारस्यां केवलमेकस्यां व्यक्तिवाचकसंज्ञायां लकारो-ऽवलोक्यते ।

ख. ईरानीयार्यावर्तीयाश्चार्या बहुकालं सहैवाध्यवसंस्तेषां भाषाया विकासोऽपि सहैव जातः । अनेनैव कारणेनावेस्ताप्रत्नपारसीवद्वैदिकशब्देष्वपि लकारस्य स्थाने रेफस्य प्रयोगप्राचुर्यं परिलक्ष्यते । यद्यप्यवेस्तावन्नास्ति वेदेषु लकारस्य सर्वथा बहिष्कारप्रवृत्तिस्तथापि लकारस्य स्थाने रकारस्य प्रयोगप्राचुर्यन्तु पदे-पदे दृश्यत एव वेदेषु ।

ग. गच्छति काले लौकिकसंस्कृते तथैव नवीनपारस्याञ्च—कथं लकारो भाषयोरेतयोः पुनरागत इति तु भाषावैज्ञानिकानां कृते विचारणीयो विषयः । कथं वैदिकशब्देषु भारोपीयस्य लकारस्य स्थाने 'र' आगतः कथञ्च पुनः लौकिकसंस्कृते लकारवन्तः शब्दाः स्वस्थानं लेभिरे[1] इत्येतस्योदाहरणरूपेण शतशः शब्दा उपस्थाप-यितुं शक्यन्ते ।

उदाहरणमेकमवलोकयतु 'शुक्लः' 'शुक्लं' वानयैव लकारबहिष्कारप्रवृत्त्या वेदे शुक्रं जातम् । तस्य शुक्रस्य च लौकिकसंस्कृते 'वीर्य'सदृशेऽपवित्रपदार्थेऽर्थापकर्षो जातः श्वेतवर्णसाम्यात् । शुभ्रार्थे तु लौकिकसंस्कृतेऽधुना 'शुक्ल' एव प्रयुज्यते । संस्कृते 'शुक्र' शब्दोऽपि प्रचलितः । वीर्यं शुक्रग्रहश्च इत्येतौ द्वावर्थाववगम्येतेअस्य शब्दस्य । शुक्रशब्दः शुक्लार्थे संस्कृतेऽप्रयुक्तोऽविज्ञातश्च । योऽमरकोशकारः—'रोहितो लोहितो[2] रक्तः" इत्यत्र लोहितेन सह रोहितमप्युद्धृत्य रलयुक्तावुभावपि शब्दौ रक्तार्थे स्वीकरोति स एव "शुक्लशुभ्रशुचिःश्वेतविशदश्येतपाण्डुराः ।"[3] इत्यादौ श्वेतेन सह श्येतमपि शुक्लस्य पर्यायवाचकमुद्धरन्नमपि 'शुक्रं' 'शुक्ल'स्य पर्याय-

---

१. नानाविधासु प्राकृतभाषासु लकारस्य प्रयोगप्राचुर्यमवलोक्यते । मृच्छकटिके-त्वेकत्र 'पुरुषाः पुरुषा' इति स्थाने पुलुषाः पुलुषा इति लकारवद्रूपमपि प्रयुक्तम् ।

२. अमरकोशः ५।१५

३. अमरकोशः ५।१२

वाचकं न स्वीकरोति। परं वेदेषु शुक्लार्थे 'शुक्र'शब्दः प्राचुर्येण प्रयुक्तः। 'तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्' इत्यादि प्रतिदिनं पठ्यमानेऽघमर्षणमन्त्रे 'शुक्र'-शब्दः शुक्लार्थे एव प्रयुक्तः। एवमेव अमरकोषे पठितोऽपि रक्तार्थकः 'रोहितः' संस्कृतेऽप्रयुक्त एव। अत्र तु लोहित एव प्रचलितः, परं वेदेषु रोहितः सुप्रयुक्तः। अनेन ज्ञायते यदवेस्तावद्वेदशब्देष्वपि लकारस्य स्थाने रकारप्रयोगबाहुल्यं विद्यते, यद्यपि नास्ति सर्वथा बहिष्कारो लस्यात्र।

वेदेषु लकारबहिष्कारस्य लौकिकसंस्कृते च तस्य पुनरागमनस्य भूयांस्युदाहरणान्युपस्थापयतुं शक्यन्ते, यथावसरं चाग्र उपस्थापयिष्यन्ते। कानचित्प्रसिद्धान्युदाहरणान्यत्रोपस्थाप्यन्ते। सुविख्यातस्य पुरुषसूक्तस्यैकस्मिन्मन्त्रे—'विष्णोरराटमसि' इत्यदि पदजातं प्रतिदिनं पठामः प्रब्रवामश्च। परमेषा चिन्ता न क्रियते यत्किन्नामेदं 'रराटम्' ?

वस्तुतः वेदेषु लकारबहिष्कारप्रवृत्त्या प्रादुर्भूतमेतल्ललाटमेव।

वैदिकसंहितासु भरोपीयस्य लकारस्य स्थानेऽनेकत्र रेफ आगतः। एवं 'रराटं' 'रोहित', 'रघु' सदृशा वेदेषु प्रयुक्ता रकारवन्तः शब्दा लौकिकसंस्कृते पुनः 'ललाटं', 'लोहित', 'लघु', रूपेषु लकारं गृहीतवन्तः[1]। संस्कृतस्य एष लघुरेवांग्ल्यां light लघिष्ठश्च lightest इति जातः। संस्कृते लृकारवानेकः 'क्लृपि' धातुरेवावशिष्टः। अन्ये सर्वे ऋकारवन्तो जाताः। पुनः स्पष्टीकरणार्थं सं० ऊर्णा ūrṇā, आं० wool इति शब्दद्वयमुपादेयम्। वस्तुतः शब्दद्वयमेतदेकस्यैव शब्दस्य रूपद्वयम्। अनयोः शब्दयोः प्रकृति-प्रत्ययावुभावपि समनावेव। यद्यपि संस्कृते ऊर्णा शब्दस्यः 'ऊर्णुञ्' न मूलधातुरपि तु नामधातुरेवास्ति। वस्तुतो ् वृञ् <*व्लृधातो'र्न'प्रत्यययोगेन *वूल्न vūlna, शब्दो निष्पन्नः। तथाचोक्तमाचार्येण यास्केन 'ऊर्णा पुनर्वृणोतेः।[2]

नकारस्य पूर्वसावर्ण्यादांग्ल्यां wool (o.e. wull, o. tut: wullo, gr, lēnos<folnos, <*wl̥nos[1]) इति जातः। पुरा आंग्ल्यां लकारद्वयं ll

१. 'पुलुकामो हि मर्त्यः' ऋग्वेद-१-१७९-५—
पुलुकामः—पुरुकामः—(निरुक्त-६-१), एतादृशेषु शब्देषु यूरोपे प्रचलितं लकारवद्रूपं क्वचित् स्वस्थितिं वेदेऽरक्षदेव। यद्यपि एष 'पुलु' शब्दस्तदात्वे सर्वथा दुर्बोधो जातोऽत एव यास्केनानवगतसंस्कारवत्सु शब्देषु 'पुलकाम' इति शब्दोऽपि परिगणितः। 'पुलकेशिन्', 'पुलमावी' सदृशेषु संज्ञाशब्देष्वपि एष 'पुलु' पुनरुज्जीवितः।

२. निरुक्त ५, ४।

आसीत्, पश्चादेकस्य लकारस्य लोपस्य प्रवृत्तिस्तत्र प्रादुरभूत्। अनेन सिद्ध्यति यत् *wḷnos शब्द एव संस्कृते ऊर्णा[1] इति जातः। सं० वृकः आं० wolf सदृशानामनेकेषामन्येषामपि रलवतां शब्दानामेषैव स्थितिः।

### र r ऋ ṛ

३०. संस्कृते यूरोपीयभाषासु चोभयत्र तादृशा अपि शब्दा उपलभ्यन्ते यत्रोभयत्र r एवास्त्यथवा संस्कृते रः r यूरोपीयासु च ल l विद्यते[2]।

अत्र केचिदेतादृशाः शब्दा उदाह्रियन्ते यत्र संस्कृते अन्यासु सजातीयभाषासु च रेफस्य ऋकारस्य च समानैव प्रवृत्तिर्विलोक्यते।

**पदादौ ऋ**

सं० ऋणक्ति (शिथली करोति, त्यजति), ग्रीक leipo, लाति० linpuo, आयर० lecim, आर्मे० lkanem, गॉ० leihva, आं० link, leave, leap-year. 'leap & dound', लिथ० leku (त्यजामि), हि० रेंगना।

सं० ऋणोति ṛṇoti, रिणोति riṇoti (गच्छतीत्यादयः), आं० run.

सं० ऋजिप्यः rjipyas (वै० उड्डयनम्, विस्तारः), अवे० अरेजिप्य, (विस्तारः, विस्तृतपक्षवान् श्येनः), आं० eagle. फा०, अर्ज (वस्त्रस्य विस्तार width).

सं० ऋक्षः rkṣas, ग्रीक० एरेखोस harxos, लाति० ursus, आर्मे० orj, हि० रीछ।

सं० ऋभुः ṛbhus आं० elf. (लातिन्याः समागतस्यास्य शब्दस्य पूर्वं 'देवयोनिविशेष' इत्यर्थ आसीत् परं पश्चादाङ्ग्ल्यां 'अप्सरसः' इत्यर्थेऽर्थसङ्कोचो जातः। एवमेव संस्कृतेऽपि 'देवयोनिविशेष'वाचकस्यास्य शब्दस्यामरकोषे देवसामान्येऽर्थ-विस्तारो जातः।

सं० ऋतम् ṛtam नियमः विधानम्, रीतिः लाति ars, art, आं० art.

---

१. The Shorter Oxford English Dictionary on Historical Principles, 3rd Edition year 1959.

२. 'ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्' इति वदता कात्यायनेन न केवलं ऋलृवर्णयोरेवापि तु तन्निष्पन्नयो (भाषाविज्ञानमते तु तन्निष्पादकयोः) रलयोरपि सावर्ण्यं स्वत उक्तम्।

**पदादौ रः यथा—**

सं० रजस् rajas (वेदे लोकः, अन्धकारोऽपि च, लोके तु धूलिः रजोगुणो वा) ग्रीक herebos, गॉ० rigiza, आर्मे० erek (सन्ध्या)।

सं० √रिख् rikh, √लिख् likh, रेखा (लाङ्गलरेखा) लिखति, लेखा, ग्रीक ereiko, लिथ० reken.

सं० √रिप् rip, लिप् lip, लिप्तः lipas, ग्रीक lipos, (स्निग्धं, चिक्कणं करोति), लाति lipus गॉ० bi-leiba, पु० उ० जा० biliva, ए० से० belief, आं० be-lieve.

सं० रुधिरः rudhiras, (रक्तः, रक्तवर्णः) * √reudh, ग्रीक eruth-ros, लाति० ruber, पु० आयर ruad, गॉ० rauths, पु० आयस्० rodra, पु० बुल्गा० rudru, (रुधिरः), आं० red (रक्तवर्ण) (हिं० राज० पं० लहू अपि लोहितान्निष्पन्नः स रोहितान्निष्पन्नः स च √रुध् इत्यस्माद्।

सं० √राध् rādh, राधति, राधते (निष्पादित, प्रतिपादित, प्रीणाति), अवे० rādait, पु० फा० avahya-rādiy, (अतएव, एतस्मात् कारणात्), गॉ० ga-rēdan (प्रदानम् समर्पणम्), ओ० से० rādān (सम्मतिः), पु० बुल्गा० radive (अवधत्ते, प्रयच्छति।) आं० ready <raid-to put in order.

सं० रामः[1] rāmas (मेषः, मेढ़ा), आं ram.

सं० √राज् raj, राजा rājā, राजन् rājan, लाति rēgis, आं० regal, regent.

सं० रैः rāis, (ब०व०), लाति० rē s, rēx, reg.

सं० रथः rathas, लाति० rota, पु० आयर०, गाल० petorritum (चतुश्चक्रः रथः) पु०उ०ज०जा० rad (चक्रम्), लिथ्वा० ratas. आंग्ल्यामनेनैव rotati इति नामधातुर्जातः। तेन च पुनः rotation इति संज्ञा निष्पन्ना।

सं० √रुद् rud, रुदामि, रोदामि rudāmi, गॉ० rath-ō (गणना)

---

१. गन्धर्वः शरभो रामः सृमरो गवयः शशः।
इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः।
अमरकोश २।५।११

अत्र पशुसामान्ये विवक्षितो 'रामः' वस्तुतो मेषार्थकोऽस्ति। आंग्ल्यञ्च एष शब्दो मेषार्थे एव प्रयुक्तः।

लाति० ratio, पु०उ०ज० जा० rediu, reda (वार्तालापः वक्तृता), riozan, rōz, (रोदनम्), ए० से० reotan, (रोदनम्, प्रतिवादः)। आं० rut to roar.

३१. रकारः पदमध्ये यथा

सं० √ स्रु, स्रव् स्रवति sru, srav, *srev, ग्रीक hrevma (नदी) पु० आयर० sruaim, पु०उ०ज०जा० strom, आं० stream, (आंग्ल्यादिषु तकारस्य आगमो जातः), लिथ्वा० sraveti (बिन्दुशः प्रवहति), पु० बुल्गा० o-strovu (द्वीपः) फा० रूद-खन् (अत्राद्यः सकारो लुप्तः, स्वार्थिकः खन्-कन् प्रत्ययश्च जातः।) आं० rever अप्येतस्मादेव। rhine (जर्मण्यनदीविशेषः)।

सं० मातृ mātṛ, मातर् mātar, ग्रीक mēter, (सम्बो०) लाति० mātrem (द्वि०ए०व०), पु० आयर० mathir, पु० उ० ज० muoter, आं० mother, पु० बुल्गा० matere, फा० मादर।

सं० √दृश् dṛś, दर्श् darś, *dek$_v$.

सं० ददर्श dadarśa, अवे० दादरस, ग्रीक dedorka (देदोर्क), पु० आयर० ad-chon-dare (अपश्यम्), गॉ० ga-tarhjan (to mark out संकेतयति)।

सं० प्र pra (निपात, पुरा, पूर्वम्), अवे० फ्र० fra, ग्रीक pro, लाति० आं० pro, prod, पु० आयर० ro, लिथ्वा० pra, पु० बुल्गा० pro.

सं० उद्रः udras[1] (जलजन्तुः), अवे उद्र, पु० बुल्गा०, लिथ्वा० udra, ग्रीक hudros, hud-ra, पु० आयर० otr, पु० उ० ज०, आं०, जा० otter.

ल l लृ ḷ

३२. क. यद्यपि संस्कृते रलावुभावपि सुप्रयुक्तौ परं धातुषु 'क्लृपि' इत्येक एव लृकारवान् धातुरवशिष्टः, सर्वेऽन्ये धातवः ऋकारवन्तो जाताः।

ख. यूरोपीयासु भाषासु नास्त्येतादृशो रलयोर्व्यत्ययस्तत्राद्यापि ऋकारवन्तो रकारवन्तश्च लृकारवन्तो लकारवन्तश्च शब्दाः स्वस्थितिं सर्वथा पृथक्तया निर्वहन्ति। परं संस्कृते विशेषतो वैदिकशब्देषु लकारबहिष्करणेन ये भारोपीयाः शब्दा धातवश्च संस्कृते रकारवन्तो जाता यूरोपीयभाषासु तु तत्र लृ el ल l इत्येवास्ति। अतएव संस्कृतस्य ऋभुराङ्ग्ल्यां elf. संस्कृतस्य √रक्ष् च ग्रीक्यां √alex[2] इति

१. तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः। अमरकोश १।१०।२० इत्युक्तवता कोषकारेण 'उद्रः' संस्कृतपद्धत्या जलजन्तु-विशेष इत्येवोक्तः, परमयं आंग्लीय other इत्यस्य प्रतिरूपं स च हिन्द्यां 'ऊदबिलाव' इत्युच्चार्यते।

२. अनेनैव Alexander <सं० आरक्षीनरः इति नाम निष्पद्यते।

रूपेणोपलभ्येते[1]। अनेनैतज्ज्ञायते यदवेस्तायां संस्कृते च यत्र रकारवान् शब्दः यूरोपीयभाषासु च लकारवांस्तत्रावेस्तायां संस्कृते च लकारबहिष्करणप्रवृत्त्या लस्य स्थाने रेफो जातः। अथ च—

'ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्'[2]

इति तूक्तमेव एवमेव। रलयोःसावर्ण्यमपि स्वीकर्तव्यम्।

ऋलृवर्णौ च संस्कृते एव विद्येते। एतयोः स्थाने नानाभाषासु अर् इर् उर् अल् इल् उल् अथवा रलावेव दृश्यन्ते। यथा हि ऋ लृस्थाने—

अवेस्तायां एर् ओर् फारस्यां उर्, र, लातिन्यां or, ol, आंग्लजार्मण्यादिषु च उर्, इर् ur, ir सदृशा ध्वनयो दृश्यन्ते।

ग्रीकभाषायास्तुध्वनिविकासस्यान्य एव पन्थाः। ग्रीकास्तु 'तीन लोक से मथुरा न्यारी' इत्युक्तिं चरितार्थयति। रलयोरप्यस्या नियमजातमन्यदेव। तद्यथा—

ग्रीक्यां पदादौ पूर्वयोः रलयोः स्वरागमो हकारागमो वा जायते। क्वचिच्च रकारेण सह हकारः संयुज्य rh इति जायते। यथा संस्कृतस्य स्रु sru ग्रीक्यां rheo (स्रवा-मि) एवमेव rhetra (उक्तिः, कथनम्) rhetoric (अलंकार-शास्त्रम्) इत्यादयः शब्दा निष्पद्यन्ते। यतोहि वक्तुर्मुखात् कवितापि प्रवहतीव प्रतीयते।

अन्यत्र च ग्रीक्यामेव स्रवतेः सकारो हकारे परिवर्तते। ततश्च नदी वाचकः hrevma इत्येवास्ति। लिथ् स्रवेति sraveti, पु० बुल्गा० o-strove (द्वीपम्), पु० उ० जा० strum, आं० stream. इत्यादयः शब्दा निष्पद्यन्ते।

परमेतादृशाः शब्दा अप्युपलभ्यन्ते यत्र संस्कृते यूरोपीयासु भाषासु चोभयत्रापि लकारो वा रेफो वा समानरूपेण विद्यते। यथा हि—

सं० लघुः laghus. ग्रीक elakhu, सं० लघिष्ठ > आं० light.

सं० √लस् las, लष् laṣ, लालसः lālasas, लाति० las-ciro-s, गॉ० lustus, आं० lust. सं० अभि-लाषः।

सं० √लुभ् lubh, लुभ्यति lubhyati, लोभः lobhas, लाति० lubetex,

१. 'हेऽलयो हेऽलय (हेऽरयो हेऽरय) इति ब्रुवाणा असुराः पराबभूवुः' (महाभाष्य १-१) इतिवदताचार्येण पतञ्जलिनैतद्भाषावैज्ञानिकं तथ्यं पुरैव प्रकटी कृतं यदसुरा (यूनानदेशवासिनो यवनाः पाश्चात्या वा) लकार-बहुलां भाषां प्रयुञ्जन्ते परमार्याणां भाषा रकारप्रचुरास्ति।

२. 'तुल्यास्यप्रयत्नं सवर्णम्' (अष्टा० १।१।९.) इति सूत्रे वार्तिकम्।

गॉ० liufs, पु० बुल्गा० ljubu (प्रियः) आं० love.

सं० √लून्  (छेदने शिथलीकरणे च) लुनामि lunāmi, ग्रीक luō, लाति० luore, पु० आइस० lyje, गॉ० laus आं० loose, lose (Sh. Ox. Eng. Dic.).

सं० √लिह् lih, *ligh, रिह् rih, लेढि ledhi, ग्रीक liexo, लाति० lingo, \ lingere, पु० आयर्० ligim, आर्मे० ligu-m, गॉ० fi-laigo, लिथ० leziv आं० lick. जा० lecken.

सं० √रुच् ruc, रुक्म आलोकः ālokas, * √lekʷe, अवे० रओचह, पु० फा० रउचह. फा० हिं० रोज़ (प्रकाशमान दिनम्।) ग्रीक leukos, लाति०, आं० lux, luc-is (प्रकाशमानः), पु० बुल्गा० luca (किरणः), गॉ० liuhath, आं० light <सं० लोकितः (अांग्ल्यां क्त इत्यस्य सर्वत्र ght इति जात gh चानुच्चार्यते।) आं० leukoria (श्वेतप्रदरः), leucoderma (श्वेतकुष्ठः), आर्मे० lois (प्रकाशः)।

३३. एवमेव पदमध्ये पदान्ते च लकारयुक्ताः शब्दा अप्युपलभ्यन्ते। यथा—

सं० √म्लै mlāi. म्लानः mlānas, म्लातः mlātas, मलः malas ग्रीक bla-x-kos, आं० blot (कलङ्कः, मलिनचिह्नम् अत्र मकारो बकारे परिणतः), आं० malice (द्वेषः ईर्ष्या), malign (मैलाइन) कलङ्कितं करोति।

सं० √गल् gal, गलति galati (trickles down), ग्रीक bolē (क्षयामि) पु०उ०जा० quellan (प्रवहति), लिथ० galā-s (अन्त) (आं० gallon अपि एष एव प्रतीयते।), हिं० गलता है। जा० quell-spring, fountain.

सं० √तुल् tul, तोलयति tolayati, तुला tula, ग्रीक tolantatelos (तुला balance), लाति० tallo, पु० आयर, tollain (अपहरामि),[१] गॉ० thulan, आंग्ल्यां toll-tax इति समस्त शब्देऽप्येष एव, √तुल् वर्तते, यतो हि तत्रापि वस्तूनान्तोलनं कृत्वा करः निर्धार्यते। फा० तराजु <सं० तुलायुः (अत्रापि लकारः रेफे परिवर्तितः)।

---

१. तुल् धातोरयमपहरणार्थोऽपि विचारणीयः। तुलापि तु वस्तूनि चौरयति। अतस्तुलतेरयमर्थो लाक्षणिकः प्रतिभाति। अत्र कस्यचित्कवेरियमुक्तिरपि द्रष्टव्या—

**स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।**
**अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥**

# अपश्रुतिः-स्वरपरिवृत्तिः

## ABLAUT[1]

३४. संस्कृतसजातीयासु भारोपीयासु भाषासु स्वरा द्विधा परिवर्तन्ते। १. मात्रात्मकतया २. गुणात्मकतया च।

**३५. मात्रात्मिका अपश्रुतिः**—एषैवांग्ल्यादिषु quantitative gradation अथवा apophony इत्यप्युच्यते। अत्र भारोपीयमूलस्वराणाम् (अ a ए e ओ०) अर्धस्वराणां वा (इ i उ u ऋ ṛ लृ ḷ) ह्रस्वदीर्घाद्यात्मिका गुणवृद्धिक्षयरूपा वा परिवृत्तिर्जायते, तया परिवृत्त्या चार्थभेदोऽपि भवति। यथा—पठनं-पाठनम्। एषा ह्रस्वदीर्घात्मिकापश्रुतिः सर्वासु भरोपीयास्वन्यासु च भाषासु सामान्येनोपलक्ष्यते। परमेतदतिरिक्तास्त्यन्याप्येका स्वरापश्रुतिः, सा 'गुणात्मिकापश्रुतिः' qualitative ablaut) इत्युच्चते।

**३६. गुणात्मिकापश्रुतिः** qulitative ablaut—

अस्यां स्वरपरिवृत्तौ (अ a ए e ओ o) इत्याद्या भारोपीया मूलस्वराः (ह्रस्वा वा दीर्घा वा) परस्परं परिवर्तन्ते। यथा—क्वचिद् अ a स्थाने ए e जायते, क्वचिच्च ओ o स्थाने ए e अथवा अ a जायते। एवमस्यां स्वरत्रयस्यपरिवर्तने-नार्थभेदोऽपि जायते। यतो हि संस्कृते प्रागेव भारोपीयौ ए e ओ o इत्युभावपि मूलस्वरावकारे परिणतावतो नास्त्यत्रास्या गुणात्मकस्वरपरिवृत्तेरवकाशः। केवलमाद्यभारोपीयभाषायां यूरोपीयासु भाषासु च्चास्याः प्रचुरप्रयोगो दृश्यते। यथा—ग्रीक्यां lego (कथयामि) logos (शब्दः), लाति० tego (स्थगयामि,

---

१. abliaut, apo-phony इत्युभावपि पर्यायवाचकौ संस्कृते 'अपश्रुतिः' इति रूपेणानूदितौ। वस्तुतः abliaut इत्येषः शब्दो जार्मण्यभाषाया apophony इति च ग्रीकभाषायाःशब्दोऽस्ति। उभावपि 'अपश्रुतिः' 'अपध्वनि'श्च इत्येतयोर्विकसितौ। यथा—
सं० अप-श्रु(श्लु)-तः>ablaut(जार्मण्यादिवर्गेषु श्रश्लयोः सकारो लुप्यते।)
सं० अप-ध्वनिः>apo-phony (ग्रीकेतालीयवर्गीयासु भाषासु धकारो फकारे परिवर्तते।)

अवृणोमि), toga (आवारकः); आ० man, men, जा० daeh प्र० ए० व०, decker विशेषणम् ।

यद्यप्यस्या गुणात्मिकापश्रुतेः संस्कृतेन नास्ति कोऽपि सम्बन्धः (यतो ह्यत्र ए e ओ o इति मूलस्वरावेव न स्त, तावकारे परिणतौ) तथाप्यन्यासां सजातीय-भाषाणां संस्कृतेन सह तुलनात्मकाध्ययनप्रसङ्गेऽस्या अपश्रुतेर्ज्ञानमावश्यकं, विशेषत-स्तालव्यध्वनियोगेन क्ववर्गस्य चवर्गे परिणतिर्जायत इत्युच्यते । स च तालव्यध्वनि-रकस्मात् कथं प्रादुर्भवतीति ज्ञानायास्याअपश्रुतेर्ज्ञानमावश्यकं यथा हि √कृ, कर्, इति धातोः करोति (वेदे करत्यपि) रूपं जायते । परं तस्यैव चक्रे, चकार, चक्र-मित्यादीनि रूपाणि निष्पद्यन्ते । एषु रूपेषु अभ्यासककारश्चकारे[१] परिणतः । तदर्थञ्च पाणिनिना 'कुहोश्चुः'[२] इति सूत्रं निर्मितम् । अनेन सूत्रेण चक्रे इति रूपं तु सिद्धयति परं ककारस्य चकारे परिणतौ किं कारणमस्ति ? अस्योत्तरं न प्राप्यते ।

अस्य प्रश्नस्योत्तरं प्रयच्छद्भिर्भाषावैज्ञानिकैः स्पष्टीकृतं यदभ्यासेऽकार ओकारो वा ए e कारे परिणमति । शतंवर्गीयासु भाषासु एकारयुक्तः क्व kʷe चकारे परिणमति, केन्तुंवर्गे तु 'क' रूपेणैव तिष्ठति । अतएवैकत्र (ग्रीक्यां) कुकलोस kuklos अन्यत्र (संस्कृते) च 'चक्रम्' इति रूपद्वयमेकस्यएव √कृ कर् kar (कल्) प्रकृतेः जायते ।

**एतत्सर्वं गुणात्मिकापश्रुतेर्विजृम्भितम् ।**

---

१. सामान्यतश्चुत्वे जाते आद्यभारोपीय एकारोऽकारे परिवर्तते ।

२. अष्टाध्यायी ७।४।६२ ।

# स्वरावस्थात्रयी

## गुणवृद्धिसम्प्रसारणानि

३७. प्रत्येकस्य स्वरस्य विशेषतो धातुस्वरस्यावस्थात्रयं सम्भवति। यथा हि

१. गुणो २. वृद्धिः ३. दौर्बल्यम्—(क) क्षयः, (ख) सम्प्रसारणं वा।

१. गुणः—'अदेङ्गुणः[1]' इत्युक्तवता भगवता पाणिनिनाकारस्यै-कारस्यौकारस्य च गुणसंज्ञा निर्दिष्टा। ततश्च अकारईकारयोर्योगेन एकारः (अ+इ=ए) अकारउकारयोर्योगेन च ओकारो (अ+उ=ओ) जायते। अपि च ऋलृवर्णयोर्गुणावस्था अर् अल् (इर् इल् उर् उल्) इत्यस्तीत्युक्तवतैदपि स्पष्टीकृतं यत्—ए ओ इति न मूलस्वरावपि तु सन्धिस्वरावेव। अनयोर्मूलेऽकार एवास्ति।

अत एवैतन्निश्चीयते यदकार एव मूलस्वरस्तस्यैव च 'गुणस्वर' इति संज्ञास्ति।

३८. यतो हि सर्वाणि नामान्याख्यातजानीति स्वीक्रियतेऽतो भाषाविज्ञाने धातुस्वरा एव प्राधान्यतो विवेच्यन्ते। भाषाविज्ञाने सर्वे धातवो गुणस्वरयुक्ता एव सन्तीति प्रतिपाद्यते। तथा च 'भू', 'जी', 'तृ' इत्यादयो ये धातवः संस्कृतव्याकरण इगन्ताः पठितास्तेऽपि वस्तुतो 'भव्', 'जय्', 'तर्', इत्यादिरूपैर्गुणस्वरयुक्ता एव सन्ति। अतएव भाषाविज्ञाने कोऽपि धातुरिगन्तो नास्ति, सर्वेऽपि मूलधातवः गुणस्वरयुक्ता एव विद्यन्ते। भू, जी, तृ इत्यादयस्तु सम्प्रसारणितरूपाण्येव दर्शयन्ति। भगवता पाणिनिनापि "सार्वधातुकार्धधातुकयो[2]"रिति वदता सर्वेषा मिगन्तानामपि धातूनां गुणयुक्तमेव रूपमिति प्रकारान्तरेणोक्तमेव। अत एवात्र प्रत्येकस्य धातोरिगन्तरूपेण सह गुणितरूपमपि प्रदर्शितम्। यथा—भू-भव्, तृ-तर् इत्यादयः।

यतो हि गुणोवृद्धिदौर्बल्यं वा (सम्प्रसारणं क्षयो वा) इत्यवस्थात्रयमज्ञात्वा भाषाविज्ञाने, विशेषतो भाषाणां तुलनात्मकाध्ययने गतिर्नास्त्यतएवात्र संक्षेपतः एतदुक्तम्।

---

१. अष्टाध्यायी—१।१।२।

२. सैव ७।३।८४।

३९. वृद्धिः—'वृद्धिरादैच्'[1] इत्यनेनाकारस्यैकारस्यौकारस्य च वृद्धिसंज्ञेति निर्दिष्टम्। यथा मूलरूपेण 'अ' एव मूलगुणस्वरस्तथैव 'आ' एव मूलवृद्धिस्वरोऽस्ति। 'ऐ' (आ+ए), औ (आ+ओ) इत्यत्राप्याकार एव मूलम्। अत 'आ' एवैको वृद्धिस्वर इति स्वीक्रियते।

४०. दौर्बल्यम्—स्वराणां दौर्बल्ये 'क्षयो' वा 'सम्प्रसारणं' वा इत्यवस्थाद्वयं जायते। तद्यथा—

| गुणः | वृद्धिः | क्षयः-लोपः | |
|---|---|---|---|
| normal or medium grade | Strong grade | Weak grade | |
| हन् घन्, हनिष्यति | जघान | जघ्नतुः | वृत्रघ्नः |
| पद् पद्यते | पादयति उत्पादयति, | | उपब्दः |
| दभ् (वै०) दभ्नोति | अदाभ्यः | अदब्ध | अद्‌भुत |
| कृ, कर् करोति (वै० करति) | चकार, कार्यम् | | चक्रे, चक्रम् |
| यज् यजति | इयाज | इष्ट (सम्प्रसारणम्) | |
| वह् वहति | उवाह | ऊढ | ,, |
| नामन् | नामानि | | नाम्नः। |

४१. (क) यूरोपीयासु भाषास्वपि गुणवृद्धिदौर्बल्ययुक्तान्यथवैतेषामन्यतमं रूपमुपलभ्यते। यथा—

सं० जानु jānu, फा० ज़ानु (वृद्धिः) ज्ञुः jnu, प्रज्ञुः, संज्ञुः (क्षयः) आंग्ल्या knee— क्नी, 'नी' इत्युच्चार्यते (क्षयः।)

सं० ज्ञा jñā (वृद्धिः) विज्ञः jnas (गुणः), आंग्ल्या know क्नो 'नो' इत्युच्चार्यते (गुणः)।

(ख) यणः (यवरलनमानाम्) विशेषतः र-ऋ ल-लृ, न-अ, म-अ इति सम्प्रसारणितानि वा रूपाणि संस्कृत एवोपलभ्यन्तेऽन्यासु सजातीयभाषासु तु ऋ r लृ ! इत्येतयोः स्थाने अर् ar, इर् ir, उर् ur, अल् al, इल् il, उल् ul, अनुनासिकयोरुत्पन्नस्याकारस्य च स्थाने लातिन्यां इन् in, इम् im अन्यत्र च नैकानि रूपाण्युपलभ्यन्ते। यथा हि—

---

१. अष्टा १।१।१।

सं० √पृ pṛ, पर् par, पृणाति, पिपर्ति, पूर्ण pūrṇa, >आं० full, fill.

सं० वृकः vṛkas, आं० wolf.

सं० √गम् gam <*$g^{w}$em, गतः, लाति० ventus, लाति० आं० invent, invention, advent.

सं० शतम् śatam>*$k_{\nu}$emtos, लाति० centum (पूर्वं 'केन्तुम्' इत्युच्चार्यते स्म, पश्चाच्चास्योच्चारणं 'सेन्तुम्' इति जातम्।) आंग्ल्याञ्च 'त'कारस्य 'ट'कारोच्चारणेन 'सेण्ट' इत्युच्चार्यते।

'गतः', 'शतम्' इत्युभयोरपि शब्दयोरन्तस्थमकारोऽकारे परिणतो लातिन्याञ्च इन in इत्येवास्ति।

# अनुनासिकध्वनयः

## ङञणनम

४२. 'ङञणनम' एते पञ्चध्वनयोऽनुनासिका इत्युच्यन्ते। यतो ह्येतेषां ध्वनीनामुच्चारणे श्वासो मुखमार्गेण सहैव नासिकारन्ध्राभ्यामपि निस्सरति, अतएवैते पञ्चध्वनयोऽनुनासिका (नासिकामनुसृत्य निःसृता) इति व्यपदिश्यन्ते। एते सर्वेऽनुनासिकध्वनयः संस्कृत एव विद्यन्ते। अन्यासु सजातीयभाषासु तु नमावित्यनुनासिकध्वनिद्वयमेवोपलभ्यते। अवेस्तायामन्यास्वपि भाषासु च कवर्गात्पूर्वं नमौ'ङ्' इत्युच्चार्येते, किन्त्वन्यासां भाषाणां वर्णमालायां ङ् ञ् ण् इत्यनुनासिकत्रयस्य लेखनाय नास्ति कोऽपि संकेतविशेषः। अतएव भाषावैज्ञानिकग्रन्थेषु तेषां लेखनाय n इत्यस्योपरिष्टादधस्तादुभयतश्च विन्दुसमावेशेनन (ṅ, ṇ, ñ) तत्कार्यं निर्व्यूढम्।

येषु येषु धातुषु शब्देषु वा संस्कृते नकारो मकारो वा विद्यतेऽन्यासु सजातीयभाषास्वपि तत्र तौ तद्वत्स्थितौ। यथा हि—

४३. **पदादौ न् n**

सं० नू nū (वै०, अद्य, अधुना), ग्रीक nu, आं० now.

लौकिकसंस्कृते दीर्घ ऊकारान्तोऽद्यार्थकोऽधुनार्थकश्च 'नू' इति निपातोऽप्रयुक्तोऽविदितश्च, परं वेदेऽधुनार्थकोऽद्यार्थको वा एष 'नू' पदे पदे प्रयुक्तः।

**'नू च पुरा सदनं रयीणां जातस्य च जायमानस्य क्षाम्।'**[1]

अस्मिन्मन्त्रे एतादृशेष्वन्येष्वपि मन्त्रेषु चाधुनार्थको 'नू' इति निपातः वेदेषु पदे पदे प्रयुक्तः। संस्कृते च सर्वथाज्ञातो विस्मृतश्चायं 'नू' एवांग्ल्या now अस्ति। ये शतशोऽथ सहस्रशो वैदिकाः शब्दाः संस्कृतेऽन्यासु च भारतीयासु भाषास्वप्रयुक्ताः परं यूरोपे सुप्रचलिता एष 'नू' निपातोऽप्यन्यतमं तन्निदर्शनम्।

एवमेव 'नू' इत्यस्यैव विस्तारितं 'नूनम्'[2] (नम् प्रत्ययेन युक्तम्) रूपमपि

१. ऋग्वेद, १।९७।७।

१. "न नूनमस्ति नो श्वः कस्तद् वेद यदद्भुतम्।"—ऋक् १-१७०-१
'न नूनमस्त्यद्यतनम्'। निरुक्त—१-२

वेदेषु सामान्यतोऽद्यार्थकमधुनार्थकं वा विद्यते। क्वचिच्चावधारणार्थमप्यस्ति, परं लौकिकसंस्कृते नूनमिति निपातस्याप्यधुनाद्य वेति मुख्योऽर्थः सर्वथा विस्मृतः। लोके तु 'नू' इति स्थाने 'नु' ह्रस्व उकारान्तो निपात एव प्रयुज्यते। वेदे संदेहार्थकोऽप्ययं, परं लोके तु निश्चयार्थक एव। नवीन, नूतन, नूत्न[1] (लोकेऽप्रयुक्तः) इत्येतान्यपि 'नू' इत्यस्यैव विस्तारितानि रूपाणि।

सं० नव, नव्य nava, navya, ग्रीक novo-s, लाति० neo-s, आं० neo, new. प्रभृतीनि सर्वाणि रूपाणि वैदिका'न्नू' 'नु' इत्यस्माद्वा निपाताज्जातानि। आयरियां nüe, आर्मेन्यां nor, (र प्रत्ययः), लिथ्वान्यां nauyas, पु० बुल्गारिया novu, गाँथिक्यां nauji-s, फारस्यां नो, हिन्द्यां नया, राजस्थान्यां नवां इत्यादीन्यनेकानि रूपाणि नानासजातीयासु भाषासु जातानि।

सं० न na, नो no, नेत् net (वै०), निषेधार्थको निपातः, ग्रीक, लाति० ne, net लिथ० ne, गाँ० ni, फा० ना, आं० no, none, not <सं० नेत् net. हि० न, नहीं, ना।

सं० नृ nṛ नर् nar ग्रीक anor, (प्रथमैकवचने), फा० नर्।

सं० नामन् nāman, नाम nāma, अवे० फा० नामा ग्रीक onom लाति० nomen, आं० name, nominal, nominate, पं० नाँ०।

सं० नाम्नः nāmnas, नाम्ने nāmne. नाम्नि nāmni ला० nomin, (स.ए.व). आं० nominee (कस्यचिन्नाम्नि नियुक्तः पुरुषः। anonymous <ग्रीक an-onumus <an-onom, <सं० अ-नाम।

सं० √नज़ी naji, <*negive, सं० नग्न nagna, लाति० nudu-s <*no (g) vedó-s, गाँ० naqoths जा० nackt, आं० naked nude अप्ययमेव। (लातिन्यां आंग्ल्यञ्च 'वत'प्रत्ययः, परं संस्कृते 'त'स्य स्थाने 'न' प्रत्ययो जातः।) लिथ्० nuga-s, पु० बुल्गा० nagū, फा० नंगा (कुख्यातः, दुश्चरित्रः) हि० नंगा।

सं० नखः nakhs. नखरः, आं० nail.

---

१. वेदे मूलतः 'नू' इत्यपि निपातोऽस्तीत्यजानता कात्यायनेन 'नवस्य नूरादेशस्त्नप्तनप्खाश्च प्रत्ययाः'। (वा० ५-४-३०) इति वार्तिकेन नवस्य नूरित्यादेशो विहितः।

सं० नः nas (अस्माकम्) इतालीयबाल्टोस्लाविक्यवर्गीयासु भाषासु nos.

सं० नक्तम् naktam, लाति० nox, लिथ्० nekti-s, गॉ० naths, पु०उ०ज० naht, आं० night, जा० nacht (नाख्त, अत्र ककारोऽपि सुरक्षितः, परं 'ख' उच्चार्यते ।)

सं० नीडः nīḍas<*ni-zd-o, नि-षद् (यत्र निषीद्यते, संस्कृते भारोपीयो zd ष्दो वा दकारे परिवर्तते, पूर्वस्वरञ्च दीर्घीकरोति ।) लाति० nidū-s (संस्कृते लातिन्याञ्चैक एव विकासक्रमो द्रष्टव्यः ।) आर्मे० nist, पु०उ०जा०, आं० nest (अत्र √सद् धातोः सकारः सुरक्षितः ।) सं० 'निषद्या' शब्दोऽप्यस्य सोदरः ।

सं० नभः nabhas (मेघः, वातावरणञ्च), ग्रीक nephos, nephele आं० nebula, पु० बुलगा० nepo (वातावरणं नभश्च ।)

सं० नि ni (निम्नार्थको निपातः), नितरं nitar, नितराम् nitarām, पु०उ०जा० ni-dar, जा० nieder, niedrig (निम्नतरः जार्मण्यां स्वार्थिको 'गः' <'कः' प्रत्ययो जायते) । आं० near[1]. (जार्मण्यां तकारो दकाररूपेण सुरक्षितः ।)

**पदमध्ये पदान्ते च नकारो यथा—**

४४. संस्कृते (पदादिवत्) पदमध्ये पदान्ते च येषु शब्देषु नकारो विद्यते, तेषु शब्देष्वन्यास्वपि भाषासु तत्र नकारः सुरक्षितः । यथा—

सं० सन sana, सना sanā, (प्रत्नार्थको निपातो वेदे बहुप्रयुक्तः । लोके तु सनातनः, सनकः, सनन्दनः सदृशेषु नामवाचकशब्देष्वेव सुरक्षितः ।) ग्रीक hene लाति० senex, senem, आं० senior, senate a council of old men.

---

१. हिन्दी व्रजभाषाया 'नियर्', 'नियरे' इत्यनेन नास्ति कोऽपि आंग्ल्या near इत्यस्य सम्बन्धः । सं० निकृत>निकट-तर>निअर, निअरे, नियरे। पञ्जाब्या 'नेड़े' इत्येतस्य व्रज 'नियरे' इत्येतेनापि नास्ति कोऽपि सम्बन्धः, स तु सं नेदीयस् <*najdas नज्दस् <*न सद्, सं० न षद्>नष्द्> नज्द् (विलुप्यमानस्य षकारस्य क्षतिपूर्त्यै पूर्ववर्तिनोऽकारस्येकारो जातः ।) पारस्या 'नज्द' शब्दे भारोपीयमूलरूपं सुरक्षितम् । अनेनैव 'नज्द' शब्देन पं० 'नेड़े' इति निष्पन्नम् ।

## म m

४५. (क) येषु 'धातुषु शब्देषु च संस्कृते मकारो विद्यते तत्रान्यास्वपि भाषासु प्रायशो मः सुरक्षितः।

(ख) परं ग्रीक्यादौ पदादौ संयुक्तो बकारो बकारे परिणतः।

पूर्वं तावदत्रैतादृशा धातवः शब्दाश्चोपस्थाप्यन्ते यत्र मकारः सुरक्षितः।

**पदादौ मकारो यथा—**

सं० मा mā, (माम् mām) ग्रीक me, लाति० mē, गॉ० mi-k, जा० mich (मिख्, उभयत्र स्वार्थे 'क' प्रत्ययः) आं० me, फा० मा (अस्मान्, 'अस्मे' इत्येतस्मान्निष्पन्नम्।)

सं० मे mē (मम), आं० my.

सं० मा mā (निषेधार्थको निपातः), ग्रीक mē, फा० म।

सं० मातृ mātṛ, मातर् mātar, माता mātā (प्र. ए. व.), ग्रीक mētēr, लाति० mater, पु० आयर० mathir, पु. उ. जा. muotar, जा० mutter, आर्मे० mair, लिथ्० mote (पत्नी), पु० बुल्गा० mati, फा० मदर्, आं० mother, हि मा, (आंग्ल्या मात्रर्थकं mummey, mammā, अपि √मा इत्यस्यैवानुकरणवाचाकं द्विरुक्तं रूपम्। बालकैःप्रयुज्यमानमेतद्रूपमपि सं० लक्ष्मीवाचकस्य 'मा' इत्यस्य हिन्द्या मातृवाचकस्य 'मां' इत्यस्य च प्रतिरूपमेवास्ति। 'mama' सदृशाः शब्दा आंग्ल्यां आयरीयाद्याभ्यो भाषाभ्य आगताः।

सं० √मन् (अवबोधने) man, मतः <man-to-s, ग्रीक auto-mato-s, <स्वतः मतः (आं० automatic अप्येतस्मादेव) लाति० comment, गॉ० ge-mundus.

सं० मनुः manu-s, मानवः, गा manna <manvo, आं० man, men (ब. व.)।

सं० मतिः mati-s. लाति० mens <*mentis, आयर ermitiu (आदरः), लिथ्० at-mintis (स्मृतिः)।

सं० म्ना mnā (अभ्यासे) म्नातः, ग्रीक mnē-sō (लृटि), आर्मे० mnam (I remain), आं० re-main. फा० मान्दन्।

सं० √मृ mṛ, मर्, म्रियते, मरति, ममार, मृतिः, लाति० mors, mortis (मृतेः, मृत्यौ)। आर्मे, पु०उ०ज० mord, आं० mortal, mortāl, mortam, murder, लिथ० mretis, पु० बुल्गा० sn-mritis, फा० मुर्दन्, मुर्दा।

सं० मर्तः (वै०), मर्त्यः, फा० मर्द।

सं० √मृज् mṛj < *melg$^{w}$, मार्ष्टि, मार्ज्मि, मार्जनम्, मृग्यते, मृज्यते, मार्गः, ग्रीक amelgno, लाति० mulgo, जा० milch, पु० बुल्गा० mluza, आं० milk (दुग्धं, दोहनञ्च, यतो दुग्धमपि स्तनान्मार्जयित्वा निस्सार्यते (थनो को मसल कर दूध निकाला जाता है। अत्रार्थसङ्कोचो जातः।)

सं० मध्य madhya. गाँ midjis, पु० उ० जा० mitti, आं० mid, midium, midius.

सं० मित्रः (सूर्यः) mitras, मित्रम् (प्रियः), अवे० मिथ्र फारस्यां, 'मिहर'[1], मेह्र' > मिह्र्, मिह्रबान्, मिह्रबानी मित्रं, कृपा सूर्यश्चेत्यर्थत्रयम्।

सं० √मू mū (बन्धने), मूकः लाति० mutus, म० आं० muet, आं० mute (म्यूट्-'मूकः', संस्कृते 'कः' प्रत्ययो लातिन्यादिषु च क्त-तः।)

सं० मांसः mānsas, गाँ० mimza, आर्मे० mis (अत्र नकारोऽनुनासिको वा लुप्तः), पु० बुल्गा० menso, आं० meat < me-eat, हि० मास (अत्राप्य-नुनासिको लुप्तः।)

सं० मन्या[2] manyā, पु० आं० manu, आं० mane[3] (पशुग्रीवायाः केशरः।)

सं० मधु madhu, ग्रीक methu, आं० mead (आक्सफोर्डकोशेऽस्य मुख्योऽर्थो मधु-क्षौद्रं-मधुरपेयञ्चेति दत्तम्। सम्प्रति मधुनिर्मितमदिरार्थे रूढोऽयं शब्दः। संस्कृतेऽपि 'मधु' मदिरार्थकमप्यस्ति।) फा० मय।

---

१. वैदिकः सूर्यार्थको मित्रशब्दोऽवेस्तायां मिथ्रो जातः। अवेस्ताया मिथ्र एव 'मिहिरो' भूत्वा पुनर्लौकिकसंस्कृते समागतः। एवं संस्कृतस्यैवेकः शब्दः पूर्वं तावदीरानं गत ईरानाच्च स्वं रूपं किञ्चित्परिवृत्य पुनः संस्कृते समागतः। मित्रः > मिथ्र > फा० मिह्र् सं० मिहिरः।

२. पश्चाद्ग्रीवासिरा मन्या। अमरकोषः — २।६।६५।

३. Primary sense probe neck—Oxford. Sho. Eng. Dec.

सं० मर्यः maryas (वै०), नरः, आं० marry (to constitute as man and wife according to the laws and customs of a nation.) marriage (संज्ञा), अनेनार्थेन ज्ञायते यद् marry, marriage इत्यनयोः शब्दयोः मुख्योऽर्थो मर्येण—पत्या सह पत्न्याः सम्बन्धस्थापनमेवास्ति । एष वैदिको 'मर्य' शब्दो लौकिकसंस्कृते तु विस्मृतः, परमांग्ल्यां संरक्षितः सुप्रयुक्तश्च ।

**पदमध्ये मकारो यथा—**

४६. येषु धातुषु शब्देषु च संस्कृते पदमध्ये मकारोऽस्ति, तत्रान्यास्वपि भाषासु मकारो विद्यते । यथा—

सं० √स्मि *smey स्मयते smayatē, ग्रीक meidaō (स्मये), philommeedēs (प्रियस्मयः), लाति० mīru-s (विस्मयकरः), miracle (ग्रीक्यां लातिन्याञ्च आद्यः सकारः लुप्तः,) लेटिश० smit (हासः), पु० बुल्गा० smijati. फा० तबस्सुम् <तपः-स्मयः, हिन्दी मुस्कान । (रामचन्द्रवर्मासम्पादिते हिन्दीमानककोषे 'मुस्कान' शब्दोऽरबीभाषायाः प्रदर्शितः । परं यथा सं० 'श्मश्रु' हि 'मुच्छ' इति जातस्तथैव सं० 'स्मयक' एव 'मुस्कान' इति जातः । उभयमत्र समयोस्थानविपर्ययोऽवलोकाते ।) यथा च ग्रीक्यां लातिन्याञ्च पदादौ मकारोऽस्ति, तथैव हिन्द्यामपि । आं० smile <सं० स्मेरः ।

सं० ओज्मन् (वै०) ojman (ओजयुक्तः, शक्तिः) <*aug$^{w}$emen, सं० उग्र ugra ग्रीक लाति० augmen, augmen-tum, आं० augment[1] (परिवर्धनम्), लिथ्० augmun (वृद्धिः growth.)

सं० हेमन् hēman (हेमन्तर्तुः) <*g$_{h}$hey-men, ग्रीक xeima (झंझावातः) gemōn (शीतकालः), लिथ्० zema, पु० बुल्गा० zima अवे ज़िम फा० ज़िमिस्तान्, ज़िमखाना हि० जमना ।

---

१. यद्यपि संस्कृतवद् ग्रीक्यादिष्वपि भूतकालद्योतकानां लङादिलकाराणां रूपाणि निर्मातुं धातोः पूर्वमड् (अ a, e) आगमः augment विधीयते । परं संस्कृतस्य 'आगम'शब्देन सह augment शब्दस्य नास्ति कोऽपि सम्बन्धः । संस्कृतस्य ओज्मन् आंग्ल्याश्च augment शब्दौ समानौ ।
सं० उग्र शब्दे भारोपीयो 'ग'कारोऽपि सुरक्षितः ।

सं० सम sam-a, ग्रीक a-ma (तत्क्षणम्), ham-3. आं० same.

सं० सामि sāmi (अर्ध), लाति०, आं० same.

सं० क्षम्, क्ष्मा kṣam (वै० भूः) ग्रीक xam-ai, dus-ximo-s (दुष्पुरुषः), लाति० heim, hum-u-s, humunus आं० human (क्ष्मापुत्रः, भूसुतः, 'क्ष्मा' इत्यस्य ताद्धितं रूपम्।)

सं० अंसः ams गॉ० amsas. आर्मे us. आर्मेन्यां सकारात्पूर्वौं मनौ लुप्येते।) उम्बे anse.

**नमयोर्व्यत्ययः—**

४७. संस्कृतेऽन्यासु भाषासु च नमयोर्व्यत्ययोऽपि दृश्यते। यथा हि—

सं० तम् tam, (द्वि०ए०व०) ग्रीक to-n (ग्रीक्यां पदान्ते मकारस्य नकारो जायते), लाति० istu-m, गॉ० thau-a, लिथ० tān (ताँ), पु० बुल्गा० tu, पु०उ०जा० den, ए० स० don-e. ग्रीकवत् संस्कृतेऽपि क्वचिन्मकारो नकारे परिवर्तते। यथा वैदिकस्य 'दम्' शब्दस्य षष्ठ्यैकवचने'दन्' इति जायते। अनेनैव 'दन्' शब्देन सह पति शब्दस्य अलुक्समासे नकारस्य च परसवर्णे 'दम्पतिः' द्विवचने च 'दम्पती' इति जायते। अस्येव 'दम्' शब्दस्य ग्रीक्यां षष्ठ्यैकवचने देस् des इति जायते, तस्य च तथैव पति शब्देन सह समासे despotēs इति जातः। अत्रापि संस्कृतवत् षष्ठ्यैकवचनस्यालुक्समासः।

एवमेव गम् धातोः लुङि् मध्यमपुरुषैकवचने 'अगन्' इति जायते। अत्रापि मकारस्य नकारो जातः।

एवमेव पदान्ते संस्कृतस्य नकारआंग्ल्यां क्वचिन्मकारे परिणमति। यथा—

सं० फेनः phēnas, आं० foam.

सं० बुघ्नः budhna-s, आं० bottom (जार्मण्य boden इत्यत्र तु नकार एवास्ति।) लाति०fundus, (आं० foundation अपि एतस्मादेव।) ग्रीक pundza.

# नमावाक्षरिकौ

४८. यथा यवरलाः इउऋलृ इत्येतेष्वाक्षरिकेषु स्वरीभूतेषु वा रूपेषु परिणमन्ति परिस्थितिविशेषे, तथैव, नमावप्याक्षरिकेषु रूपेषु परिणमतः। संस्कृते नमयोः स्थाने अकारो जायते। लातिन्यां in, en, im, em इति दृश्येते। अन्यासु यूरोपीय-भाषास्वप्येताएव स्वरौ दृश्येते। गम्, हन्, जन्, नम् इत्यादि धातूनां गतः हतः, जातः, नतः इत्यादीनि निष्ठान्तानि रूपाणि दर्शयन्ति यदेतेषां धातूनां नमावक्षरिकौ स्तः। परं सर्वेषां धातूनामन्तिमौ नमावाक्षरिकाविति तु वक्तुं न शक्यते। 'गम्' धातोः निष्ठान्तं रूपं गत इति जायते परं 'भ्रम्' धातोः 'भ्रान्त' इति निष्पद्यते। अत्रानुनासिको मकारोऽकारे नैव परिणतः।

यत्र संस्कृते नमावाक्षरिके रूपे परिणमतः तेष्वेव शब्देषु अन्यास्वपि सजातीयासु भाषसु तयोस्तादृशो विकारो दृश्यते। यथा—

सं० √गम्, *gʷem, गतः, गतिः, ग्रीक bato-s, basi-s (अत्र गकारो बकारे द्वितीयपदे च तकारोऽपि सकारे परिणतः।) आं० basic अप्येष एव। लाति० in-ventio आं० invention सदृशेषु, शब्देषु लातिन्या i ō प्रत्ययान्ते आंग्ल्यां n युज्यते। tion सम्भूय च 'शन्' इत्युच्चार्यते।

सं० √हन् han, *gʷhen, हतिः hati-s, हतः hata-s, अवे० जत jata ग्रीक phato-s, पु० बुल्गा० zeuti आं० fatal अप्येष एव।

सं० √शंस् śans, *kᵥenś, शस्त śasta, अवे० सस्त (कथित, मूल्यांकित), लाति० cēnsu-s<censtu-s. आं० census (जनगणना।)

सं० √तन् tan, तनुते tanutē, तत tata, ग्रीक ta-to-s, लाति० ten, ten-tu-s.

सं० ततिः tatis, ग्रीक tasi-s, लाति० tentio.

सं० √रम् ram, रतः rata-s, रतिः ratis, ग्रीक erato-s (प्रियः, lrotic, प्रणययुक्त, रतियुक्त, शृङ्गारिक), लिथ्, rimti, rimta-s.

# स्पर्शध्वनयः

४९. 'कादयो मावसानाः स्पर्शाः' इत्युक्त्वा संस्कृते कु चु टु तु पु इति पञ्चवर्गीयाः पञ्चविंशतिसंख्याकाः स्पर्शाः सन्तीति प्रतिपाद्यते। परमन्यासां सजातीयभाषाणां संस्कृतेन सह तुलनात्मकाध्ययनप्रसङ्गे नैतावता कार्यं सेत्स्यति। तत्कृते आद्यभारोपीयभाषायाः स्पर्शध्वनयस्तेषु जातं परिवर्तनपरिवर्धनादिकमप्यवगन्तव्यम्।

आद्यभारोपीयभाषायां त्रिविधः कवर्गः, तवर्गः पवर्गश्चेति वर्गत्रयेषु विभक्ताः—

१. क (क्य, क्व), ख, ग, घ।

२. त, थ, द, ध।

३. प, फ, ब, भ।

इति द्वादशसंख्याकाः स्पर्शध्वनय आसन्निति स्वीक्रियते। एतेषां पञ्चमवर्णा ङ, न, मा 'अनुनासिकाः' सन्ति। तेष्वपि ङकारस्तु कवर्गे परत एवोच्चार्यंते लिख्यते च। नमावेव स्वतन्त्रावनुनासिकौ। c. j. चजाविति चवर्गीयौ ध्वनी भारोपीयात्तालव्यस्वरयुक्तात् क्वे $k^we$, ग्वे $g^we$ इति ध्वनियुग्माज्जातौ।

छकारस्तु भारोपीयात् 'स्क' इति ध्वनेर्विकसितः। झकारश्च ध्यकाराद्ध्यकाराद्वा जातःइति तु सं० उपाध्यायः>हि. ओझा सं० सन्ध्या>हि. सांझ, सं० वन्ध्या>हि. बांझ, सदृशाः शब्दा एव सुस्पष्टं प्रतिपादयन्ति। क्वचिद्घकारदपि झकारो जातः।

टवर्गश्च द्राविडीवाक्प्रभावतः तवर्गाद्विकसितः। चछौ ch, j, टडौ t, d, च ट्यूटानिकवर्गेऽपि स्वातन्त्र्येण विकसितौ। एवं संस्कृते शकारोऽपि भारोपीयात् क्यकाराद् विकसितः। षकारोऽपि नवागतः। भारोपीयौ द्विविधावपि z z जकारौ संस्कृते लुप्तौ। संस्कृते हकारोऽपि घधभेष्वन्यतमाज्जातः। आंग्लीयो h (ह) ककारात् खकारोभूत्त्वा जातः। आंग्ल्यां शकारः कथमुद्भूत इति तु चिन्त्यम्[1]। एवमनुनासिकानां विवेचनं यथा सुकरम्, न तथा स्पर्शानामिति विज्ञेयम्।

**त्रिविधः कवर्गः—क k *क्य $k_y$ *क्व $k^w$ वर्गाः**

५०. अष्टादशशताब्द्यां यदा यूरोपे संस्कृतस्य प्रवेशो जातस्तदा संस्कृतस्य कवर्गस्य स्थाने ग्रीक्यां क्वचित्कवर्गं क्वचित्पवर्गं क्वच्चित्तवर्गं विलोक्य फ्रान्त्स बॉप्पप्रभृतिभिः प्रत्नैः पाश्चात्त्यैर्भाषावैज्ञानिकैर्ज्ञातं यद् यूरोपीयासु भाषासु नास्ति ध्वनीनान्ता-

---

१. १ sk एवाङ्ग्ल्यां प्रायशः sh जातः, परं नास्त्यस्य संस्कृतस्य 'श' कारेण सह कोऽपि सम्बन्धः।

दृश्येकरूपता यादृशी संस्कृतेऽस्ति । अतएव तैर्निर्धारितं यत् संस्कृतभाषैवाद्यभारोपीयभाषायाः सर्वांशेन प्रातिनिध्यं करोति । एतदवधार्य सं० चक्रम् cakram, ग्रीक kuklos कुक्लोस, सं० ददर्श dadarśa ग्रीक dedorke देदोर्के सदृशेषु शब्देषु संस्कृते शकारश्चवर्गो वा यूरोपीयासु भाषासु च तेषां स्थाने कवर्गो दृश्यते, तत्रापि तैः संस्कृतरूपाण्येव मूलरूपाणीति पूर्वं प्रतिपादितम् ।

परं किञ्चित्कालानन्तरमेव भाषावैज्ञानिकैर्ज्ञातं निर्धारितञ्च यच्छकारचवर्गौ भारोपीयात् क्य $k_y$ इत्यस्मात्तालव्यस्वरयुक्तात् क्व $k^w$ इत्यस्माच्चाविर्भूतौ । अतएवाधुनैतत्स्वीक्रियते यदाद्यभारोपीयभाषायां कण्ठ्यः, कण्ठतालव्यः कण्ठौष्ठ्यश्चेति त्रिविधः[1] कवर्ग आसीत् ।

कण्ठ्यः कवर्गः—क k ख kh ग g घ gh इति ।

तालव्यः क्यवर्गः—क्य $k_y$ ख्य $k_yh$ ग्य $g_y$ घ्य $g_yh$ इति ।

ओष्ठ्यः क्ववर्ग -- क्व $k^w$ ख्व $k^wh$ ग्व $g^w$ घ्व $g^wh$ इति ।

तालव्यकवर्गे y यकारस्य ओष्ठ्यकवर्गे च वकारस्य स्पष्टतयोच्चारणं नाभूदपितु $k_y$ क्यकारे तालव्यांशश्रवणं $k^w$ क्वकारे च ककारस्य किञ्चिद्वर्तुलीभावेनोच्चारणमभूत् ।

१. **कण्ठ्यः कवर्गः**—संस्कृतावेस्तिकग्रीकलातिनलिथ्वानीयपारस्याद्यासु सर्वास्वपि संस्कृतसजातीयभाषासु कण्ठ्यः कवर्गः (क k, ख kh, ग g घ gh) प्रायशः स्वरूपेण सुरक्षितः ।

२. **तालव्यः क्यवर्गः**—एष वर्गो द्विधा विभक्तः—

क. केन्तुंवर्गीयग्रीकलातिन्याद्यासु भाषास्वेष वर्गः प्रायशः स्वरूपेण स्थितः ।
*$k_y$⋯क k⋯$k_yh$⋯ख⋯$g_yh$—ग इति ।

ख. **शतंवर्गीयसंस्कृतावेस्तिकाद्यासु भाषासु***क्य $k_y$ > श ś ⋯स s सञ्जातः। एवमेव * ग्य $g_y$ संस्कृते जः j अन्यत्र ज़ z पारस्यादिषु क्वचिद् दः d क्वचिच्च ज़ः z जायते । *घ्य $g_yh$, संस्कृते ह अन्यत्र च ज, ज़ z रूपेण परिणतः ।

---

१. आधुनिकास्तु क्यवर्गः क्ववर्गश्चेति वर्गद्वयेनैव निर्वाहो जायते इति वदन्ति, परं शुद्धकवर्गस्यावश्यकतास्त्येव ।

३. **ओष्ठ्यः *क्व** $k^w$ **वर्गः**—एष ववर्गोऽपि द्विधा विभक्तः—

क. केन्तुंवर्गे क्ववर्गोऽपि प्रायशः स्वरूपेण स्थितः ।

ख. शतंवर्गे क्ववर्गो रूपद्वयमवाप्तवान् ।

अ. इ i, ए e, y इति तालव्यस्वरयुक्तः क्व $k^w$e च c जायते। एवमेव ग्व $g^w$ ज j, घ्व $g^wh$ श्च अवेस्तादिषु ज j zकारे संस्कृते च हकारे परिणमति।

ब. तत्र तालव्यस्वरहीनः क्ववर्ग क $k^w$ ख $k^wh$ ग $g^w$ $g^wh$ इति स्वरूपेणैव स्थितः ।

भारोपीयः क्वः $k^w$ परिस्थितिविशेषे यदि कदाचित्तालव्यस्वरेण युक्तो भवति तदासौ 'च' कारे परिणमति । एवञ्चाभ्यासेऽकारः सर्वत्राद्यभारोपीयभाषायामेकारे परिणमति। तथा च √कृ kṛ, kar धातोः लिटि *केक्रे, *$k^w$r $k^w$re इति रूपमासीत् । तालव्यस्वरयोगेन च अभ्यासस्य 'क्वे' $k^w$e चकारे परिणतः, एवं क्वेक्रे*$k^w$-kre···सं० चक्रे इति जातम् ।

एवं निश्चीयते यच्छतंवर्गीयासु भाषासु चकारः न स्वतन्त्रो ध्वनिरपि तु परिस्थितिविशेषे तालव्यस्वरयोगेन *क्वे $k^w$e चकारे परिणतः। एवमेव क्यकारोऽपि ऊष्मत्वे शकारे सकारे वा परिणतः संस्कृतेऽपि—दृक्, दृश्, दृग्भ्याम्, दिक्षु, वाक्, वाचः सदृशेषु शब्देषु कचयोः कशयोर्वा वैकल्पिकः प्रयोगो दृश्यते। तस्यापि मूलमस्मिंस्तालव्यभाव एव निहितम्[1] ।

पश्चाद् बॉप्पप्रभृतिभिः प्रलैर्भाषावैज्ञानिकैरप्यस्य तालव्यनियमस्य याथार्थ्यं स्वीकृतम् । ग्रीक्यां 'क्य', 'क्व' वर्गीयककारस्य क्वचित्स्वरूपेण विद्यमानत्वे संस्कृते च तयोः शकारे चकारे च परिणतावपि संस्कृतस्य प्रत्नतायां व्याघातो न जायते ।

---

१. क्यवर्गस्य शतंवर्ग ऊष्मत्वे (क्यकारस्य शकारे इति यावत्) परिणतिमवलोक्य 'केन्तुं' शतञ्चेति भाषावर्गयोः पौर्वापर्यभावो न शङ्क्यः । यतो ह्यादावेव भारोपीयाद्यभाषाया इमे उभे विभाषावर्गे प्रादुरभूताम् । आद्य भारूपाभाषाभाषिणः केचिज्जनाः 'क्य' इत्यस्य श-स इत्यूष्मोच्चारणमकुर्वन्नपरे तु क इत्येव । गच्छति काले यदा त आद्यभारोपीयभाषाभाषिणो नानादेशान् प्रतस्थुस्तदा 'श'भाषिणः प्राच्यक्षेत्रं 'क्य' भाषिणश्च पाश्चात्त्यप्रदेशमधितस्थुः । यद्यपि केचित् 'केन्तुं'भाषिणोऽपि पूर्वस्यामल्बानियाक्षेत्रं प्रावसन् ।

# कण्ठ्यः कवर्गः

५१. क. कण्ठ्यः कवर्गः (कः खः गः घः) आद्यभारोपीयभाषायां यथासीत् संस्कृते तद्वदेवास्ति। ख. ग्रीकलातिनावेस्तिकादिष्वपि प्रायेण तद्वदेव सुरक्षितः। ग. ग्रीकलातिन्ययोस्त्रिविधस्यापि कवर्गस्य पवर्गेण सह व्यत्ययोऽपि दृश्यते।

घ. ग्रीक्याञ्च क्वचित् कवर्गस्तवर्गोऽपि जायते।

ङ. सघोषमहाप्राणा घधभाः केवलं संस्कृत एव सुरक्षिताः। च. अन्यत्र संस्कृतवर्गीयभ्रातृवर्गीयासु भाषासु तेऽल्पप्राणा गदबाः सन्ति। छ. परं फ्रेतृवर्गीयासु ग्रीकलातिन्यादिषु तेऽघोषमहाप्राणाः खथफाः जायन्ते। ज. ट्यूटानिक वर्गीयांग्ल जार्मण्यादिषु सर्वेऽपि स्पर्शध्वनयो यथानियमं परिवर्तन्ते।

पदादौ k यथा—

५२. सं० क k अन्यत्रापि क k आंग्ल्यां k>kh>h. $k^w$>wh, क्वचिच्च g. तद्यथा—सं० √कु, √कू ku kū, आकुवते ākūtam, आकूतिः (वै) अभिप्रायः कविः kavis, ग्रीक koeo (चिन्तयामि) लाति० caveo, ग्रीकलातिन्ययोः poet शब्दोऽपि अनेनैव सम्बद्धः। अत्र ककारः पकारे परिणतः। आं० caution, incautions, precaution. सं० कासते kāsatē, कासः kās as लिथ् kos-in (कासे), पु० उ० जा०, ए० से० hwosta, आं० hoop<whoop, hooping-cough.

सं० कः kas कश्चिद् अवे, कश्चित् पु० फा० कशचि (य्) ग्रीक po, लाति० quo लिथ्, kas, आं० who<पु० आ० kwoz $q^w$os, k was (Sh. Ox. Eng. Dic).

सं० क्रविष् kraviṣ ग्रीक kreas, लाति० cruor, पु० आयर, cru, पु० आयर० hrar, पु० उ० जा० ro, आं० raw (अत्राद्यः ककारो लुप्तः।)

सं० √क्री krī, krīṇāmi, पु० आयर, crenim, crīthid (क्रयशीलः) ग्रीक आं० price लाति premium.

सं० क्रु(ङ्), (क्रोञ्चः) आं० crow (काकः।)

सं० कोकिलः kokilas ला० cuculas आं० cuckoo.

सं० कुक्कु-टः kukku-t ग्री० coche आं० cock.

सं० कफः kafas ला० ग्री० kuchen. आं० cough.

सं० √कूर्द kūrda, ग्रीक karade, लाति० cardinalis आं० cardinal.

सं० कृमिः kṛmi-s, लाति० vermes, worm cormine, आं० worm crimson लिथ० kermis फा० किरमजी हि० किरमची, (इन्द्रगोपकृमिवद्रक्त वर्णः, अत्रार्थविस्तारो जातः ।)

सं० केवलः kevalas. लाति० caelibatus, आं० calibacy (अविवाहिता-वस्था), calibate.

सं० कलशः kalaśas, ग्रीक calyx.

सं० कुम्भः, kumbhas, ग्रीक kamfos फा० खुम (कुम्भः) हि० खुम्ब (शिलीन्ध्रः-कुकुरमुत्ता-एषोऽपि कुम्भाकारो भवति ।)

सं० कदनम् kadanam, ग्रीक kadene, लाति० clades, calamitetum फ्रेंच calamite आं० calamity.

सं० √कृत् छेदने kṛt, कर्त् kart कर्तः kartas, कर्तनम् kartanam, कर्तरी kartarī, फा० पं० कर्द (क्षुरिका), हि कटना. आं० cut (अस्य सं० 'कर्त्' धातुना सह सम्बन्धो विचारणीयः ।)

सं० √कल् संख्याने kal कलयति, आकालयति, आकारयति आं० call, स्लाव golos (शब्दः, शब्दायते)

सं० कृत्तिः kṛitti-s (चर्म), लाति० cuties, आं० cuties (true skin) जा० hut (रक्षणम्), चर्मापि रक्षत्यतोऽत्रार्थविस्तारो जातः ।) आं० hide. (cuticura चर्मरक्षकः soap, powder इति नामाप्येतस्मादेव ।)

सं० क्रूरः krūras, लाति० crudelem आं० cruel.

सं० √कृ kṛ कर् ker, कृतः kṛtas कर्त kart लाति० creatus आं० creat.

सं० √कृ छेदने. कर् सं० कर्कः karkas, ग्रीक karki-nos लाति० आं० cancer (अत्र रः r न n जातः, संस्कृतेऽपि चञ्चूर्यते<चर्चूर्यते सदृशेषु शब्देषु रेफो नकारे परिवर्तते,) हि केंकड़ा<सं० कर्कटः (अत्र स्वार्थे 'ट' प्रत्ययः ग्रीक्याञ्च नः) आं० crab अत्र 'बः' प्रत्ययः ।

√ कृपु० छेदने kṛpu, कृपाणः kṛpāṇas, ग्रीक karp-os (कृत्तम्-फलम्) kropton (कर्तयित्री दात्री), लाति० karpo आं० scorpion (वृश्चिकः) पु उ० जा० herbist, आं० harvest (शरदर्तुः, शस्यकर्तनकालः, कृत्तं शस्यम्।)

सं० √ कृप्, कल्प, कल्पः kṛp, kalp-as, लाति० आं० corporal (शारीरिक), corps-corpse corpus (पूर्वमस्यार्थः शरीरमेवासीत्, पश्चात्तु मृतदेहेऽस्यार्थसंकोचो जातः। corps सैन्यभागविशेषायप्येष शब्दः प्रयुज्यते, तस्मिन्नर्थेऽस्योच्चारणं 'कोर' इति क्रियते। फा० कल्ब० पु० आयर्० coss.

सं० किङ्कणी kiṅkaṇī, लिथ् kankalas.

सं० कूपः kūpas, ग्रीक kupē, लाति० kupa, आं० koupe.

सं० कपालम् kapālam, ग्रीक kaufel (शिरः) लाति० cuppa, पु० आ० cuppe, आं० cup. (कपालशब्दस्य मुख्योऽर्थः पात्रविशेषमेवास्ति। यथा—'अष्टाकपालः', द्वाभ्यां कपालाभ्यां घटादीनि पात्राणि निर्मीयन्ते। पश्चादयं शिरःकपाले रूढः। यथा—कपालक्रिया, आंग्ल्यां cup शब्दे मुख्योऽर्थः सुरक्षितः, संस्कृते खर्पर शब्दोऽपि 'कपालेनैव' विकसितः। तेन च हिन्द्यां खप्पर, खप्पड़ इति जातः। यथा—'काल्ह को जोगी कलिन्द को खप्पर'[1]।)

सं० कक्षः kakṣas अवे कश् (स्कन्धः) लाति० coxa पु० आयर coss (पादः) पु० उ० जा० hahsa.

**५३. पदमध्ये पदान्ते च—कः k**

पदादिवत् पदमध्ये पदान्ते च कण्ठ्येन ककारेण युक्ताः शब्दा अपि सर्वासु सजातीयभाषासूपलभ्यन्ते। यथाहि—

सं० √ णिजिर् शौचे, निज् nij, निक्, nik निक्तः niktas (प्रक्षालितः, शुद्धः) नेक्ष्यति nekṣyati, ग्रीक nipso (प्रक्षालयिष्यामि) xernips (अवनेजनम्, करप्रक्षालनजलम्।) ग्री० आं० nectar (पवित्रपानं—अमृतम्) अत्रार्थोत्कर्षो जातः।

सं० मुष्कः muṣkas, लाति० musculus, आं० muscular, muscle, masculine पुंलिङ्ग (एष शब्दः संस्कृतस्य 'पुंलिङ्गम्' शब्दश्चोभावेव समानौ। संस्कृते पुरुषेन्द्रियशब्दः प्रयुक्तः परमांग्ल्यां तत्कृते 'लिङ्ग'स्थाने मुष्कौ

---

१. शिवराजभूषण।

गृहीतौ। फा० मुश्क (अण्डकोशः, अतएव कस्तूरिकाऽपि मुश्क इत्युच्यते, यतो हि साऽपि मुष्काज्जायते।)

सं० यकन् yakan, यकर् yakar, यकृत् yakṛt लाति० jecin, ग्रीक hepata, फा० हि० जिगर।

सं० सू-करः sū-karas, लाति० suculies swims आं० swine हि० फा० सूअर।

सं० द्विकः dvikas, आं० से० twiz, आं० twig (शाखा, एषाऽपि द्विधा विभक्ता भवति।)

सं० मर्यकः maryakas (वै० पुरुषः), ग्रीक meirex (बालिका) आं० marriage (अत्रान्त्यः ककारः गकारे परिणत, स च 'ज' इत्युच्चार्यते।)

सं० आर्यकः āryakas (श्रेष्ठजनः), लाति० aire, airech (आर्यस्याद्यः सिद्धान्तः)।

सं० अदत्कः adatkas, दत्कः (दन्तयुक्तः) datkas, आं० से० tuc, आं० tusk (a long pointed tooth, पूर्वमस्यायमेवार्थ आसीत्, परं पश्चाद् गज-दन्तेऽर्थसंकोचो जातः।)

सं० √पच्, पक्तिः pach, paktis, ग्रीक pepsis (पाकः), लाति० coctio आं० cook (अत्र पकारः ककारे परिणतः।)

सं० अक्षि akṣi, वेदे 'अक्षन्' akṣan इत्यपि, जा० auge गौणरूपेषु augen इत्यपि, आं० eye<अक्षि, (जार्मण्यां स्पर्शध्वनिरपि सुरक्षितः स चाङ्गल्यां लुप्तः।) ग्रीक opt (अत्र ककारः पकारे, षकारश्च तकारे परिणतः। optical, optician, optimism, optimistic इत्यादयः आंग्ल्यां प्रसिद्धाः शब्दा अप्यनेनैव सम्बद्धाः।

# तालव्यः क्यवर्गः क्य $k_v$

५४. **केन्तुंवर्ग—**

*$k_v$ क्यः, ग्रीक k.p. लाति qu, c,k, गॉथिकाङ्गल्यादिषु kh>h, hw —wh, जा० g ग।

**शतंवर्ग**

*$k_v$ >सं० श ś. अन्यासु भाषासु स s.

**पदादौ *क्यः—**

$k_v$ >सं० श ś, आं० h, hw, wh. यथा हि—

सं० शतम् śatam, <*$k_v$m-to-m<ग्रीक he-kato-n (अत्र he संस्कृतस्यैकार्थको निपातः 'स' एव। पदान्ते 'म'श्च नकारे परिवर्तितः), लाति० centum. (पुरा ce 'के' इत्येवोच्चार्यंते स्म, मध्ययुगेऽस्योच्चारणं 'से' इति जातम्।) गॉ० hund, आं० hund-red, जा० hundret. (उभयत्र rd इति स्वार्थिकः प्रत्ययः।) अवे०, फा० सद्, हि० सो।

सं० √शॄ śṝ *$k_v$ṛ, $k_v$ḷ, शृणाति śṛṇāti, शर्मन् śarman (रक्षकः), पु० बुल्गा sramu (लज्जा), फा०, हि० शर्म, पु०उ०जा horam, पु० से० harm (अपमानः), आं० helmet. रक्षककवचः, शिरस्त्राणाम्।

आंग्ल्या √heal,[१] health सदृशाःशब्दा अप्यनेनैव सम्बद्धाः। संस्कृतस्य सुखार्थकं 'शर्म'प्येतदेव।

सं० √श्रु śru<*$k_v$ru, $k_v$lu, शृणोति, श्रुतः <*$k_v$luto-s, ग्रीक klutos, लाति० in-clu-tus, आर्मे० lu (श्राव्य), पु० बुल्गा० slovo, आं० आं० loud (उच्चैर्ध्वनि) आंग्ल्यामार्मेनियाञ्चाद्यः *$k_v$ लुप्तः। फा० शुनीदन् शुनु <श्रृणु। हि० सुन।

सं० √शंस् śans, <*$k_v$ens, शंसति, प्रशंसति, आशंसा, लाति० cēns-eo आं० sensus[१], censor, ला०, आं० consent.

---

१. Sh. Ox. Eng. Diç.

सं √श्रि √śri, श्रय्, <*$k_v$ley, श्रयति śrayati, लाति० cluo exelcello, लाति० आं० excelsior, जा० hugel, आं० hill, killiug.

सं० शिरस् śiras, *$k_v$iros, ग्रीक kara, 'शीर्षम्' 'श्रृङ्गम्' सदृशाः शब्दा अपि श्रयतेरेव। लाति० cerebrum <ceres-ro, आं० horn, पु०उ०ज० hornage, head शदृशाः शब्दा अप्यनेनैव सम्बद्धाः। पु० बुल्गा० srieui, आर्मे० sar, फा० सर।

सं० श्रोणिः śroṇis <*$k_v$rōnis, <ग्रीक klouis, लाति० clūnis, पु० आइस० hlaun, लिथ० szlaunis स्लोनिस।

सं० श्रद्धा śraddhā, श्रत् दधाति (वै०), ग्रीक kardia, लाति० आं० cor, credit आर्मे० sirt, लिथ० szrdis पु० बुल्गा० sridise, आं० heart[1] आंग्ल्या cordio ग्रीक्या आगतः। (यद्यपि लौकिकसंस्कृते 'श्रत्' इति निपातोऽप्रयुक्तस्तथापि वेद एषः सुप्रयुक्तः।

सं० श्वन् śvan—*$k_v$ven, <*$k_v$en, ग्रीक kuon, kuons, लाति० cuno, पु० आयर० cu, coin (ब०व०), गाँ० hunds आं० hound, लातिन्या समागतेषु आंग्ल्यां प्रचलितेषु च cauinel—belougiug to a dog सदृशेषु ताद्धितेषु शब्देषु भारोपीय $k_v$ven, रूपं सुरक्षितम्। फा० सग <सं० श्वकः शुनकः[2], ग्रीक्या kuunz, kunagco सदृशेषु सर्वेषु शब्देषु 'कः' प्रत्ययः।

सं० √श्वस् śvas<*$k_v$ves, श्वसीमि, आश्वासनम्, उच्छ्वासः (परिच्छेदोऽध्यायोऽपि), लाति० querera, आं० quest (जिज्ञासा), request आशंसा, प्रार्थना, question.

सं० शूरः śūras, ग्रीक kuros, a-kuros-weak, ineffective.

सं० श्वेतः śvetas<*$k_v$veyt, लिथ szvaityte उच्चा० 'श्वइत्यति'

---

१. सं० हृत् hṛt आंग्ल्याश्च heart इत्युभयत्र शब्दार्थौ समानौ। परमेतयोः साजात्यं सन्दिह्यते। यतो हि संस्कृतस्य हकारः सघोषमहाप्राण *घधभम्यो विकसिता न तु *क्यकारात्। अतएव सं० 'हृत्' √घृ क्षरणदीप्त्योः इत्यस्माद्विकसित इति सम्भाव्यते। √'घृत' शब्दोप्येतस्मादेव।

२. भ्रम धार्मिक विस्रब्धः सः शुनकोऽद्य मारितस्तेन।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन॥
गाथासप्तशती, संस्कृतच्छाया।

(शुभ्रीकरोति, प्रकाशयति), पु० बुल्गा sventu (प्रकाशः), प्रश्या० swints, लेटिश sweis, गॉ० hevits आं० white, रूसी श्वेत, श्वेतलाना (नाम), फा० हि० सफेद।

सं० शुभ्रः śubhras<*k$_v$ublos, ros, आर्मे surb आं० sober (temperate, शुद्ध।)

सं० शङ्ख śaṅkhas, <*k$_v$enkhos, ग्रीक konxos- कोंखोस लाति० congius आं० conch, फा० नाकूस (अत्र ध्वनिव्यत्ययो जातः।)

सं० √शङ्क śaṅk <*k$_v$enk पु०आं० hahn, आं० hang (to suspend suspence संदेहः, शङ्का।)

**५५. पदमध्ये पदान्ते च श्<*k$_v$**

सं० पृच्छ्, पृच्छा<*pṛky-ska लाति posko<*porsko.

सं० प्रश्न, praśna-s अवे. frāsś-n फ्रश्न, आर्मे harsn (पत्नी), लिथ्० praszyti, पु० बुल्गा prosit प्रार्थयते जा० fragen, फा० पुर्सीदन्।

सं० पशुः paśus, < pek$_v$'ıs, लाति० pecu, अवे० हउरव-फशु (सर्वपशुः) पशु, गॉ faihu, आं० fee.

सं० √दिश् diś<*deyk$_v$, दिष्टिः सूचना, संकेत, दिशा, indication prediction <*dekyti-s डिक्येटिस, अवे० दिशतिश् (दिशा, आदेश), लाति० dicto, प्र० उ० जा० in-ziht (अन्तः पश्यति, छिद्रान्वेषणं करोति, दोषारोपणम्) ग्रीक deixi-s (प्रदर्शनम्), सं० दिष्टम्, उद्दिष्टम्, लाति०, आं० ditto पं० डिट्ठा। (दृष्टम्), आं० teach अपि इत्येतस्मादेव।

सं० √पिश् (वै) piś<*pe$_v$k$_v$ (चित्रीकरणे रचनायाञ्च) यथा—हिरण्यपेशः, अवे. जरण्यो-पीश् zaranyo-pīs (स्वर्णालंकृतः), अवे० पएंस paeṅsa (आभूषणम् सज्जा), पु० बुल्गा० pisati लिखति, ग्रीक poikailo-s (बहुवर्णं शबलितम्), लाति० picture आं० picture, फा० नबिश्तन्, नविश्तन् (लेखनम्।)

सं० √दशस्यति Da$^s$asyati (वै० सम्मानयति, अलंकरोति) लाति० Decore आं० decor, decorate.

सं० √वश्<*vek$_v$ (इच्छा, कामना, हर्षः उल्लासः) अवे वसों (आनन्दमग्नः)

ग्री० Hekon (स्वेच्छया) पु० फा० वसइय (अधिकः) आर्मे० vasn (अतएव) आं० wish फा० बेसी (कमीबेसी)।

सं० अश्मन् Aśman <*$Ak_v$man ग्रीक Akmān (व्रजम्—हि० निहाई ग्री० Akmē अं० Acme-the highest point or pitch. फा० आसमान।

स० अशन् Aśan, (वै० पाषाणः) अशनिः, वज्रम्। अवे० अश्नो। फा० संग <अशन्-कः (अत्र स्वार्थे 'कः' गः प्रत्ययो जातः।)

सं० अश्रिः Aśrī (वै० तीक्ष्णधारा, तीक्ष्णधारायुक्तं शस्त्रम्) ग्री० kros (अन्ते०) लाति० crus, crures आर्मे० aseln (सूचिः), srunk (श्वेतास्थि) अल्बा० उश्त पु० बुल्गा० ओस्त्रु (तीक्ष्णम्) फा० अश्तूर हि० उस्तरा (अत्र तकारागमो जातः।)

**ओष्ठ्य क्व $k^w$ वर्गः**

५६. कण्ठ्यकवर्गवत् क्ववर्गोऽपि केन्तुंवर्गे स्वरूपेण (क k, ग g, घ gh इति रूपेणेतियावत्) तिष्ठति। परं शतंवर्गे तालव्ययुक्तः क्ववर्गश्चवर्गे परिणमति।

ग्रीक्याञ्च क्ववर्गः क्वचित्पवर्गे क्वचिच्च तवर्गेऽपि परिणमति। एवं ग्रीक्यां क्व $k^w$ कुत्रचित् प p कुत्रचिच्च त t (स, s) क्वचिच्च क k इति रूपत्रयेणोपलभ्यते। तथैव ग्व $g^w$ इत्यस्य ब द ग घ्व $g^wh$ इत्यस्य च फ थ ख इति त्रिविधमुच्चारणं जातम्।

लातिन्यां क्व $g^w$ इत्यस्य च 'व' v, gu, ग, घ्व $g^wh$ इत्यस्य च फ f ब b गु gu, व, v इत्यनेकविधमुच्चारणं जातम्। तत्रैव कण्ठकवर्गीयः कः c (क) ग g घ, श्च क्वचिद् ह h क्वचिच्च गः जातः।

***क्व $k^w$—.**

क. केन्तुंवर्गीयग्रीकलातिन्यादिभाषासु क्व $k^w$>क k q प p, त t, (स s)

ख. शतंवर्गीयभाषासु क्व $k^w$>क, क्वे $k^we$>च c.

**५७. पदादौ $ke^w$ च-कारो यथा –**

सं० चक्रम् cakram, *$k^wek^wlos$, ग्रीक kuklos लाति० आं० circle, ए० से० hweal, आं० wheel, हि० चक्कर, फा० चर्ख।

सं० पंक्तिः paṅktis, <*pank$^{w}$etis पञ्चकः pañcakas (पञ्चानांसमूहः) ग्रीक pemptos, लाति० quintus, गॉ० fimta, आं० fifth, आल्बे persen

सं० √चृत् cṛt, >*k$^{w}$ert चृतामि (cṛtami (ग्रथ्नामि, यथा-चर्तिष्यामि कटम् I tied together) ग्रीक kartalos (टोकरी basket), लाति० crātēs, गां० haurds आं० hurdle, hedge, krati, प्रशियन korto.

सं० चत्वारः catvāras <*k$^{w}$eter, ग्रीक tesseres (अत्र ककारस्तकारे तकारश्च सकारे परिणतः), लाति० quattuor आर्मे० cork, लिथ० keturi पु० बुल्गा० cetyriji चेतेरिजि, गॉ० fidvor, आं० four (अत्र क्व कः खकारस्य हकारस्य वा स्थाने ओष्ठ्यांशभावात् फकारे परिणतः। फा० चहार्, हि० चार।

सं० √चर् car, चल् cal <*k$^{w}$el ग्रीक apleto nerrator, ktēs (धावकः), polos लाति० calō, inquili-s, आं० incline, फा० चरीदन्। हि० चलना, चरना।

सं० चिद् cid, <*k$^{w}$id > ग्रीक ti (किम्), लाति० quid, अवे० cith, पु० फा० चिय् फा० चि०।

सं० च ca अवे० च ग्रीक pa, pe, लाति te.

**५८. पदमध्ये पदान्ते च चकारो यथा—**

सं० पञ्च pañca <*penk$^{w}$e > ग्रीक penta लिथ० pīnke लाति० quinquue, आर्मे hing, गॉ० fimf, आं० five.

सं० √सच् sac, सचते sacate, सक्तः (निर्दिशति, सह युनक्ति।)

सं० युङ्क्ते, (मिलति), सिषक्ति siṣakti, *√sak$^{w}$e ग्रीक hepomai, (सङ्गच्छामि), लाति० sequor, आं० secure, sequenee अप्येष एव, गॉ० saihva (पश्यामि)। अत्र सक्तः, सिषक्ति सदृशेषु शब्देषु तालव्यस्वराभावात् क्वः >'कः', सुरक्षितः। आं० sex अप्येतस्मादेव, तत्रापि कश्चित्कयापि सचते-संयुक्तो भवति।

सं० √रुच् ruc *√leuk$^{w}$e रोचते लोकते (प्रकाशते) रोचनम्, रुक्मम् (वेदे प्रकाशमानं द्रव्यं लोके तु सुवर्णम्।) आं० leukoria, प्रदरः leukoderma) (चर्मणः श्वित्रम्।) lucid प्रकाशमान।

सं० √पच् pac <* √pek$^{w}$e पचते, पाकः पक्तिः, ग्री० √pep, pepsi (पाकः), peptic, पाचकः लाती० coctio, आं० cook, ग्रीक्याम् k$^{w}$ पकारे लातिन्याञ्च पकारः ककारे परिणतः।

सं० √अञ्च् añc अङ्कुशः (वेदे दात्रम् reaping hook अपि) ग्री० तथा आं० ank, ankura, angle, anchor.

*ग g, ग्य $g_y$, ग्व g$^{w}$ >सं० ग, ज, लाति० g, v, ग्रीक g,d,b आं० c,q,k ch.

५९. 'क' 'क्य' 'क्व' वद् भारोपीया 'ग' 'ग्य' ग्वा अपि नानाभारोपीयासु भाषासु नैक रूपेषु परिवर्तिताः। यथा हि—भारोपीयो *गः g, ग्व g$^{w}$ श्च यदि तालव्यस्वरहीनोऽस्ति तदा संस्कृते स्वरूपेण तिष्ठति, परं तालव्यस्वरयुक्तः *ग्वः g$^{w}$e ग्य $g_y$ श्व संस्कृते जकारे परिवर्तितौ। लातिन्यां त्रिविधोऽपि गकारः क्वचिद् गकार एव पदादौ च वः v, क्वचिच्च ग्रीकवद् दबयोरन्यतमं रूपं गृह्णाति। यथा हि—

**६०. पदादौ g गकारो यथा—**

सं० √गृ gr̥, गर् gar, गृणामि, गीर् (प्र० ए० व०), गिरा (वाणीः), ग्रीक gēru-ō (गृणामि, वदामि), लाति० garrio '(प्रलपामि chatter), पु० आयर्. gair (आह्वयति) सिम्० gewor, पु० उ० जा० charram (ह्लेषा),

सं० √गृ, गर्, ग्रामः (समूहः, सम्मर्दः, ग्रामः सेना च) ग्रीक agaro, (समूह, सभा) gargra (राशिः) पु० आयर garig (अश्वसमूहः)।

सं गौः gaus, गो go, ग्रीक bous, लाति० vous, पु० उ० जा० chuq, आर्मे Կov, पु० बुल्गा० gow-edo (गोवेदो-उक्षा), आं० cow फा० गाव्।

सं० √गलति galati, *gel ग्रीक bole (to through प्रक्षेपणम्), पु० उ० जा० guellan, आं० gellon, gallop (कुर्दनम्, अस्वस्थ त्वरितगतिः), ball अप्येतस्मादेव।

सं० √गिर्, गिल् gir, gil, गिरामि, निगीर्ण, गिलामि (निगलता हूं), ग्रीक bora (भोजनम्), लाति० vorus, vorase, पु० बुल्गा० ziran (गिरामि), आर्मे० qer (भोजनम्) लिथ० gerih (पिबामि)।

सं० ग्नाः gnā-s (वै०, देवपत्नयः, स्त्रियः), ग्रीक mnaomai, mnā < bnā < gnā (भार्यामिच्छामि), पु० आयर० mnā (पत्न्यः)। gona नार्यः, आर्ये० qnai नारी, आं० queen (अत्रार्थसङ्कोचोऽर्थोत्कर्षश्च जातः।)

सं० गुरुः guru-s, ग्रीक barus, गॉ० qurus, आं० coarse, barometer, barology, barogreph सदृशा आंग्ल्यां प्रचलिताः शब्दा जपि ग्रीक्या एव गृहीता, ग्रीक्या baro शब्दश्च संस्कृतस्य गुरु शब्देन विकसितः 'भार' शब्देन नास्त्यस्य कोऽपि सम्बन्ध ।

सं० ग्मा gmā (वैं०), ज्मा (पृथ्वीः), क्ष्मा (पृथ्वीः) फा० जमीं ।

सं० गर्भः garbhas, ग्रीक delphos, सं० सगर्भ्यः, ग्रीक a-delphios (सोदरः), आं० calf (गर्भ्यः) अत्र वत्सार्थेऽर्थसङ्कोचो जातः ।

सं० √गु gu, जोगुवे उच्चैरुद्घोषयामि <*gev, ग्रीक gog-gu-xo गोगुक्सो, (grumble), boe (आह्वानम् ।)

सं० √गम् gam, अगमत्, गतः, गतिः, ग्रीक batos, basis, लाति० baino, venio, invent, invention, advent, adventure, सं० गच्छामि, लाति० baskō गॉ० giman, पु०उ०जा० queman, आर्मे० gen (आगच्छत्) लिथ० gemu (स्नामि), आं० come फा० गश्तन्, हि गया ।

*$g_v$, gwi,-e, सं० जः, अवेस्तादिषु ज़ z लाति० g v, ग्रीक gdb, आं० c, ch kg.

६१. केन्तुं वर्गीयासु भाषासु भरोपीयो ग्यः $g_y$ तालस्वरयुक्तो ग्वः $g^w$ श्च प्रायशो गकार एवास्ति । त्रिविधोऽपि गो लातिन्यान्त्वनेकत्र वकारे परिणमति ग्रीक्यान्च क्वचिद् गकारः क्वचिद्दकारः क्वचिच्च बकारो जायते । आंग्ल्यान्च सर्वेऽपि तृतीय वर्णाः प्रथमा जायन्ते । अतएवाङ्गल्यां भारोपीयस्त्रिविधोऽपि गकारः ककारे परिणमति—*गः g>कः k, q, c, ch वा जायते ।

शतंवर्गे च तालव्यीभावाद् *ग्यः $g_y$, ग्व $g^w$e-i,-y श्च संस्कृते जकारे परिणमति । अवेस्तापारस्यादिषु च क्वचिद् ज j क्वचिच्च संघर्षी ज़ z क्विचिच्च पदादौ दकारः संयुक्तव्यञ्जनयुक्तश्च शकारे परिणमति । आल्बेन्यामपि गो दकारे परिणमति । तालव्यस्वरयुक्तस्य गस्य 'ज' इत्युच्चारणं क्रियते । तद्यथा—

सं० √ज्ञा jnā<*$g_y$no, $g_y$en जानाति jānāti, >ग्रीक ge-gnō-skō लाति० gnōsco, nosco, गॉ० kenn, आं० know, फा० दानिश्तन् <सं० जानामि, शिनाख्तन् <√ज्ञा jña पु० बुल्गा znati, लिथ० zinoti, लेटिश sinat, प्रश० sinnat. आं० know.

सं० √जुष् jus <$g_y$eus, जोषः, जुष्ट (प्रिय, वाञ्छित, सेवित) ग्रीक geuō, लाति० justus (चमनम्), आं० choose, choice, kiss (चुम्बनम्-

एतदपि प्रियं वाञ्छितञ्च भवति, अत्रार्थ-विस्तारो जातः ।) अवे० ज़ओश् (पक्षपातः, जुषानि, आस्वादयानि, जौस्त <सं० जुष्ट >फा० दोस्त (कृपा, प्रियः, मित्रम्) आंग्ल्यां लातिन्या आगता just, justice, सदृशाः शब्दा अप्येतस्मादेव।

सं० √ जन् $j^{w}$en ·

सं० जनः janas, गणः gaṇas, (जातिः <*$g^{w}$en, ग्रीक genas gegnomai लाति० gi-gno, genu-s, गॉ० kuni आं० kin'. kith & kin (स्वजनः, सजातीयः) आं० kind अप्येतमादेव ।

सं० √जीव् jīv *$g^{w}$iv, जीवः ग्रीक bios, लाति० vivos, आर्मे० kem (जीवामि), पु० आयर० viu, beo, लिथ० jyvas, पु० बुल्गा० zivu (जीवित), गॉ० gius, आं० vitamin, biology सदृशेषु शब्देषु bio इति पूर्वपदमपि ग्रीक्या bio एवास्ति । तच्च भारोपीयात् $g^{w}$io इत्यस्माज्जातम् । फा० जीस्तन् हि० जीना ।

सं० अर्जुनः arjunas <*$arg_{v}$unas (श्वेत, प्रकाशमान, रजतवर्ण), ग्रीक ar₍ēs (प्रकाशमान, श्वेत), ग्रीक, लाति० argentinā (देशस्य नामाप्येतस्मादेव यतोहि तत्र रजतबाहुल्यमस्ति, आर्मे० arcat (रजतम्) अवे० अरेजह (दिवा प्रकाशः) सं० अर्जुनवृक्षोऽप्येष एव, यतो हि सोऽपि श्वेतो भवति (सं० रजत-मेतस्मादेव प्रतीयते, अत्राद्योऽकारो लुप्तः ।)

सं० वाजः (वै० अन्नम् शक्तिः बलम्) vājas <*$veg_{v}$, ग्रीक hu(y) gies. (hygius, स्वस्थः), लाति० vegeo, vig, vigere, पु० आइस० vig, veig (युद्धम्), गॉ० us-vakjan (जागरयति) पु० उ०जा० vigant (योद्धा), आं० vegitable शाकादिकः भक्षणीयः vegitarion. wake, awake (जागरण-मुद्घोषश्च), आंग्ल्या hygia, hygine-ic, अपि ग्रीक्या hygies. एव । स च सं० वाजः vajas इत्यस्मान्निष्पन्नः । ग्रीक्यां पदादौ वकारः हकारे परिणमति, आं० vigur अप्येतस्मादेव), फा० बाजी (क्रीड़ा, प्रतियोगिता अप्येष एव, यतो हि क्रीडायामपि शक्तिपरीक्षणं भवति ।)

सं० √जृ $g_{v}$ṛ, जर् jar <$j_{v}$ar, जीर्णः, गीर्णः, ग्रीक geru, लाति० gram-w-m, आर्मे० cer (वृद्धः, जरायुक्तः) लिथ० zernis, लेटिश sivius shirnis, गॉ० kaurn, आं० corn, grain, gram.

सं० अजः ajas, <*$ag_{v}$as > ग्रीक aig, aigos (ष०ए०व०) पु० आयर

ag (wild buck) लिथ० ogys, लेटिश asis, प्रश० wosu, फा० वुज (अत्र 'व' आद्यागमो जातः।)

सं० भूर्जः, लेटिश० bersas, पु० आइस० bjonsky आं० birch.

सं० √अञ्ज् añj, *ang$^{w}$e अञ्जिः (अलंकरणम्, अञ्जनम्), ग्रीक habros (विलास, कोमल), लाति० unque पु० आयर० imb (नवीनतम्) पु०उ०जा० ancho (तदेव), आं० ointment, oint, anoint.

घः gh

६२. शतंवर्गे

सं० घ gh, *gh, gh$^{w}$, सं० ह् h <(झ jh) *$g_{y}$h, g$^{w}$he> अवे० j, z.

केन्तुंवर्गे

*gh, $g_{y}$h, g$^{w}$h,> ग ga, w, आंग्लजार्मण्यादिट्यूटानिकवर्गे। kh, th, ph, ग्रीकलातिन्यादिवर्गे।

सर्वेऽपि सघोषमहाप्राणध्वनयः (घधभाः gh, dh, bh) संस्कृत एव सुरक्षिता इति तु यथाप्रसङ्गमनेकत्रोक्तमेव। तदनुसारं भारोपीयो घकारस्तालव्यस्वरहीनो घ्वकारश्च संस्कृत एव स्वरूपेण सुरक्षितः। केन्तुंवर्गीयासु वा शतंवर्गीयासु वान्यासु सर्वास्वपि भाषासु भारोपीयस्त्रिविधोऽपि घकारः नानाध्वनिषु परिवर्तितः। यथा हि—

क. ग्रीकलातिन्यादिषु त्रिविधोऽपि कवर्गः क्वचित्तवर्गे क्वचिच्च पवर्गे परिणत इति तु पूर्वमेवोक्तम्। तदनुसारं संस्कृते येषु शब्देषु घकारो विद्यते तत्स्थाने ग्रीकलातिन्ययोः थ th कारो फ ph, f कारो वा जातः।

ख. संस्कृतेऽपि भारोपीयो *घ्य $g_{y}$h कारः, तालव्यस्वर युक्तश्च घ्व g$^{w}$he कारो हकारे परिवर्तितः[1]। एतत्तु—

---

१. तालव्यीभावेन यथा *क्य $k_{y}$, क्वे k$^{w}$e इति भारोपीयं ध्वनियुग्मं शतंवर्गे चकारे शकारे च $g_{y}$ ग्य g$^{w}$e ग्वे इति च जकारे परिवर्तितं, संस्कृते न तथा भारोपीयं $g_{y}$h घ्य, g$^{w}$he घ्वे झकारे परिवर्तितमपितु हकारे परिवर्तितम्। एवमपि वक्तुं शक्यते-संस्कृते *घ्य $g_{y}$h, घ्वे g$^{w}$he इत्येतयोराद्यः स्पर्शांशो घृष्टो विलुप्तो वा। महाप्राणांशभूतो हकारोऽवशिष्टः परमतो विप-

स० हन्ति hanti <*$g^w$henti, घ्नः, घ्नन्ति ghnanti, <*$g^w$hnanti. पु० आयर० gonin हन्मि ।

सं० हतः hata-s <*$g^w$hetas, ग्रीक phatos, phonos (घातकः) ।

सं० घातः ghāta-s <*$g^w$hatas फा० जद, जन आर्मे० gan (blows), पु० बुल्गा० zinga कर्तयामि ।

सदृशेषु पदयुग्मेषु घकारहकारयोर्वैकल्पिकप्रयोगेण प्रतिपादितमेव ।

ग्रीक्यां त्रिविधोऽपि कवर्गः क्वचित्तवर्गे, क्वचित्पवर्गे परिवर्तते, क्वचिच्च कवर्ग एवास्ति । एवमेव त्रिविधोऽपि घकारो क्वचित्थकारे क्वचिच्च फकारे परिवर्तते । तत्रैषोऽस्ति नियमः । क. ओकारात् रलयोश्चपूर्वं घकारः ख x भूत्वा फः ph जायते । ख. इकाराच्च पूर्वं घकारः थः th जायते, एवमेव लातिन्यामपि घकारस्थाने फकारो जायते । यथा हि--

सं० \ घृ ghṛ, घर्मः gharmas ग्रीक thermos प्रश. gorme आर्मे० germ. आं० warm, हि० फा० गर्म, german देशवाचकनामाप्येतस्मादेव ।

सं० हरः haras <*$g^w$heros, ग्रीक theros (ग्रीष्मर्तुः, उष्णता) ।

सं० घृणः ghṛṇas (वै०), घृणिः ghṛṇis (सूर्यरश्मिः), लाति० fornus आं० furnace.

---

रीतं संस्कृतेतरासु सर्वास्वेव भाषासु घ gh घ्य $g_y$h, घ्व $g^w$h काराणां महाप्राणांशभूतो हकारो लुप्तः, आद्यस्पर्शध्वनिर्गकारश्चावशिष्टः, अतएव आंग्लजार्मण्यादिट्यूटानिकवर्गीयासु, तथा च रूसीबुल्गारीयादिबाल्टोस्लाव-वर्गीयासु, भेरानीयवर्गीयासु च भाषासु संस्कृत घकारस्य हकारस्य वा स्थाने गकारो दृश्यते, तत्र तु स्वरूपावस्थितिरेव न तु ध्वनेः परिवृत्तिः । अतएवांग्लजार्मण्यरूस्यावेस्तीयफारस्याद्या भाषाः संस्कृतवर्गीयाः सन्ति । पर सस्कृतस्य सघोषमहाप्राणध्वनीनां स्थाने ग्रीकलातिन्यादिषु नियमेनाघोष-महाप्राणाः खथफा दृश्यन्ते, तत्र ध्वनिपरिवर्तनं स्पष्टमेव अतएव ताः सस्कृत-वर्गीयांग्लजार्मण्यादिभाषाभ्यः किञ्चिद् भिन्नाः सन्ति इतित्वन्यत्रोक्तमेवात्र दाढर्याय पुनः प्रतिपादितम् । अवेस्तायां पारस्याञ्च यथानियमं $g_y$h, $g^w$he इत्यनयोः स्थाने ज j ज़ z इत्येतौ ध्वनी दृश्येते ।

सं० √ हन् han <*g^w hen, हन्ति, जघान, हतः, घातः, अवे० जइन्ति strikes, पु० फा० अजनम्, जत, ग्रीक phonos (murder), लाति० facos (हतः) आर्मे० gan (blows), पु० बुल्गा० zinjan ज़िंज (कर्तयामि), पु० सें० gudea (युद्धम्)।

सं० हंसः[1] hnsas <g^w hens, ग्रीक xēn, xenos, लाति० ānser (अत्र घकारः हकारो वा लुप्तः) पु० उ० जा० gans, लिथ्० zansis, पु० बुल्गा० gansi, आं० goose, geese (ब० व० अत्रानुनासिको लुप्तः)।

सं० हरित् harit <*g^w herit, अवे० ज़इरेत (पीतवर्णः) आं० gold, yellow. जा० gelb, फा० ज़र्द, ज़र (स्वर्णम्) हि० हल्दी (अत्र भारोपीयो लकारः पीतवर्णश्च सुरक्षितः) संस्कृते हरित् शब्दस्य पीतवर्ण इत्येव प्रत्नोऽर्थः।

सं० हिरण्यमपि 'हरिण्य' एवासीदिति प्रतीयते।

सं० √ ह्लाद् hlād, आह्लादः आं० glad.

सं० अंघः ang'as> अंहः anhs <*ang_v h (संयोजनम्, दृढीकरणं, कठोर, पापम्, कष्टम्) ग्रीक anxo एखो—बध्नामि लाति० ango, angor, angus, alguis, anguilla, पु० आयर० escung, लिथ० angis, आं० anguish, anger.

सं० अहिः ahis <*ag^w his>ग्रीक offi. आंग्ल्यां ग्रीक्या आगत ophio इति समासपूर्वपदमप्येष एव। यथा—ophiomorph, ophiophagus=अहिभाजः, सर्पभोजी एतादृशः कोबराजातीयः सर्पः योऽन्यान्सर्पान्स्वभोज्यं विदधाति। एवमेव morphunl, morpohean, morpheus. आदयोऽपि मारक अहिफेन प्रतिरूपाण्येव। ग्रीक्या आंग्ल्याश्चं opium अपि अहिफेन एवास्ति। यथा सं० फेनः आंग्ल्यां phome जायते, (मकारो नकारे परिवर्तितस्तथैवात्रापि ज्ञेयम्)। आं० eil सर्पाकारो मत्स्योऽप्येष एव। अवे० अज्दहा, <अहिदंशः, अजि, हि० अजगर।

सं० अर्ह् arh, <*alg^w h, अर्घः arghas, ग्रीक elphon (I acquired) elphano (लटि), लिथ० alga (सम्मानः पुरुस्कारः, मूल्यम्), पु० फा० अरेजइति (deserves, is worth) फा० अर्ज़, अर्ज़मन्द, अर्ज़ां।

---

१. साः घ्नन्त्यध्वानं श्रेणिशः। निरुक्त ४-२।

सं० लघु laghus, ग्रीक elaxus, सं० लघिष्ठः laghisthas आं० light, lightest.

सं० दीर्घ dīrgha <*dhirg$^{w}$h, द्राघिष्ठ drāghista ग्रीक deloxos, फा० दराज।

सं० जंघा janghā (जङ्घन्यते) पौनःपुन्येन हन्यते गम्यते, गच्छति वा, अवे० जंग, आं० gang-way, gong सं० घण्टा, उभावपि √हन <घन् धातोर्निष्पन्नाविति प्रतीयते।

# दन्त्यस्तवर्गः

६३. दन्त्यास्तवर्गीयास्तथदधाः संस्कृतस्य येषु शब्देषु विद्यन्ते अन्यास्वपि सजातीय-भाषासु तत्र त उपस्थिताः। आंग्लजार्मण्यादिट्यूटानिकवर्गीयासु भाषासु त t, द d इत्येतौ वर्त्स्यौ संघर्षीणौ 'ट' 'ड' इत्युच्चार्येते, परमन्यासु सर्वासु ग्रीकलातिन्यादि-संस्कृतसजातीयासु भारोपीयासु भाषासु 'त' 'द' इत्येवोच्चार्येते न तु आंग्लजार्मण्या-दिवत् 'ट' 'ड' इति सदा स्मरणीयम्। यतो हि रोमन् लिप्यां तकारस्य दकारस्य च कृते न स्तः कावप्यन्यावक्षरावत एव ग्रीकलातिनफ्रान्सीयादिभाषाणां t, d इत्येतावपि तत्तद्भाषानभिज्ञैराङ्ग्लीयवत् ट, ड इत्युच्चार्येते लिख्येते च।

सं० त t अन्यत्रापि त t आंग्ल th. d > जा० d.

सं० √तन् tan तनोमि tanomi, ग्रीक teino, लाति० ten-tu-s (कृत् प्र०), पु० आयर० tana, सिमरिक tenu, गॉ० thanja, पु०उ०जा० dunni, जा० लिथ्० tenva-s, पु० बुल्गा० tiniku (तनु, सूक्ष्म), सं० तनु आं० thin हि० तनिक। सं० तनू फा० तन। लाति० आं० in-tend, at-tend. <ad-tend =अधि-तन्।

सं० त्रि tri, त्रयः, ग्रीक treis, लाति० trēs, पु० आयर० trī, गॉ० thīreis, आर्मे० erek, लिथ० trys पु० बुल्गा० trije, आं० three. पश्च० पं० त्रय, हि० तीन <सं० त्रीणि, फा० से <त्रयः (अत्र तकारः सकारो जातः)।

सं० √तृष्, तर्ष tṛṣ, tarṣ, तर्षः ग्रीक tersōmai (शुष्यामि), लाति० torreō-tostu-s पु० आयर० tart, गॉ० thaursu-s (withered), पु०उ०जा० dense, आर्मे० taram-i-m tarsam-im आं० thirst, जा० durot. फा० तरसीदन्।

सं० √तिज्, तिग्मः tigma-s, ग्रीक stigo, stigmē, (I prick), लाति० n-stīgāre, गॉ० stiks, पु०उ०जा० stih, आं० stick.

सं० तर्मन् tarman (वै०, यूपाग्रं तर्म इत्युक्तम्[1]), ग्रीक terma (end, goal), termon (सीमारेखा), लाति० termen, आंग्ल्या terminate, termination, terminal इत्यादयः शब्दा वै० तर्मन् इत्यस्यैव रूपाणि सन्ति।

---

१. अमरकोष २।७।१९।

स० तृहू √छेदने tṛhū, तृणम् tṛṇam (तृह्यते-छिद्यते छेदयति वा), ग्रीक, लाति० गॉ० thaurnus, पु०उ०जा०, जा० dorn, आं० thorn.

सं० √तक्ष, तक्षामि, taxāmi, ग्रीक tektŏn (तक्षा), लाति० texo, पु० आयर० tāl, पु० बुल्गा० tasate, लिथ० taszyti (उच्चारणं-तष्यति)

**पदमध्ये पदान्ते च तः**

६४. यथादौ तकारध्वनियुक्ताः नैकाः शब्दाः सर्वासु संस्कृतसजातीयासु भाषासु विद्यन्ते तथा पदान्ते पदमध्ये च तकारयुक्तमपि पदजातमनल्पं दृश्यते। यथा हि—

सं० अत्कः (वैस्त्रं, dress) atka, अवे० अथ्क, फा० खिल-अत (अत्र खिल <अखिल निपातः, एवं पारस्या खिलअत इत्यस्य 'सम्पूर्णो वेशः' इत्यर्थोऽस्ति।), आं० attire (dress, apparet, head-dress, equipment for war).

सं० √स्तृ stṛ, star, स्तृणोमि stṛṇomi, ग्रीक stornumi, sterno, सं० स्तरति, स्तारयति, स्तृन्, स्तारः (वै०), stāras (तारा) ग्रीक aster, लाति० stell, ब्रित० sterenn, गॉ० stairno, आर्मे० astl, आं० star, फा० सितारा, हि० तारा, पु० बुल्गा० stiran, आं० stretch, जा० strecken. आं० straw.

सं० √शासु śāsu, शास्ति śāsti, शास्ता, आर्मे० sāst, sasti (a reviling. reproch.)

सं० कतरः kataras, ग्रीक poteros, लाति० u-ter गॉ० hva-thar, लिथ्० ka-tras, पु० बुल्गा० ko-tory-ti. आं० whether.

सं० अन्तरः antaras (other), लिथ० an-tras, गॉ० anthar, पु०उ०जा० andar, जा०, ए०से० oder, आं० other.

सं० अति (निपात) ati, *eti, अवे० ३ इति, पु० फा० अति (य्), (over), ग्रीक eti (more over), लाति० et, etiam.

६५. सं० द d, > आं० t, जा० z अन्यत्र द d, ग्रीक d, >th, लाति० d>th>f.

(क) संस्कृतस्य दकार आंग्ल्यादिनिम्नजार्मण्यासु प्रथमाक्षरे परिवृत्य त t जायते। स च जार्मण्यादि उच्चजार्मण्यभाषासु z ज़् जातः। अन्यासु सर्वासु संस्कृतसजातीयभाषासु दकारः प्रायशः स्वरूपेणैव तिष्ठति।

(ख) सं० दुहितर, आं० daughter, सं० द्वार् आं० door, सदृशेषु शब्देषु संस्कृत आंग्ल्याञ्चोभयत्र दकार एव दृश्यते तत्र तु संस्कृतशब्देषु पूर्वं धकार आसीत् स च विषमीकरणप्रवृत्त्या दकारे परिवर्तितः। अत आंग्ल्यां तत्र पुनर्ध्वनि-परिवर्तनं न जातम्। अस्य प्रमाणन्तु संस्कृत एवोपलभ्यते। 'दुह्' धातोः धोक्ष्यति, धुक्ष्व, अधोक्, धुक् इत्यादीनि रूपाणि दर्शयन्ति यन्मूलधातुः *धुघ् इत्यासीत्, विषमीकरण प्रवृत्त्या धकारो दकारे परिणतः।

एवमेव √ध्वृ dhvṛ कम्पने इति धातोर्निष्पन्ने[1] 'द्वार' शब्दे पूर्वं धकार आसीत्। दुर्भ्याम्, दुर्भिः, दुर्भ्यः सदृशैर्वेदेषूपलब्धैर्भादिप्रत्यययुक्तैरूपैर्ज्ञायते यदत्रापि विषमी-करणप्रवृत्त्या पूर्वं भादौ प्रत्यय एव धकारस्य दकारो जातः, पश्चाच्च सर्वत्र तदेव रूपं प्रचलितम्। अतएव आंग्ल्या door शब्दे पुनर्ध्वनिपरिवर्तनं न जातम्।

**६६. पदादौ दकारो यथा—**

सं० दन्त dant, दत् dat. ग्रीक odous, लाति० dens, आयर० dēt, गा० tunth-u-s, अवे० पु० फा०, फा० दंद, दंदान्, लिथ० dant-i-s, आं० tooth teeth ब०व० dental, tusk <सं० दत्क (हस्तिदन्तः)।

सं० द्वार् dvār, द्वारम् dvaram, आं० door, जा० tur फा० दर, हि० दरवाजा।

सं० द्रुः dru-s, आं० tree, फा० दरख्त।

सं० दिव्, देवः dēva-s, ग्रीक लाति divo-s, deu-s, divina, आं० divine अपि एतस्मादेव, पु० आयर० dia, लिथ० deva-s अवे०, पु० फा०, देव (ईराने 'देव'शब्दस्यार्थः दैत्यो जातः[2], तथैवांग्ल्यां devil शब्दोऽस्ति।)

---

१. 'द्वारो'द्रवतेर्वा (निरुक्त-८।२) इत्युक्तवता यास्केन गत्यर्थकाद्द्रवतेरेव द्वारो निष्पादितः। ध्वरतेरस्य निर्वचनन्तु संस्कृतसजातीयभाषाणां तुलनात्मका-ध्ययनेनावगतम्।

२. वस्तुतः संस्कृतदेवशब्दस्य निष्पादक √दिव् धातोः मोद मद स्वप्न गति कान्त्याद्या अनेकेऽर्थाः सन्ति, तत्र संस्कृतस्य देवशब्दो मोदकान्त्याद्यर्थकः परमवेस्ताया देवशब्दो मदस्वप्नाद्यर्थकः। एवं संस्कृते चावेस्तायां देवशब्दस्य विपरीतार्थौ जातौ, नात्र कश्चिद्धार्मिको विरोधो यथा केचिद्व-दन्ति, इत्यवधेयम्। तथैव devil शब्दोऽप्यवगन्तव्यो यतोह्यांग्ल्यामपि देवार्थको divine शब्दोऽप्यस्ति।

सं० √दिव् दिव div (दिनम्) दिवा diva (दिनेन), ग्रीक di (f) os, लाति० die-s, सिगरिक dyw आर्मे० tiv लिथ० deva-s (देवः)।

सं० √दा dā, ददामि dadāmi, दानम् dānam, लाति० do, आं० donate, donar इत्यादयः, लिथ० du-ti, पु० बुल्गा० da-ti, फा० दादन्।

सं० दुस् dus (उपसर्ग), दुर्मना <दुस्-मनस्, ग्रीक dus-menēs (ill disposed), अवे० दुस् मन dus-man <दुश् मना> फा० दुश्मन[1] गॉ० tuz-आं० dis[2] (उपपदम्) dismis, dis-mit 'मा' धातो यथा—

सं० मित, प्रमित, सम्मित तथैव दुर्मित, disability.

सं० √दृश् dṛś<*derk̯, ग्रीक derkomai[3] (पश्यामि) सं० ददर्श dadarśa <ग्रीक dedorke.

सं० दृक् (नेत्रम्) dṛk, पु० आयर० derc (देर्क-नेत्रम्) गॉ० ga-tarhjan (to markout), आर्मे० tes-ana-m.

**लातिन्यां दस्य l लः**

लातिन्यां पदादौ सस्वरः पदमध्ये च स्वरमध्यगो दः क्वचिल्लकारेऽपि परिणमति। यथा—

सं० देवरः dēvara-s. ग्रीक daēr, लिथ्० dever-i-s, लाति० lēvir.

---

१. सं० 'दुःशमन' इति शब्देन फा० 'दुश्मन्' शब्दस्य नास्ति कोऽपि सम्बद्धः। सादृश्यवशादनुमानाश्रितसंस्कृतीकरणस्यैतदेतादृशमेवोदाहरणमस्ति, यथा सं० 'तरु' शब्दात् आं० tree शब्दो निष्पाद्यपे।

२. Shorter Oxford English Dictionary.

३. संस्कृते दृश् धातोः सार्वधातुके रूपाण्यप्रयुक्तानि जातानि। अतएव पाणिनिना √दृश् स्थाने 'पश्य' आदेशो विहितः, परं ग्रीक्यां सार्वधातुकेऽप्यस्य रूपाणि विद्यन्ते।

हिन्दीवल्लातिन्यामपि सं० द्वः dvas बकारे वकारे वा परिणत आङ्गल्याञ्च द्वि> bi इति द्वयर्थकमुपपदं जायते।

सं० द्विः dvis, लाति० bi-s, आं० bicycle <सं० द्वि-चक्रम्<ग्रीक cuclos >आं० cycle.

६७. **पदमध्ये पदान्ते च दः यथा—**

सं० √विद् vid, वेद vēd, ग्रीक oida, लाति० video, पु० आयर० ad-fiadaim (उच्चा० अदविदेम-उद्घोषयामि वर्णयामि), गॉ० vait, vitan, आं० wit, witty, witness, लिथ० veida-s (वदनम्), पु० बुल्गा० vedeti (वेत्ति), पु०उ०जा० wizzan, जा० wissen आं० visa.

सं० √सद् sad, सदः sadas, सेदुः (लिटि प्र० पु० ब०व०) sedus. अवे० पु० फा० had-is, hazd <sazd, ग्रीक hed-os, लाति० sedeō, sēdī, sedeti (निषीदति), आं० sit, seat.

सं० √छिद् chid, छिन्दन्ति chindanti <*skʷind अवे० scind-ayen-iti, ग्रीक skind-almo-s (a splinter). skandalon, लाति० scindo, √scandere.

सं० √स्विद् svid, स्वेदः svēdas, ग्रीक hidrōs, लाति० sūdor, पु०उ०जा० swciz, जा० schweiz आं० sweat.

सं० √स्वद् svad, स्वादु svādu, ग्रीक hed-u-s, लाति० suādeö गॉ० suts, आं० sweet.

सं० स्वाद्वी svādvī, लाति० suāvi-s.

सं० उदन्, उद्रः udan, अनुद्रः anudras, ग्रीक hudōr, an-u-dro-s, लाति० uuda, गॉ० vato, लिथ० vandu, पु० बुल्गा० voda, vodaka, आं० water.

सं० √अद् ad, अद्मि admi, ग्रीक ed-o, लाति० ed-o, आर्मे० ut-em, गॉ it-a, लिथ० ed-u, पु० बुल्गा० jad-i (भोजनम्), आं० eat, edible.

सं० √स्कन्द् skanda, स्कन्दामि skandāmi, लाति० scando, आं० scandle अपि एतस्मादेव।

सं० √रु, रुद् rud, रुदामि rudāmi, लाति० rudo (I bray, roar), लिथ० rauda, पु० बुल्गा० rydajaa, ए० से० reotan, पु०उ०जा० riozan (रोदनम्), आं० rut.

### धः dha

क. आंग्लजार्मण्यादिषु dh>d.

ख. ग्रीकलातिन्यादिषु dh>th, ph.

६८. सघोषमहाप्राणो ध dha केवलं संस्कृत एव सुरक्षितः। धः भ्रातृवर्गीयासु आंग्लजार्मण्यावेस्तिकाद्यासु भाषास्वल्पप्राणो द d इत्युच्चार्यते लिख्यते च। ग्रीकलातिन्यादिफ्रेतृवर्गीयासु भाषासु अघोषमहाप्राणः थ th, फ ph, f (स, च क्वचित् पुनर्वःजातः) इत्युच्चार्यते लिख्यते च। केषुचिच्छब्देषु तत्र दकारोऽपि सुरक्षितः।

**पदादौ धकारो यथा** –

सं० √धा dhā, *dhē, विधत्ते vi-dhatte, धाम धितिः dhām (क) (स्थानम्, कार्यम्, विधि, नियमः, विधानम्, रीतिश्च) आं० do, dome deed, con-dition, condence, स्ला० dehi, फा० दस्त (ख) फ्रेतृवर्गीयाः सं० धाम ग्रीक ana-the-ma (प्रस्थापितम्)>आं० anthem, लाति० fa-c, artifex, facio> आं० artificial.

सं० धृ dhṛ, धर्मः ला० firmus, आं० firm (दृढः, धर्मोऽपि दृढो भवति), आं० con-firm.

(क) सं० √धृष् dhṛṣ, धर्ष् dharṣ, धर्षामि dharṣāmi, अवे० दर्शिश् (साहसिकः, बलवान्), पु० फा० अदर्शनौस (अधर्षयत्, साहसं कृतवान्), गॉ० ga-dars, पु०उ०ज gi-tare लिथ० dris-ti, आं० dare.

(ख) ग्रीक thras-u-s (साहसिकः) thers-ites.

(क) सं० धूञ् dhūñ, धुनोमि dhunomi, धूमः dhūmas, पु०उ०जा० tūmalon, (परिभ्रमणम्), लिथ० dumai, पु० बुल्गा० dy-mu, रूसी dim, फा० दूद, हि० धुआं।

(ख) ग्रीक thūno (I rush or dert along), thu-or (रालधूपः), thūmo-s (साहसं, भावना, वायुः, आत्माः), आं० en-thuse, ism, लाति० आं० fume, per-fume.

(क) सं० √ धेट् पाने dhēṭ, pānē, धेनुः dhēnus धेना dhēnā धयः dhayas (स्तनन्धयः), आर्मे० diem (धयामि), पु० बुल्गा० dojan (दुग्धम्)।

(ख) ग्रीक thesato (धयति), लाति० fe-lare. (यथा संस्कृते √धेट् इत्यत्र 'ट्' अनुवन्धोऽस्ति तथैव लातिन्यामपि धातवः अनुवन्धयुक्ताः सन्ति। अत्र lare इत्यनुबन्धोऽस्ति) fīlius, (दुग्धम्), आं० लाति० femina, feminine यथा धीयते-दुग्धं पीयते यस्याः सा धेना धनुर्वा तथैव femina, एकत्र ना, 'नुः' वा प्रत्ययोऽन्यत्र च 'मनिन्' 'मिनन्' वा (women अत्र f इत्यस्य w जातः)।

(क) सं० √दृह्, दृढः dṛdhas, *dhṛza-s <dhṛg,h-to dhyrgh (यथा दुग्धः), अवे०, फा० दिज् (दुर्गः)।

(ख) लाति० forti-s, पु० लाति० forctis, आं० fort.

**६९. पदमध्ये पदान्ते च धकारो यथा—**

(क) सं० √बन्ध् bandh <*bhandh, बन्धनम्, बद्धः, बन्धुः, आं० bind, गॉ० bindan. फा० बस्त।

(ख) ग्रीक pentheros (श्वशुरः) <बन्धु-रः। लाति० of-fendimentu-m (chin-cloth), आं० offend <सं० अपबन्ध, defend <अधिबन्ध इत्यादयोऽप्येतस्मादेव।

(क) सं० ऊधन् ūdhan, ऊधर् ūdhar, पु० उ० जा० utār, आं० udder.

(ख) ग्रीक authar, लाति० ubēr.

सं० वि √धू, विधवा vidhavā, लाति० vidua, गॉ० viduvō, आं० widow, पु० बुल्गा० vidota, जा० witwe.

(ख) पु० आयर० fedb.

सं० विधुरः vidhuras, आं० widower, जा० witwee.

अत्रेदं वैशिष्टचम् सं० 'विधवा' विधुरश्चेत्युभावपि शब्दौ वि-'धुनोते' निष्पन्नौ।

सं० अधि adhi (उप), आं० ad यथा सं० अध्याप्त adhyāpt आं० adopt.

सं० √इन्ध् indh, एधः aidhas, इध्मम्, इन्धनम्, ग्रीक √aithein, aither, आं० ether, फा० हैंजम, हेनियः हेम, (इन्धनम्)।

सं० अधर आं० under, ला० infer—to bring on, ला० आं० inferior.

**पवर्गः**

७०. (क) भारोपीयस्य पवर्गस्य ध्वनयोऽपि संस्कृते याथातथ्येन सुरक्षिता विद्यन्ते। (आवेस्तिकप्रत्नपारस्यावप्यार्यवर्ग एव सम्मिलितावत एवास्मिन् संस्कृत-वैशिष्ट्येऽवेस्तिकप्रत्नपारस्यावपि ग्राह्यौ) लातिन्याद्यासु कासुचिद् यूरोपीय-भाषास्वपि पकारध्वनिः प्रायेण सुरक्षितः।

(ख) संस्कृतलातिन्ययोः कपयोर्व्यत्ययोऽपि जातः।

(ग) वर्गस्यास्य महाप्राणो 'भः' संस्कृते क्वचिद्धकारे परिणतः। यथा वैदिको √ग्रभ् संस्कृते —ग्रह् जातः। वै० गृभ्णाति, सं० गृह्णाति।

(घ) आयरीयांग्लीयसदृशासु वाक्षु पदादौ पकारो लुप्तः बकारो वा जातः।

सं० प p > f, ph, b, संस्कृतावेस्तिकग्रीकलातिन्यासु प p > आंग्लीये फ f अथवा परवर्तिस्वरश्चेदुदात्तः ब b, जार्मण्ये ब b फारस्यां पकारस्थाने क्वचित्फकार बकारश्च क्वचिच्च पकार एव सुरक्षितः, आर्मेन्या ह h.

अधुना केचिदेतादृशाः शब्दा उपस्थाप्यन्ते यत्र संस्कृत इवान्यासु सजातीय-भाषास्वपि पकारः स्वरूपेण परिवर्तितरूपेण वा विद्यते।

**७१. पदादौ पः p—**

सं० परः paras, परा parā, (निपा०), ग्रीक peran (अपरस्यां दिशि), गॉ० fairra आं० far आर्मे० heri.

सं० √पत् pat, पतामि patāmi, (उत्पतामि, पूर्वं पततेरुत्पतनमेवार्थ आसीत्, पश्चात् 'पतनं' जातम्), ग्रीक pot-o-mai, आं० pit.

सं० अपप्तम् (apaptam), ग्रीक e·pt-o-men, लाति० peto, पु० आयर० ēn (पक्षी), आं० put फा० उफ्तादन्, पं० पुटसुट्या (उत्पाटयति, एवं पत् धातुः पञ्जाब्यामद्यापि स्वीये प्रत्नेऽर्थे सुरक्षितः), हि० पड़ना, गिर पड़ा।

सं० √पृ, पर्णम् > आं० fern (feather, leaf).

सं० √प्लु plu, प्लव् plav, प्लवामि plavāmi, प्लवः plavas, ग्रीक ple (f)-o (तरामि), लाति० pluit, आर्मे० luana-m, पु० बुल्गा० plova (प्लवामि) पु० आयर० lauth, पु० उ० जा० flewen, लिथ० planju, आं० float, laundary अप्येतस्मादेव। लाति०, आयर०, पु०उ०जा० लिथ्वान्यादिषु प्रक्षालनमर्थः।

सं० पाशः pāśas, ग्रीक pēgnōmi (बध्नामि) लाति० oax, pāngō, उम्बे pase (pace), osc. poakul, poculus, गॉ० fāhan ग्रहणम्), अपहरणम्), म०उ०जा० vunoge, आं० fasten, पं० फाहि, हि० फांसना।

सं० पुरुः purus (बहु, प्रभूतम्), ग्रीक polu-s, poly, polygamy पुरुजानि (पोली इत्युच्चार्यते यथा polytechnic), पुरुपाद्, ग्रीक, लाति० आं० polypod, लाति० आं० plus, plural, जा० fele (much) आयर० il.

सं० पशुः <*pek$_{u}$us, लाति० pecu-s, गॉ० faihee (द्रव्यं-धनम्), पु०उ०जा० fihu सर्वत्र पशुरेवार्थः, आं० fee अत्र शुल्कार्थो जातः, यतो हि पशुभिरेव पूर्वं वस्तुविनिमयोऽभवत्। जा० vieh 'फी' इत्यस्यार्थः पशुरेवास्ति।

सं० √प्रच्छ् prachh, प्रश् praś. <prek$_{u}$, पृच्छामि, प्रश्नः, अवे० peresāmi, लाति० precēs, procu-s, posko (प्रश्नः) लिथ० praszyt (प्रश्यति), पु० बुल्गा० prositi (अभ्यर्थनम्) जा० fragen, फा० पुर्सीदन्, हि० पूछना।

सं० पलितः palitas, ग्रीक pelio-s, polio-s, आंग्ल्या polio अप्येष एव यतो हि अत्रापि अंगविशेषे रक्तः श्वेतो भवति। लिथ० palsza-s (पीतः श्वेतो वा), पु० बुल्गा० plavu (श्वेताभः), पु० उ० जा० falo, आं० pale.

सं० परशुः paraśu-s <perk$_{u}$us, ग्रीक pelekus.

सं० √पच् *pek$^{w}$e, पचामि pachāmi, पक्तः, पक्वः pakvas< √pek$^{w}$e, ग्रीक pessô, pepsō, √pep, pepsin, peptic <पक्त लाति०

coquo <quepuo, popink, आर्मे० epem (अपचम्) आं० cook <kvekvō <pekvo. ग्रीक्यां kʷi > pe तथा च लातिन्यामांग्ल्याञ्च p > k, co जातः । √poach (पु० फा०, लाति०) to cook an egg in boiling water, आं० peptic (पाचकः), फा० पख्तन्, पुख्ता, आश्पज्, (सूपपाकः) ।

सं० √पिब् pib (पा इत्यस्य द्विरुक्तं रूपम्) पिबामि, ग्रीक pino (ग्रीक्यां द्विरुक्तं रूपं नास्ति पी p इत्येवास्ति), लाति० pibo, bibo, पु० आयर० ebaim <pibo. आं० bib—to drink दुग्धपानादिके शिशूनां ग्रीवायां बद्धं वस्त्रं च ।

सं० पत्रम् patram (पक्षम्), पु० उ० जा० fedara, आं० feather, (Sh. Ox. Eng. Dic.).

सं० √पूयी pūyī (विशरणे दुर्गन्धे च) पूय्यते, पूयः, पू-तिः लाति० आं० pū-trid (पूतियुक्तः) ग्रीक, लाति०, आं० pyo, (पूयः), pyoid (पूयभेदः), pus (पीव) putrefy, purtrescence pyorrhoea (दन्तपीवः), pyogenic (पूयोत्पदकः) polute, polution (पूतियुक्तं, अपवित्र, दूषितं, दूषितकरणम्), हि० पीव, पीप ।

सं० पायुः (मलद्वारम्), ग्रीक, लाति०, आँ० pylorus (उदरान्तमार्गः) ।

सं० परशुः parśus < *perk̯us, ग्रीक perkus.

सं० √पू pū, पूयते pūyate, पुनाति, पूतः, लाति० आं० pure, purity (संस्कृते तः प्रत्ययः लातिन्याञ्च रः ।), purify, purist, purge (शुद्धिकरणम्), pious (पवित्रः), सं० पावकः, ग्रीक pur, puros. अग्निः, आंग्ल्यां pyro इत्यर्थकं पूर्वपदमपि प्रयुज्यते आं० fire अप्येष एव । आंग्ल्याश्चिताग्न्यर्थकः pyre शब्दोऽप्येष एव । अत्र तथैवार्थसङ्कोचो जातो यथा राजस्थान्यां 'दाग' <दाह <दाघशब्दस्य चितादाहे ।

सं० प्रौढिः prāudhi लाति० आं० pride ?

सं० प्रौढः prāudha-s लाति०, आं० proud.

सं० प्र pra (उप) आं० pro pre.

सं० प्र-मतः pra-matas, आं० promote.

सं० √जा, √ज्ञा प्र-जनयितर् pra-janayitār (पूर्वजः), लाति० आं० pro-genitor. आं० pre-gnant, प्र-पूर्व-जननी। संस्कृतेऽपि जननार्थको 'ज्ञा' धातुरप्यस्ति। 'ज्ञातिः' पं० वंशजः, ज्ञातेयः सदृशाः शब्दा अनेनैव जाताः।

सं० प्रज्ञानम् pra-jnanan, लाति०, आं० pro-gnesis (रोगस्य पूर्व-निदानम्)।

सं० प्र-कृत pra-kṛta प्रकारित prakārita, लाति० आं० pro-create.

सं० प्रतर pratar (दूरतर), लाति०, आं० preter (निपा.)।

सं० √पृ pṛ, √पूर् pūr *pel पूरयति pūrayati, पूरः pūras, लाति० आं० pour. सं० पूर्ण *pḷno>पू जा० fulnaz> आं० fill अत्र प्रत्ययस्य नः पूर्वसवर्णो जातः।

सं० पश्च paśca *poskʷe,> लाति० poss पश्चादर्थे निपातः। आं० post.

सं० पुरी purī, लाति० आं० polity (farm of civil govt. ग्रीक polis (पुरी), political, matro-polis.

सं० पीत-द्रु pita-dru, आं० pine-tree.

सं० √पिंश् pinś (वै० चित्रीकरणे) पेशः, लाति० आं० pic-pictorial, picture. फा० नविश्तन् (अत्र नी उपसर्गः)।

७२. **पदमध्ये पदान्ते च पः p—**

सं० स्वप् svap, √स्वपीति, स्वप्नः, ग्रीक hupno-s लाति० sopor, somnu-s, पु० आयर्० suan, ए०से० swefan, पु० आइस० svefn, लिथ० sāena-s पु० बुल्गा० supati, sunu, फा० ख्वाब, ख्वाबीदन्, हि० सोना, सपना (आंग्ल्याः sleep इत्यत्र वकारस्य लकारो जातः अथवाऽयं कश्चिदन्यो धातुः। हिन्द्यामपि सोना-सुलाना इत्यत्र लकारो दृश्यते।)

सं० √सृप् sṛp, सर्प्, सर्पामि, सर्पः ग्रीक herpō लाति० serpō, आं० creep, serpent.

सं०नप्त्यः naptya-s (वै०) नप्तिः (grand-daughter), नपात्, अवे० नपाँ, ग्रीक nepodes (बालकाः), लाति० nepos, nepti-s आयर० niae आं० nephew

(भागिनेयः), पु०उ०ज० nefo, पु० फा० नपा, फा० नवासा (पौत्रः, दोहित्रः) हृ० नाती, नातिन।

सं० अपि api, ग्रीक epi, आर्मे० ev, लाति० op, optineo, आं० option.

सं० उप, लाति० sub आं० up.

सं० उपर् upar (ri) ग्रीक hupeir, huper, लाति० s-uper गॉ० ufar, आं० over, upper, hyper.

सं० √तृप् tṛip, तर्प् trap, ग्रीक terp-ō, लिथ० tarpa.

सं० अपस् apas (वै० कर्म), लाति० opus, आं० operate, opera-a work produced operator, operose.

सं० √तप् tap, लाति० tepeō, पु० आयर० $t^{\bar{e}}$ (ब०व० teit<tepent), पु० बुल्गा० $t^{o}$fiti, हि० ताप, तपत पं० तत्ता फा० तापिदन्)।

सं० अप ap (उपसर्गः), ग्रीक apo, गॉ af, पु०उ०जा० aba लाति०, आं० off. ab यथा absent, abnormal abete <सं० अप० इत. अपेत (संस्कृते प्र उपसर्गेण योऽर्थो निष्पद्यते स एव लातिन्यां 'अप' उपसर्गान्निष्पन्नेन abati इत्यनेन निष्पद्यते।) obituary abattoir, (मृत्युवार्ता), अत्रापि अप ob जातः, आं० off.

सं० √लिप् lip, रिप् rip, अभिलिप्यते, ग्रीक lipos, (grease), lipareō (I persist in), लाति० lippus, लिथ० limpu, पु० बुल्गा० pri-lipljan, lipeti (अहं श्लिष्टोऽस्मि), गॉ० bi-leiba, पु०उ०जा० bilibu, ए०से० be-life, आं० believe.

सं० √रुप् rup, लुप् lup, लुप्यति, लाति० rumpō गॉ० raupjan, जा० roufen (to pluck), ए०से० reofan, पु० आइस० rjūfa.

**सं० फः ph, f**

७३. सस्कृतस्य वर्गीया द्वितीयाक्षराः खथफाः कतपैः सह महाप्राणांश 'ह' योगेन व्यत्पन्नाः। लीरंजीयलवादिनस्तु लीरींजियल वर्णं ह h योगेन निष्पन्ना इति वदन्ति।

यद्यपि ग्रीकलातिनजार्मण्यादिषु शुद्धः फ ph कारेण युक्ताः संघर्षी f फ़कारेण युक्ता वा धातवः शब्दाश्च प्रभूताः सन्ति, तथाप्येतादृशा धातवः शब्दाश्च केचिदेव विद्यन्ते यत्राद्यभारोपीयभाषायां संस्कृते च फकारस्तिष्ठति, ग्रीकलातिन्यादिष्वपि तत्र फकार उपलभ्येत। यथा हि—

सं० √ स्फायी वृद्धौ स्फारः sphāras, स्फालः आं० sphere, spare, सं० स्फीत, आं० speed. सं० ष्ठीवः sṭhivas, ग्रीक ptao spyuyo लाति० spuo, गॉ० speiva आं० spit. (संस्कृत 'ष्ठीव' शब्दे 'स्फीत' शब्दस्य तपयोर्व्यत्ययो जातः)।

सं० फेनः phēnas, आं० foam, पु० आं० fam. (अत्र नमयोर्व्यत्ययो जातः)।

सं० √ फुल्ल विकसने प्रफुल्ल आं० flcara, flower.

सं० √ फल् निष्पत्तौ, फलम् आं० friut.

सदृशेषु समानार्थकेषु शब्देषूभयत्र फकारो विद्यते, परं तेषां साजात्यन्तु सन्दिहानम्।

सं० √ स्फुर् धातो आंग्ल्या sparrow सम्बध्यते।

**सं० ब b ला० आं b ग्रीक p**

७४. (क) संस्कृतस्य तृतीयवर्णा गदबा लातिन्यां प्रायशः स्वरूपेण तिष्ठन्ति। ग्रीक्यां क्वचित् स्वरूपस्थाः क्वचिच्च प्रथमाक्षरेषु परिवर्तिताः।

(ख) आंग्ल्यां—

I ग द बाः सर्वत्र कतपा जाताः।

II केषुचिच्छब्देषु तत्र गदबा अपरिवर्तिता अपि विद्यन्ते। तस्येदं कारणमस्ति यत्तस्मिन् शब्दे गदबैः सह महाप्राणध्वनिर्विद्यते। एते गदबा अपि पूर्वं महाप्राणा घधभा आसन्, परं महाप्राणद्वयस्य सहावस्थानं कठिनमतएव पुनस्तस्य परिवर्तनं न जातमिति सर्वदावधेयम्।

सं० बुध्नः budhna-s <*bhudhnas, ग्रीक puthmen, pundax, लाति० fund-s, लाति०, आं० foundation, fundamental, पु० आइस० botn, जा० bodan, आं० bottom. फा० बुन् हि० बुनियाद।

सं० √बुध् budh <*bheudh, ग्रीक puth <phuth, आं० bid. (Sh. Ox. Elng. Dic.)

भः Bha

bha>आं० b, ग्रीकलाति० ph, th

७५. समस्ताः संस्कृतसजातीया भारोपीया भाषा (i) भ्रातृवर्गीया (ii) फ्रेतृवर्गीया fratirnity वर्गीया इति वर्गद्वये स्पष्टतया विभाजयितुं शक्यन्ते।

अतो घधभध्वनियुक्तानां शब्दानां विवेचनप्रसङ्गे संस्कृतानन्तरं ग्रीकशब्दोद्धरणस्य सामान्यक्रममुत्सृज्यात्र पूर्वं भातृवर्गीयास्ततश्च फ्रेतृवर्गीयाः शब्दा उपस्थापयिष्यन्ते इत्यवधेयम्।

(क) सं० √भू bhū, भव् *bhev, भवति अवे० बवइति, आं० be. फा० बूदन, हि० होता है <प्रा० भोदि <भवति।

(ख) ग्रीक phu, लाति० fu.

(क) सं० √भृ bhṛ, भर् bhar, भरामि, आर्मे० berem, पु० आयर० berim, गॉ० baira, पु० बुल्गा० beran, आं० bear, birth, फा० बुर्दन्, हि० भरना।

(ख) ग्रीक pherō, लाति० fero.

(क) सं० भ्रूः bhrū-s, आयर० brūad (ष० द्वि०), पु०उ०जा० brāwa, लिथ० bruv-i-s, पु० बुल्गा० brui-i, आं० brow, फा० अब्रू, हि० भौंह।

(ख) ग्रीक ophrū-s.

(क) सं० √भी bhī, भयते, भीरुः, पु० बुल्गा० bo-a-ti भयते।

(ख) लाति० fear (आंग्ल्यामप्येष आगतः, अत्र फकारः संघर्षी जातः)।

(क) सं० भूमिः bhūmi-s, अवे० बूमि, पु० आयर० buith (अस्तित्वम्), पु०उ०ज० būan (निवासः निर्माणम्), लिथ० bu-ti, पु० बुल्गा० byti, जा० baum < भौमः-वृक्षः।

(ख) ग्रीक fu-si-s (प्रकृतिः), physics, लाति० fuam, futūru-s आं० future < भवितर्।

सं० भृङ्गः bhṛngas —आं० bee, हि० भिड़, पं० भूंड।

(क) सं० √भा bhā, भास् bhās, (संस्कृते प्रकाशार्थे वर्तते, भाषणार्थे शब्दार्थे वा अस्यैव षकारयुक्तं रूपं 'भाष्' इति प्रयुज्यते, परं ग्रीक्यां लातिन्याञ्च भाषार्थे भा धातुरपि प्रयुज्यते। यथा ग्रीक phēmi (भाषे), phō-ned, (ध्वनिः, शब्दः), आंग्ल्या phone अप्येष एव। लाति० fa-teor, fā-ma. आं० face, शब्दोऽपि भातेरेव जातः। आंग्ल्या focus (वस्तुतोऽग्नेः प्रकाशस्य वा स्थानम्,) photo<भातम् इत्यादयो नैके शब्दा भातेर्भासतेर्भाषतेर्वा निष्पन्नाः।

**पदमध्ये पदान्ते च भः**

७६. येषु संस्कृतशब्देषु पदमध्ये पदान्ते च भकारोऽन्यासु सजातीयभारोपीय-भाषास्वपि स उपस्थितः।

(क) भ्रातृवर्गीयजार्मण्यादिभाषास्वल्पप्राणो बकारोऽस्ति।

(ख) परं ग्रीक्यादिषु क्रेतुवर्गीयासु स फकारे परिवर्तितः। यथा—

सं० नाभिः nābhi-s, (क) पु०उ०जा० naba, nabolo, आं० navel< सं० नाभिलम्। जा० nabel, लाति० nubilicus, आं० nave—चक्रनाभिः। (ख) ग्रीक omphalos.

(क) सं० नभः nabhas, पु० आयर० nēl<neblo, पु०उ०जा० nebul (मेघ: निहारः), आं० nebula (लातिन्यामप्येष शब्दोऽस्ति), लिथ० deb-i-s (अत्र नकारस्य दकारे परिवर्तनकारणं न ज्ञायते), पु० बुल्गा० nebo. लाति० nubus.

(ख) ग्रीक nephos.

(क) सं० जम्भः jambhas<*g$^{w}$embhos. पु०उ०जा० chamb, आं० comb, लिथ० gambad (मुखम्), पु० बुल्गा० ganbu (दन्तः)।

(ख) ग्रीक० gompho-s.

(क) सं० बभ्रु babhru <*bhe-bhr-ur (वन्यजीवविशेषो वर्णविशेषश्च) अत्रापि द्वयोर्महाप्राणयोः प्रथमोऽल्पप्राणो जातः। आं० brown, अवे० bawr-ar, पु०उ०ज० bibar, लिथ० bebru-s, पु० बुल्गा० bebru आं० beaver,

beer, हि० भूरा, बबर शेर, (यतो हि एष सिंहोऽपि बभ्रुवर्णो भवति)। (ख) लाति० fiber.

सं० अभि abhi (उपसर्गः) अभितः समन्तात्, समीपे, अवे० aiwi (गाथा०) aibi), पु० फा० abivi (इतः hither), गॉ० bi, पु०उ०ज० bī, आं० by द्वारा। ला० ab.

सं० शुभ्र *k̯ubh-ro-s, आर्मे० surb.

(क) सं० अर्भः arbha-s, लाति० arbus, पु० आयर० orbe (वंशानुगतः), गॉ० orbi.

(ख) ग्रीक orphano-s, आंग्ल्या orphan अप्येष एव।

सं० √लुभ् lubh, आं० love.

(क) सं० गर्भः garbha-s <*gʷelbh, गॉ० kalbo, पु०उ०ज० kalba, आं० calf (अत्र l अनुच्चरितः। ग्रीकप्रभावाद्बकारश्च फकारो जातः)।

(ख) ग्रीक dolpho-s, delphu-s, adelphos सगर्भ्यः, सोदरः।

## स s

७७. व्यञ्जनध्वनिषु ये ये स्पर्शा अन्तस्थाश्च सर्वासु संस्कृतसजातीयभाषासु सामान्यतयोपलभ्यन्ते ते प्रदर्शिताः। स्वरा अपि विवेचिताः। अधुनोष्मध्वनयो विवेच्यन्ते। संस्कृते श ś, ष ṣ, स s हा इति चत्वार उष्माणः सन्ति। एतेषु केवलं स s एव भारोपीयोऽस्ति। शषौ तु संस्कृते नव्यौ विकसितौ। तौ च पूर्वमेव विवेचितौ। भारोपीयौ ज़्ज़ौ zz संस्कृतेऽनुपलब्धौ, तयोःस्थाने क्वचित् ष ṣ क्वचिच्च ड जायते। हकारोऽपि सर्वासु सजातीयभाषासु नवोद्गवः। संस्कृते हकारः प्राधान्येन धकारात् क्वचिच्च घकारभकाराभ्यामपि विकसितः। इरान्यासु हकारः सकाराद्विकसितः। ग्रीक्यां क्वचित्सकारः क्वचिद् यकारः क्वचिच्च वकारो हकारे परिणतः। तत्र पदादौ प्रथमाक्षरे द्वितीयाक्षरे वा हकारो विद्यते।

एवमुष्मध्वनिषु केवलं स s एव सर्वासु सजातीयभाषासु सामान्येनोपलभ्यते।

**७८. सकारस्य चतुर्धागतिः**

**स s > ह h, ज़ z ष ṣ र r**

अनेकासु संस्कृतसजातीयभाषासु सकारो विशेषतः कतपैरन्यैश्च स्पर्श-वर्णैरन्तस्थैर्यरलवैश्च संयुक्तः सकारः सुरक्षितस्तथाप्यस्य सकारस्य नानाभाषासु चतुर्विधागतिर्जायते । तद्यथा—

१. स > ह—

(क) ग्रीकेरानीयार्मेनीयायरीयाद्यासु भाषास्वनेकासु परिस्थितिषु सकारस्य हकारो जायते । ग्रीक्शमीरान्यासु च भाषासु पदादौ स्वरयुक्तः स हकारे परिणमति ।

सं० सः sas, गॉ० sa, ग्रीक ho.

सं० सहे sahē, ग्रीक hexo (धारयामि I hold, I have).

सं० सम sama, ग्रीक homou (समं सार्धम्), लाति० आं० similis, गॉ० sama, आं० same. फा. हमा ।

सं० सामी sāmī (अर्ध), ग्रीक hemi-bios, लाति० semi, semi-vios (अर्धजीवित), आं० semi.

(ख) स्वरमध्यः सकारश्च हो भूत्वा विलुप्यते । यथा हि—

सं० असानि asāni, ग्रीक aō, o.

सं० उषस् uṣas, ग्रीक au-ōs, asia, east, Australia, सदृशाः शब्दा अप्यनेनैव सम्बद्धाः ।

(ग) व्यञ्जनमध्यगः सकारोऽपि लुप्यते । यथा—

सं० पार्ष्णिः pārṣṇi-s, उ० जा० fersna, ग्रीक ptera (heel).

लातिन्याम्—

लातिन्यां सकारस्य द्विविधा गतिर्जायते । तद्यथा—

(क) सकारस्तिष्ठति ।

(ख) सकारो रेफे परिणमति ।

**७९. (क) पदादौ स्वरैरन्तस्थैश्च युक्तः सकारः सुरक्षितः । यथा हि—**

सं० स (एकार्थको निपातः), सं० स-कृत sa-kṛt (एकधा कृत्तं-छिन्नम्), स-हस्र अत्राप्येकार्थकः सकारः, ग्रीक he-kton (एक शतम्), लाति०, आं० simple (एकधा पूर्ण साधारणम्), simplex (free from duplicity द्विधाहीनः, शब्दार्थ एकधा पूर्णम्) single (only एकल), singular सर्वत्र स-sim, एकार्थको निपातः।

सं० सम sama (निपात), आं० same, sameness.

सं० समता samatā, लाति० similis, आं० simle (simily), similar, similiarly, similiarty.

सं० समः samas आं० some.[१]

सं० सूरः (वै०), लाति० sol, आं० solar.

सं० सत्यम् stayam, आं० sooth (true), sooth-sayer (सत्यवक्ता, भविष्यवक्ता)।

सं० सन्ति santi, लाति० sunt, sent, गॉ०, जा० sund, (ज़िण्ट इत्युच्चार्यते), फा० अन्द (अत्र आद्यसकारो हकारो भूत्वा लुप्तः)।

सं० स्वनः swanas, लाति० sonus, आं० sound, sonic (supersonic) सदृशेषु शब्देषु स्वार्थिकः डः d प्रत्ययो नास्ति। फ्रेंच soen 'सोएं' इत्युच्चार्यते।

सं० स्व sva (आत्मार्थकं सर्वनाम), लाति sē, sovo-s, suo-s, seso, sibi, seu, आं० sue-cide, सदृशेषु शब्देषु पूर्वपदरूपेण विद्यमान sue स्यू अपि संस्कृतस्य स्व एव।

सं० √स्थग् sthag, ग्रीक stegos (छदिः roof), लाति० tego. जा०, आं० deck, पु० आइस० thak.

सं० √स्तुद्, तुद् tud, लाति० tundo, गॉ० stuatan, पु०उ०जा० stozan, आं० stout.

सं० √स्पश् (वै०) spaś, √पश् paś, स्पष्ट spaṣṭa, स्पशः, पस्पशाह्निकः, लाति० spicio, पु० बुल्गा० poziti, आं० spect, respect, inspect; aspect, spectacles, spectetors, speculation, spy इत्यादयो नैके शब्दा निर्मीयन्ते।

---

१. Sho. Ox. Eng. Dic.

सं० √स्पर्ध् spardh, आं० sport.

सं० स्तरिः stari (वन्ध्या गौः), ग्रीक steira (वन्ध्या गौ), लाति० sterdis, आं० sterile, sterlize.[1]

सं० सप्त sapta, लाति० sept, जा० sieben, आं० seven, फा० हफ़्त।

सं० सर्व sarva, ग्रीक hollos, ला० आ० sole (अत्रैकार्थको जातः), आं० whole, all.

८०. (ख) स्वरयोर्मध्ये सकारो रेफे परिणमति। आंग्ल्यामप्येषा विकृतिर्दृश्यते।

पदान्त उपधायाञ्च सं० 'षो' लातिन्यामांग्ल्याञ्च रेफे परिणमति। यथा—

सं० असानि asāni, लाति० ero.

सं० मूषः mūṣas, मूषम्, लाति० mūrem.

सं० उषस् uṣas. लाति० aur-ōr-a, aurora, orient (प्राच्य) सदृशाः शब्दा अप्यनेनैव सम्बद्धाः।

सं० जनसः janasa-s, लाति० generis.

सं० अवेदिषम् avediṣam, लाति० videram.

सं० इषुः iṣus, लाति०, आं० arrow.

सं० शशः śaśas, लाति०, hare.

सं० विषः viṣas, लाति०, आं० virus.[2]

सं० √धृष् dhṛṣ, धर्षः dharṣas, आं० dare.

सं० आस् (वै०) आस्यम्, लाति० आं० or-al, oral (मौखिकम्)।

सं० अयस् ayas. आयसम् āyasam, लाति० aes, airis, आं० ore, iron, आयरिश iarn, सिम० hearn, गॉ० aiza, जा० eisen, फा० आहन।

सं० केशः keśas, लिथ० gesmi (मन्दप्रकाशाग्निः), पु० बुल्गा० kosmu आं० hair, kosa पु०उ०जा० har<kheza (जार्मण्यां संस्कृतस्य ककारः खकारो भूत्वा हकारे सकारश्च रेफे परिणतौ), फा० गेसू।

---

१. (Sho. Ox. Eng. Dic.)

सं० √त्रस् tras, त्रासः trāsas ग्रीक treo, लाति० आं० terror, फा० तरसादन ।

सं० √भी bhī, bhis, आं० fear.

सं० अपस् (कर्म), लाति० आ० opera.

अन्यत्रापि सकारो रेफे परिवर्तते । यथा—

इयस् प्रत्यस्य सः—

सं० महीयस् mahiyas, लाति० आं० major.

सं० नेदीयस् nediyas, लाति० आं० near.

सं० युवन्-ईयस् yuvan-īyas आं० jun-ior, younger <युवनक-ईयस् । सं० 'युवक' शब्दे नकारो लुप्तः ।

सं० सन-ईयस् san-īyas आं० sen-ior, आं० sire, sir शब्दावप्यनेनैव निष्पन्नौ (Sh. Ox. Eng. Dic.).

पदमध्यगो वकारयुक्तससकारोऽपि रेफे परिणमति । यथा—

सं० मनस्विन् manasvin, लाति० minarva<menerva (वाग्देवी), ग्रीक menes (बुद्धिः चेतना, मस्तिष्कम्) ।

**८२. सस्य लोपः**

अनुनासिकैरन्तस्थैश्च युक्तः सकारः लुप्यते । किन्तूम्बेरियन विभाषायां सकारः सुरक्षितः ।

सं० √स्ना snā, स्नामि, स्नातः, उम्ब्रे० snate लाति० nāre, पु० आयर० snām, हि० नहाना (इत्यत्राद्य सो लुप्तः) ।

सं० √स्निह् <*snig$_v$h, लिथ० snīgas, लाति० ninguit, nix, आं० snow.

सं० √स्ना बन्धने, स्नायुः, आं० sinew.

सं० स्नुषा, लाति० nurus, पं०, मराठी, नू ।

सं० √स्मि smi, लाति० mirus (अद्भुत, आश्चर्यजनक) लाति० आं० miracle, marvelous इत्यादयः ।

सं० स्मेरः smēr, आं० smile, फा० तबस्सुम, हि० मुस्काना ।

सं० √स्मृ smṛ, स्मर्, लाति० आं० me-moir, memory, memorendum, memorial फा० शुमारीदन, हि० सिमिरन।

'स्र' sra इत्यस्य थ्रो thro भूत्वा फ्र fra जायते ततश्च फ्र fra ब्रः bra-s जायते।

८३. सं० sra लातिन्यां >thra>fra>bra आंग्ल्यां जार्मण्याञ्च stra.

सं० तमिस्र tamisra, तमिस्रम्, लाति० tenebral, पु०उ०जा० dinstar.

सं० मांस-रम् māns-ram>mensro>लाति० mimbrum, गॉ० mimza, प्रशा० mensa, पु० बुल्गा० menso.

सं० सि(शि)रस्-रम् siras-ram,>सिरस्रम्, लाति० cerebrum.

आयरीयामनुनासिकात्परः सकारस्तिष्ठत्यनुनासिकश्च लुप्यते। नव्य आंग्लजार्मण्यादिवर्गेऽप्येष नियमः। यथा—

सं० हंसः hamsa<$g^w$onsa, लाति० ānser, आयर० gēis, पु०उ०जा० gans, आं० goose.

८४. आंग्लजार्मण्यादिट्यूटानिकवर्गे पदादौ स्वरैः कतपैः खथफैर्यरलवैश्च युक्तः सः सुरक्षितः। यथा—

सं० सूनुः sūnus, ग्रीक vios, गॉ० sunus, जा० sohn, आं० son, sun, जा० sonne अपि सं० सूनोरेव सम्बद्धौ यतो हि संस्कृते सूनुशब्दः सूयर्थकोऽप्यस्ति।

सं० √सद् sad, आं० sit, saddle.

सं० √षो अन्तकर्मणि ṣo, स्यति, विदारयति, आं० saw.

सं० √स्फायी sphāyī, स्फि sphi, लिथ० spejie, आं० sphere, spin, space, spare.

सं० √सीव् sīv, स्यूतः, आं० sew.

सं० स्था sthā, आं० stay (stand, station सदृशाः शतशः शब्दा अनेन निष्पद्यन्ते)।

सं० स्थूल sthūla, ग्रीक stulos (स्तम्भः), आं० stool अप्येष एव।

सं० √स्तृ stṛ, स्तृत >आं० straw एतदपि स्तृतं भवति।

सं० √स्तेय steya, स्तेन, आं० steal, stole, लिथ० stogus (चौरयामि)।

'स्र' sra, 'स्ल' sla इत्येतौ संयुक्तध्वनी संस्कृते स्वरूपेण सुरक्षितौ। परमन्यत्र नानारूपेषु परिवर्तितौ। ग्रीक्यां स्ल sl>ll जायते। यथा—

सं० घस्र ghasra> स-हस्र<*gheslo>ग्रीक xillio, khiloi >आं० killo.

८५. आंग्लार्मेनीयेरान्यादिषु 'स्र' sra इत्यस्य 'स्त्र' stra इति जायते तुकागमेन। यथा—

सं० अस्र (वै०) asra, चतुरस्र (तीक्ष्णधारायुक्तं शस्त्रम्) फा० अस्तूर, हि० उस्तरा।

सं० स्वसृ, स्वसर् svasar, आं० sister.

सं० √स्रु sru, आं० stream.

८५. ईरान्यासु स्व इत्यस्य ख्व जायते। यथा—

सं० स्व sva स्व-इष्, फा० ख्वाहिश।

सं० स्वतः svatas, फा० खुद।

सं० स्वसर् svasar, फा० ख्वाहर।

सं० स्वस्तन स्वस्य, फा० ख्वेस्तन।

## हकारस्य विकासः

८६. अनेन ध्वनिविवेचनेनैतत्सम्यगवगतं स्याद्यद्धाकारो भारोपीयो मूलध्वनिर्नास्ति। बाल्टोस्लाववर्गीयरूस्यादिभाषातिरिक्तास्वन्यासु यासु भाषासु हकारो विद्यते तास्वपि हकारविकासस्य मूलद्वयमवलोक्यते। (१) सकारात् (२) महाप्राणवर्णेभ्यश्च।

(१) ग्रीकेरानीयगुजरातीराजस्थान्यादिष्वनेकत्र सकारो हकारे परिवर्तते[1]। एतासु भाषासु हकारः सकारमूलक इति यावत्।

---

१. संस्कृते त्वेकत्रैव सकारो हकारे परिणमति, स च धातुविशेषस्य लोटि मध्यमपुरुषैकवचनस्य 'सि' इत्यस्य 'हि' इति रूपे परिणतावलोक्यते। तदर्थञ्च पाणिनिना 'सेर्ह्यपिच्च' ३-४-७७ इति विशेषं सूत्रं निरमायि।

एतादृशान्युदाहरणानि तु पदे पद उपलभ्यन्ते यत्र सकारो हकारे परिणतः ।

(२) महाप्राणेभ्यो हकारस्य विकासोऽपि द्विधा जातः—

(क) खथफेभ्यः, (ख) घधभेभ्यश्च ।

*k>ख kh>ह h

८७. (क) आङ्ग्लजार्मण्यादिट्यूटानिकवर्गीयासु भाषासु यत्रकुत्रापि h विद्यते सर्वत्रासौ ख kh काराज्जातः । खकारश्च *ककारजः ।

आंग्ल्यादिषु ककारस्य हकारे परिणतेरपि भूयांस्युदाहरणान्यत्र प्रसङ्गान्तरेषूपस्थापितानि । ग्रीक्यामिव हिन्दीपञ्जाबीराजस्थान्यादिष्वपि पदादौ स्वरात्पूर्वं क्वचिद् हागमो भवति । हि० होठ<ओष्ठः हि० हिन्दोला <आन्दोलन, पं० हंजु <अश्रु इत्यादयोऽनेके शब्दा अत्र परिगणयितुं शक्यन्ते ।

८८. (ख) संस्कृते यत्रकुत्रापि हकारोऽवलोक्यते तस्य मूलन्तु *घधभेष्वन्यतममेवास्तीति निश्चप्रचम् । आंग्लजार्मण्यादिषु ट्यूटानिकवर्गीयासु घधभा अल्पप्राणा गदबा जायन्ते । संस्कृते च घधभा अनेकत्र हकारे परिणताः । अतएव संस्कृते यत्रकुत्रापि हकारो विद्यते तस्य स्थाने यूरोपीयासु भाषास्वीरान्यासु च गदबेष्वन्यतमो ध्वनिर्विद्यते । एवमपि वक्तुं शक्यते यत्संस्कृते घ gh ध dh भ bh ध्वनिनामन्त्यः महाप्राणांशभूतः ह h एवावशिष्टः । अन्यासु भाषासु च तेषामल्पप्राणा गदबा विद्यन्ते । तदेवं संस्कृते हकारस्त्रिविधमूलकः । सामान्यतस्तु संस्कृते घकार एव हकारे परिणमति । परमनेकत्र धभावपि 'ह'त्वमापद्यते । भारोपीयभाषाणां तुलनात्मकाध्ययनेनाधुनैतन्निर्णेतुं सुकरं जातं यत् कस्मिंच्छब्दे हकारो घकारमूलकः कुत्र च धभयोरन्यतराज्जात इति । यथा हि—

८९. प्रवाहार्थकः प्रवहणार्थको वा √ *वघ् $veg_{v}h$, उद्वहनार्थकश्च *√वध् vedh इति भारोपीयं धातुद्वयमस्ति । संस्कृते उभावेव √वह् इत्येकस्मिन् हकारवद्रूपे परिणतौ । परं 'वधू' शब्दे √वध्, 'वाघतः' शदृशेषु वैदिकशब्देषु च √वघ इति वहतेः पृथग्रूपद्वयमवशिष्टम् । आंग्ल्याश्च wagon <*$veg_{v}h$, wed, wedding <*√vedh सदृशेषु शब्देषु धातुद्वयस्य पृथग्रूपे सुरक्षिते । संस्कृते तु 'वधूर्वहतेरेव निष्पाद्यते परमयं वधूत्पादको वह् <*'वध्' धातोरुत्पन्न इत्यवधेयम् । एवमेव संस्कृतेऽन्यत्रापि कुत्रचिद्धकारो यूरोपीयास्वीरान्यासु वा भाषासु वा तत्स्थाने गदबानामन्यतमो ध्वनिर्विद्यते तत्र मूलभारोपीयशब्दे घधभेष्वन्यतमं ध्वनिं निश्चित्य शब्दनिर्वचनं कार्यम् ।

६०. अनेकत्र तु संस्कृत एव (लौकिके वा वैदिके वा) हकारस्थाने घधभानामन्यतमो ध्वनिर्विद्यते। स एव तस्य मूलमिति निश्चेतव्यम्। यथा हि – सं० गृह्णाति <(वै०) गृभ्णाति, फा० गिरफ्त, आं० grip, सं० √हन्, हन्ति <घ्नन्ति, सं० √दुह्, धातोर्दोग्धि इति रूप एव घकारवद्रूपं सुरक्षितम्। एवमन्यत्राप्यूह्यम्।

अधुना केचिदेतादृशाः शब्दा धातवश्च अत्र पुनर्निर्दिश्यन्ते यत्र संस्कृते हकारो यूरोपीयासु च भाषासु तत्स्थाने *घ gh> ग g, *ध dh >द d, *भ bh ब b, इत्येषामन्यतमं रूपं विद्यते। यथा हि—

सं० √हिनु hinu, <*$g_{v}$hin, >गॉ० du-ginnu, पु० उ० जा० be-ginnu, आं० begin, जा० beginnen.

सं० जिनोति जिन्वति इत्यादिरूपजातमप्यनेनैव सम्बद्धम्।

सं० √ह्लाद् hlād, < *ghlādh> आं० glad, पु०उ०जा० glat.

सं० बाहुः <*bhāghu$^{s}$>ग्रीक pexu, फा० बाज़ु।

सं० हस्त<*√dhā, धत्तम्, धस्तम्>फा० दस्तः। तदेवं दधाति, धारयति पदार्थजातमिति हस्तस्य तुलनात्मकाध्ययनोत्था भाषावैज्ञानिकी निरुक्तिरूपलभ्यते।

अनयैव दिशा हकारविकासो विवेचयितुं शक्यते।

# द्वितीयप्रकरणम्

## पदजातम्

१. 'सुप्तिङन्तं पदम्'[1] इति वदता भगवता पाणिनिना सुप्प्रत्यययुक्तं तिङ्प्रत्यययुक्तञ्च पदजातमेव 'पद' मिति परिभाष्यते इति स्पष्टमेवोक्तम्। सुप्प्रत्ययैर्युक्ताः शब्दास्तिङ्प्रत्ययैर्युक्ताश्च धातवः एव पदसंज्ञया व्यवह्रियन्ते न तु सुप्तिङ्विहीनाः। संस्कृतसजातीयभाषाणां तुलनात्मकाध्ययनप्रसङ्गे चैतदपि चिन्त्यं यत् किं केवलं शब्दसम्पत्तिरेव सर्वासां भाषाणां समानोत विभक्तिप्रत्यया अपि तत्र त एव विद्यन्ते ? तत्र चैतदवगम्यते यदवेस्तिकप्रत्नपारसीग्रीकलातिनगॉथिकाद्यन्यास्वपि सजातीयप्रत्नासु भाषासु त एव विभक्तिप्रत्यया विद्यन्ते ये संस्कृते सन्ति। परं गच्छति काले भाषाणां विकासक्रमेण यथा हिन्द्यां संस्कृतस्य विभक्तिप्रत्ययाः घृष्टा नामशेषा वा जातास्तथैवाङ्ग्लजार्मण्याद्यास्वाधुनिकनव्यासु यूरोपीयभाषास्वपि ते विलुप्तप्रायाः। यद्यपि जार्मण्यामद्यापि केचित् संस्कृतस्य विभक्तिप्रत्ययाः शब्दैर्धातुभिश्च सह किञ्चिद्ध्वनिविकृत्या प्रयुज्यन्ते।

### विभक्तयः

२. 'विभक्तिश्च'[2] इति वदता पाणिनिना सुप्तिङेति द्विविधावेव प्रत्ययौ विभक्तिसंज्ञौ स्त इत्युक्तम्। सामान्यतया अष्टौ विभक्तय इति वचनेन सुप्प्रत्यया एव विभक्तिप्रत्यया इति ज्ञायन्ते।

यद्यपि ग्रीकलातिन्याद्यास्वन्यास्वपि विभक्तिप्रत्ययास्त्रीणि वचनलिङ्गानि च सन्ति, तथाप्यष्टास्वपि विभक्तिषु त्रिषु वचनेषु च शब्दरूपाणि तु संस्कृत एव सुरक्षितानि। एतदपि संस्कृतस्य वैशिष्ट्यस्य परिपूर्णता याश्च विनिगमकं प्रमाणम्।

### त्रीणि लिङ्गानि

संस्कृतवद्ग्रीकलातिन्याद्यास्वन्यासु प्रत्नास्वाङ्ग्लजार्मण्यास्वाधुनिकासु च सजातीयासु वाक्ष्वपि स्त्रीपुंनपुंसकमिति लिङ्गत्रययुक्तं पदजातं वरीवर्ति। एतासां

---

१. अष्टाध्यायी—१-४-१४।

२. अष्टाध्यायी—१-४-१४०।

भाषाणां सर्वनामरूपाण्यपि त्रिषु लिङ्गेषु भिन्नानि सन्ति ।

परं पुरा किलैकं प्राणिनां कृतेऽपरञ्च जडवस्तूनां कृत इत्यथवैकं पुरुष-सूचकमपरञ्च स्त्रीसूचकमिति लिङ्गद्वयमेव प्रयुज्यते स्म इति कथ्यते ।

**त्रीणि वचनानि**

"द्व्येकयोर्द्विवचनैकवचने"[1] इति वचनेन शब्दधातुरूपेषु वचनत्रयमपि प्रतिपाद्यते । संस्कृतें क्रियारूपेषु तु सर्वत्र द्विवचनकृते भिन्नाःप्रत्यया विद्यन्ते । परं शब्दरूपसाधकं द्विवचनप्रत्ययजातं तु प्रथमाद्वितीययोरेकं तृतीयाचतुर्थीपञ्चमीष्वेकं षष्ठीसप्तम्ययोरेकमिति त्रयमेव विद्यते ।

एवमप्युच्यते यन्नेत्रद्वयस्य पाणिद्वयस्यैतादृशस्यान्यस्य वा द्वन्द्वं विलोक्यैव पुरा द्विवचनप्रयोगप्रवृत्तिः प्रादुरभूत् । यथा नेत्रे, हस्तौ, कर्णौ, अश्विनौ वा । गच्छति कालेऽन्येषां पदार्थानामपि कृते द्विवचनप्रयोगः प्रारब्धः ।

**सुप् प्रत्ययाः**

३. अष्टौ विभक्तयः त्रीणि वचनलिङ्गानि तेषां विभिन्नाः सुप्प्रत्ययाश्च यथा साकल्येन संस्कृते विद्यन्ते न तथा कुत्राप्यन्यत्र । आवेस्तिकप्रत्नपारस्ये तु संस्कृत-वर्गीये एव तदतिरिक्ता लातिनैवैतादृशी भाषा विद्यते यस्यां सर्वा विभक्तयस्तासां प्रत्ययाश्च पृथङ्निर्दिश्यन्ते ।

सुप्प्रत्ययाः प्राथमिका द्वैतेयिकाश्चेति द्विविधाः । हलन्तशब्देभ्यः प्राथमिका अजन्तशब्देभ्यश्च द्वैतेयिकाः प्रत्ययाः प्रयुज्यन्ते । अत्र कोष्ठकेषु द्वैतेयिकाः प्रत्यया निर्दिष्टाः ।

सर्वेषु बहुवचनप्रत्ययेषु सकारस्योपस्थितिर्लक्षयति यद्बहुवचनसूचकं प्रमुखं तत्त्वं 'स' ऽ एवास्ति । षष्ठीबहुवचनस्य 'आम्' प्रत्ययोऽपि सर्वनामसु 'साम्' इति रूपं गृह्णात्येवं तत्रापि सकारस्तिष्ठति ।

---

१. अष्टाध्यायी—१-४-२२ ।

## विभक्तिप्रत्ययाः

| कारकम् | विभक्तिः | प्रत्ययाः | | |
|---|---|---|---|---|
| | | एकवचनम् | द्विवचनम् | बहुवचनम् |
| कर्ता | प्रथमा | स् (पुं०) अम् (नपुं०), | आ (औ, पु०), ए स्त्री (नपुं०) | अस् (स्त्री पुं०) आनि (नपुं०) |
| कर्म | द्वितीया | अम् | ,, ,, ,, | अस् (आन् पु०) ,, |
| करणम् | तृतीया | आ (इन, एन) | भ्याम् | ऐस् (भिस्) |
| सम्प्रदानम् | चतुर्थी | ए (अय) इ | ,, | भ्यस् |
| अपादानम् | पञ्चमी | अस् (आत्) | ,, | ,, |
| सम्बन्धः | षष्ठी | अस् (स्य) | ओस् (योः) | आम् (नाम्) |
| अधिकरणम् | सप्तमी | इ (ए, इन्) | ,, | सु |

# विभक्तिप्रत्यया:

## एकवचनप्रत्यया:

**४. प्रथमा**

**पुंसि स्** s

*oui-s, सं० अवि: avis, ग्रीक ofi-s, लाति० ovi-s.

सं० सूनु: sūnu-s, लाति०, गॉ० sunu-s.

सं० पशु: paśu-s, ग्रीक pexu-s, लाति० pucu-s, pecu-s, गॉ० faihu[1]

*vok$^{w}$-s, सं० वाक् vāk, (हलन्तशब्देभ्य: स् प्रत्ययो लुप्यते), अवे० vax-s, वाख्स्, ग्रीक ops, लाति० vox वाक् ।

**द्वितीया**

**म्** m (**अम्** am) ग्रीक्यां m or n

*ek$_{v}$on, सं० अश्वम् aśvam, ग्रीक hippon, लाति० equvem.

सं० अग्निम् agnim, लाति० ignem.

सं० पदम् padam, ग्रीक pod-a (पोद, अत्र 'म'स्य अ जात:), लाति० ped-em.

**तृतीया**

(अस्य विभक्तिप्रत्यय आ, एन वा केवलं संस्कृतेऽवेस्तायाञ्च सुरक्षित: नान्यत्र) ।

**चतुर्थी**

ए ē <*ei, ai

सं० पित्रे pitrē, पु० लाति० virtut-ei, पु० स्लाव pater-ei, लिथ्वा पत्रे <सं० पित्रे ।

---

१. गॉथिक्यां पशुशब्दो नपुंसके वर्ततेऽतएवात्र विभक्तिप्रत्यय 'स्' नैव प्रयुक्त: । आं० fee अप्येष एव ।

**पञ्चमी**

आत् āt-d द (अकारान्तशब्देभ्य एव)

सं० वृकाद् vṛkād, लाति० lupo(d) (प्रत्ययो लुप्तः), अवे० आथ्रात् athrāt.

**पञ्चमी-षष्ठी**

अस् as, स s <*os, es, s.

सं० पदः pad-as, ग्रीक pods, लाति० pedis.

सं० वाचः vācas, <*vok$^{w}$-es, लाति० voc-is.

**सप्तमी** इ i

सं० पदि padi, ग्रीक pod-i.

सं० पितरि pitari, ग्रीक (होम०) pateri.

**बहुवचनम्**

**प्रथमा अस्** as, es

सं० मातरः mātaras, ग्रीक meter-es.

सं० सूनवः sūnavas, गॉ० sunju-s (सुन्युस्), पु० बुल्गा० synow-e (सुन्वः)।

**द्वितीया** अस् as, es, os, अन् an, ns

सं० वृकान् vṛkān, ग्रीक eluithrons, गॉ० wulfans (बुल्फान्स)।

**तृतीया** ऐस् āis, भिस् bhis स्लाव० mis, ग्रीक phi

सं० नौभिः nāūbhis, ग्रीक nav-phi.

सं० सूनुभिः sūnubhis, लिथ० sunumis.

**चतुर्थी-पञ्चमी**

भ्यस् bhyas, लाति० bus, अवे० byo, bos, fs,

सं० अविभ्यः avibhyas, लाति० ovi-bus.

सं० क्ष्मायै (वै०) kṣmāyāi (पृथिव्यै), ग्रीक xam-ai.

सं० विद्मने (वै०) vidmanē, ग्रीक idmen-ai.

(वस्तुतोऽयं चतुर्थ्या 'ए' प्रत्ययो वैदिकस्य तुमुन् प्रत्ययार्थकस्य 'असे' प्रत्ययस्यैव प्रतिरूपं विद्यत इत्येतत्तु ग्रीकलातिनरूपैः सुस्पष्टं प्रतिभाति)।

**षष्ठी**

आम् ām <om, em, ग्रीक>on

सं० पदाम् padām, ग्रीक pod-on (पोदोन्), लाति० ped-um.

**सप्तमी**

सु su > ग्रीक si, स्लाव० chu <su

सं० पत्सु patsu, ग्रीक pos-si.

सं० नृषु, nṛṣu ग्रीक andra-si.

सं० त्रिषु triṣu ग्री tri si प्र० बुल्गा० tri chu.

ग्रीक्याः सप्तमीबहुवचनस्य si सि प्रत्यये विद्यमान i इकारः सप्तम्यैकवचनस्य इ i प्रत्ययाद् गृहीत इति मन्यते।

द्विवचनम्

३. द्विवचनस्य रूपाणि तु संस्कृतादृतेऽवेस्तायां प्रत्नपारस्याञ्च यत्रतत्रोपलभ्यन्ते। यथा अवे० bravat-byam (ब्रवत् ब्याम्) प्रत्नपारस्यामपि bya इति रूपेणोपलभ्यते। प्रत्नग्रीकलातिनगॉथिक्यादीनां प्रत्नशब्दरूपेष्वपि द्विवचनरूपाणि कुत्रचिदवलोक्यन्ते।

षष्ठीसप्तम्योरोस्विभक्त्यर्थमवेस्तायां ओ इति रूपं लिथ्वान्याञ्च au, aus इति वा रूपमुपलभ्यते। यथा—

सं० द्वयोः dvayo-s लिथ्वान्यां dvejaus इति।

सर्वासु सजातीयभाषासु पुंसि प्रथमाद्वितीययोर्द्विवचनस्य आ<ओ o इति विभक्तिप्रत्यय आसीत्। वेदानाम्-'द्वा सुपर्णा सयुजा सखायः' 'अष्टा', 'अश्विना' सदृशेषु प्रत्नरूपेषु प्रथमाद्विवचनस्य 'आ' विभक्तिप्रत्ययो विद्यते। सं० 'अष्टा' स्थाने ग्रीकलातिन्यादिषु octo इति द्विवचनान्तं रूपं विद्यते एव। पश्चात्का-

**वृक शब्दः—संस्कृतग्रीकलातिनगाथिकलिथ्वान्यासु शब्दरूपाणि एकवचने**

| विभक्तयः Cases | संस्कृत | | ग्रीक | लातिन | गॉथिक | लिथ्वानीय |
|---|---|---|---|---|---|---|
| कर्ता प्र० N. | वृकः | Vṛkas | lukos | lupus | wulfer | velkos |
| कर्म द्वि० Acc. | वृकम् | Vṛkam | lukon | lupum | wulf | vilka |
| सम्बन्धः षष्ठी Gen. | वृकस्य | Vṛkasya | lukos | lupo | wulfis | vilko |
| सम्प्रदानम् चतुर्थी Dat. | वृकाय | Vṛkāya | lukoio | lupi | wulfa | vilkui |
| अपादानम् पञ्चमी Ab. | वृकात् | Vṛkāt | ,, | lupod | | vilko |
| अधिकरणम् सप्तमी Loc. | वृके | Vṛkē | lukoi | lupi | | vilke |
| करणम् तृतीया Instru | वृकेण | Vṛkēṇa | | | | vilku |

**वृक शब्दस्य बहुवचने रूपाणि**

| विभक्तयः | संस्कृत | | ग्रीक | लातिन | गॉथिक | लिथ्वानीय |
|---|---|---|---|---|---|---|
| प्रथमा N. | वृकाः | Vṛkās | lukoi | lupe | wulfos | vilkai |
| द्वितीया Acc. | वृकान् | Vṛkan | lukous | lupos | wulfe | vilkuns |
| षष्ठी Gen. | वृकाणाम् | Vṛkāṇām | lukoun | luporum | welfans | vilkams |
| चतुर्थी Dat. | वृकेभ्यः | Vṛkēbhyas | | | wulfam | vilkū |
| पञ्चमी Ab. | वृकेभ्यः | ,, | | | | |
| सप्तमी Loc. | वृकेषु | Vṛkēṣu | lukosi | lupis | | *vilkusi* |
| तृतीया Instru | वृकैः | Vṛkāis | lukois | lupos | | *vilkais* |

लिकेषु वैदिकरूपेषु लौकिकसंस्कृते च 'आ' स्थाने 'औ' जातः। तत्र तु 'आ' इत्यनेन सह उभयार्थक 'उ' निपातः संयुक्तः। एवं 'औ' इति 'आ' इत्यस्यैव परिवर्धितं रूपमस्ति। लौकिकसंस्कृते 'आ' इति प्रथमाद्वितीययोर्द्विवचनप्रत्ययो विस्मृत एव।

४. तदेवं वक्तुं शक्यते यत् प्रथमैकवचनस्य पुंसि 'सः' प्रत्ययः संकृतवद्ग्रीक-लातिनगॉथिकावेस्ताद्यास्वन्यासु भाषास्वपि सुरक्षितः। तथैव तृतीयैकवचनस्य 'आ', 'इन' इत्युभावपि प्रत्ययौ चतुर्थ्येकवचनस्य ए<e i, a i, संस्कृतग्रीकलातिन-गॉथिकावेस्तिकेत्याद्यासु सर्वासु सजातीयभाषासु सुप्रयुक्तः। षष्ठ्यैकवचनस्य अस् प्रत्ययोऽपि सर्वासु भाषासु विद्यते। 'स्य' प्रत्ययस्तु संस्कृतावेस्तिक प्रत्न-पारस्याद्यास्वेव। सप्तम्यैकवचनस्य 'इ' प्रत्ययोऽपि सर्वासु भाषासु विद्यते।

अत्रेदं वैशिष्ट्यम्—सर्वे प्राथमिकाः सुप्प्रत्यया हलन्तेभ्यः प्रयुज्यन्ते, परं द्वैतयिकास्तु अजन्तेभ्य एव। यथा मनसा, देवेन। ब्रह्मणे, रामाय। मनसः रामात्, रामस्य इति।

बहुवचनस्य विभक्तिप्रत्यया अपि नानाभाषासु त एव विद्यन्ते।

नपुंसकलिङ्गस्य प्रथमाद्वितीययोः पुंसि स्त्रियाञ्च द्वितीयैकवचनस्य 'अम्' लातिन्याम् um रूपेण विद्यते। आंग्ल्यां ये um प्रत्ययान्ताः शब्दा विद्यन्ते ते सर्वे लातिन्या नपुंसकलिङ्गस्य प्रथमैकवचनरूपमेव व्यञ्जयन्ति। यथा—stadium.

अजन्त वृकशब्दस्य रूपाणि संस्कृतसजातीयासु भाषास्वेवं विद्यन्ते—

सम्मुखे (१३० तमे) पृष्ठेऽवलोकनीयम्।

५. अनेनैतत्स्पष्टीभवति यत् प्रथमैकवचनस्य द्वितीयैकवचनस्य च रूपाणि सर्वत्र समानानि। गॉथिकलिथ्वान्ययोर्मकारस्तु लुप्तः। एवमेव सप्तम्येकवचनेऽपि 'इ' विभक्तिर्विद्यते। पञ्चम्यैकवचनस्य आत्-द्, ओद् विभक्तिप्रत्ययस्तु संस्कृताति-रिक्तं लातिन्यामेव स्वरूपेण तिष्ठत्यन्यत्र तु तकारो लुप्तः। एवमेव द्वितीया-बहुवचनरूपमपि गॉथिक्यामेव सुरक्षितम्। षष्ठीबहुवचनस्य रूपं तु ग्रीकलातिन्य-योरुभयोरपि सुरक्षितम्। लातिन्यान्तु प्रकृतिप्रत्ययोर्मध्ये 'र'कारागमोऽपि जायते। सप्तमीबहुवचने सर्वत्र सु प्रत्ययो विद्यते, यद्यपि ग्रीक्यां si सि इति जातः लातिन्याञ्चातिमः स्वरः u घृष्टः। तृतीयाबहुवचनस्य ऐस्<ois ग्रीक्यां लिथ्वान्याञ्च सुरक्षितो लातिन्यामपि किञ्चिद् विकृतरूपेण विद्यत एव।

संस्कृते अजन्तशब्दानां षष्ठीबहुवचनस्याम्प्रत्ययेन सह नकारागमस्तु श्वन्, नामन् सदृशानां नान्तशब्दानामनुकरणेनागतः। ग्रीक्यान्तु lukoun<*vḷkam सं० वृकाम् इति नकारागमरहितमेव रूपं विद्यते। ग्रीक्यामन्तिमो मकारो नकरे परिणमत्यत एव lukoum इत्यस्य स्थाने lukoun इति जायते।

## श्वन् शब्दः

एकवचने

| विभक्तयः | संस्कृत | ग्रीक | लातिन | आयरिश | गॉ० | लिथ्वा० |
|---|---|---|---|---|---|---|
| प्रथमा N. | श्वा śvā | kuon | eano | cu | hana | szu |
| द्वितीया A. | श्वानम् śvānam | kuna | canem | coiun | hanam | szuni |
| षष्ठी G. | शुनः śunas | kunos | canes | coin | hanis | szuns |
| चतुर्थी D. | शुने śune | | cani | con | | szungye |
| सप्तमी L. | शुनि śuni | kuni | eane | coni | | szunui |
| | | | **बहुवचने** | | | |
| प्रथमा N. | श्वानः śvānas | kunes | caines | coin | hanans | sznus |
| द्वितीया A. | शुनः śunas | kunas | ,, | cona | ,, | szunjs szunis |
| षष्ठी G. | शुनाम् śunām | kunown | canum | coum | hanane | szunn |
| चतुर्थी D. | श्वभ्यः śvabhyas | | canibus | conail | hanani | szunis |
| सप्तमी L. | श्वसु śvasu | kusi | | conaile | | szunyse |
| तृतीया I | श्वभिः śvabhis | | canibus | | ,, | *szunemis* |

# लातिन्यां शब्दरूपावलिः

### अजन्त दम (वै० गृहम्)dom शब्दः

| विभक्तयः | एकवचनम् | बहुवचनम् |
|---|---|---|
| | लातिन संस्कृत | लातिन संस्कृत |
| प्रथमा | Dom-us दमः | Dom-ūs<दम-अस |
| द्वितीया | Dom-um दमम् | Dom-ōs दमः |
| चतुर्थी, सप्तमी | Dom-ui<दम-अइ | Dom-ibus दमेभ्यः |
| पञ्चमी | Dom-ō दम-अस् | Dom-ibus दमेभ्यः |
| षष्ठी | Dom-us दम-अस् | Dom-um or-orum दम-आम |

### हलन्त दिव् (दिनम्) शब्दः

| | एकवचनम् | बहुवचनम् | |
|---|---|---|---|
| विभक्तयः | लातिन संस्कृत | लातिन | संस्कृत |
| प्रथमा | Di-ēs दिवा divā | di-is | दिवाः divās |
| द्वितीया | Di-em दिवम् divam | di-ēs | दिवाः |
| चतुर्थी, सप्तमी | Di-ēi दिवे dive | di-ēbus | दिव्भ्यः divbhyas |
| पञ्चमी | Di-ē दिवसः divasas | di-ēbus | |
| षष्ठी | Di-ēi दिवि divī | di-ērum | दिवाम् |

### रै (द्रव्यम्) शब्दः

| | एकवचनम् | बहुवचनम् |
|---|---|---|
| विभक्तयः | लातिन संस्कृत | लातिन संस्कृत |
| प्रथमा | R-ēs रैः rāis | r-ēs रायः rāyas |
| द्वितीया | R-em रायम् rāyam | r-ēs राः rās |
| चतुर्थी, सप्तमी | R-ei राये raye | r-ēbus राभ्यः rābhyas |
| पञ्चमी | R-e रायः rāyas | r-ēbus |
| षष्ठी | R-ei रायि rāyi | r-īrum रायाम् rāyām |

पितृ, मातृ, भ्रातृ, युवन् शब्दानां षष्ठ्यैकवचने द्विवचने च लातिन्यामेतादृशानि रूपाणि जायन्ते—

| एकवचने | बहुवचने |
|---|---|
| patris पितुः pitus | patrum<पितृ-आम् |
| matris मातुः mātus | matrum<मातृ-आम् |
| fratris<भ्रातृ-अस् | fratrum<भ्रातृ-आम् |
| juvenis<युवन्-अस् (यूनः) | juvenum<युवन्-आम्>यूनाम् |

**लातिन्यां 'नभ' nubus (मेघः) शब्दस्य रूपाणि**

| विभक्तयः | | एकवचने | बहुवचने |
|---|---|---|---|
| कर्ता | प्रथमा | nebus (नभस्) | nubes (नभांसि) |
| कर्म | द्वितीया | nubem (नभम्) | ,, |
| सम्बन्धम् | षष्ठी | nubis (नभसः) | nubium (नभसाम्) |
| सम्प्रदानं चतुर्थी | सप्तमी | nuboi (नभसि) | nubibus (नभोभ्यः) |
| अपादानम् | पञ्चमी, चतुर्थी | nube (नभसे) | ,, |

**लातिन्यांसंस्कृते च नकारान्त नामन् शब्दस्य रूपाणि**

| | एकवचनम् | | बहुवचनम् | |
|---|---|---|---|---|
| | लाति० | संस्कृत | लाति० | संस्कृत |
| प्रथमा | Nomen | नामन् (सम्बो.) | Nomina | नामानि |
| द्वितीया | Nomen | नाम | ,, | ,, |
| चतुर्थी | Nomin-i | नाम्ने, नाम्नि | Nomin-ibus | नामभ्यः |
| पञ्चमी | Nomin-e | नाम्ने (च) | Nomin-ibus | नामभ्यः |
| षष्ठी | Nomini-s | नाम्नः | Nomin-um | नाम्नाम् |

अत्रेदमवधेयम् आंग्ल्या nominee शब्दोऽपि नामन् शब्दस्य सप्तम्येकवचनस्य नाम्नि nomin-i इतिरूपमेवास्ति अस्यार्थश्च कस्यचिन्नाम्नि अधिकृत इत्यस्ति। nominate च नाम्नितः इत्यस्ति। एवमेव nominative, nominal रूपाण्यवगन्तव्यानि।

नामन् शब्दो यथा संस्कृते नकारान्तस्तथैव लातिन्यामप्येष शब्दो नकारान्त एव विद्यते ।

**राज् reg शब्दः**

| विभक्तयः | एकवचनम् |  | बहुवचनम् |  |
|---|---|---|---|---|
|  | लातिन | संस्कृत | लातिन | संस्कृत |
| प्रथमा | Rex<राज्स्<reg-s |  | Rēg-ēs<राज्-अस् |  |
| द्वितीया | Rēg-em<राज्-अम् |  | Rēg-ēs<राज्-अस् |  |
| चतुर्थी, सप्तमी | Rēg-ī<राज्-इ |  | Rēg-ibus<राज्-भ्यस् (राजेभ्यः) |  |
| पञ्चमी | Rēg-ē<राज्-अस् |  | Rēg-ibus<राज-भ्यस् |  |
| षष्ठी | Rēg-is<राज-अस् |  | Rēg-um<राज-आम् |  |

६. अत्रेदं वैशिष्टयम्—संस्कृते हलन्तो राज् (क्विप्प्रत्ययान्त इति यावत्) शब्दः समास एव विद्यते । यथा समाज् इत्यादयः । परं लातिन्यामयं राज् शब्दो हलन्त g गकारान्त एवास्ति, नतु संस्कृतवद्राजन्निति ।

**आंग्लाद्यासु विभक्तिप्रत्ययाः**

७. हिन्द्यादिभारतीयभाषावदांग्लाद्या यूरोपीया आधुनिका भाषा अपि असंयुक्ता जाताः । यथा हिन्द्या 'ने', 'को', 'से' इत्याद्या सुप्प्रत्ययाः परोक्षवृत्त्यैव संस्कृतेन निरुच्यन्ते, तथैवांग्लादीनामपि । आंग्लभाषायां प्रथमाबहुवचनस्य s, es, षष्ठ्यैकवचनस्य s, apostrophe's, इति यावत्, इति द्वावेव सुप्प्रत्ययौ सुरक्षितौ । प्रथमाबहुवचनस्य s, es संस्कृतस्य अस्, स एवास्ति। षष्ठ्यैकवचनस्य 's च संस्कृतस्य 'अस्' एव इति तु स्पष्टमेव । आंग्ल्यां प्रथमैकवचनस्य 'स' प्रत्ययो लुप्तः। एवमेवान्यासां विभक्तिनामपि सुप्प्रत्यया लुप्तास्तेषां कार्यं चोपसर्गनिपातैः साध्यते । यथा हि— to (द्वितीया), by (तृतीया), for (चतुर्थी), from (पञ्चमी), of (षष्ठी), in, over, up, above (सप्तमी) शब्दैः प्राक्पश्चाद्वा प्रयुज्यमाना विभक्त्यर्थद्योतका एत उपसर्गनिपाताः प्रत्यक्षतः संस्कृतस्यैव सन्ति । तद्यथा—

संस्कृतस्य तुम् tum>to.

,, अभि abhi>by

,, प्र pra, पर par, परा parā,>for, from

,, अप ap>of, off

,, उप (रि) up (ri)>up, over, above

,, इन in (तस्मिन्)>in

,, अधि (adhi)>ad, add,

,, उत (ऊर्ध्वम्) out,[1]

एते सर्वे उपसर्ग निपाताः संस्कृतेऽपि विभक्त्यर्थद्योतका अपि सन्तीत्यप्यवगन्तव्यम् ।

संस्कृतस्य 'तुम्' प्रत्ययो लातिन्यां शब्दस्य धातोर्वान्ते एव प्रयुज्यते । क्वचिच्च एषः 'तुम्' tu भूत्वा शब्दैस्सह तत्र तथा संश्लिष्टः यथास्य पृथक्सत्ताऽपि न ज्ञायते । यथा हि—लाति० oppara-to-s आं० apparatus सदृशेषु शब्देषु विद्यमानः tu सं० तुमेवास्ति । संस्कृतेऽपि जीवातु, वहतु, गातु सदृशेषु शब्देषु तुमर्थकः तु विद्यते । appratus इत्यस्य पूर्वपदं वै० अपस् (कर्म) इत्येवास्ति ।

१. Oxford Shorter English Dictonary इति कोषे एते सर्व उपसर्गनिपाताः संस्कृतेन सम्बद्धाः प्रदर्शिताः ।

# सर्वनामानि

१०. न केवलं संज्ञाशब्दा एवापितु सर्वनामसंख्यावाचकोपसर्गनिपातादयोऽपि समग्रासु यूरोपीयेरानीयभाषासु संस्कृतसमाना एव। यूरोपे प्रचलितानि सर्वनामानि संस्कृतसमानान्येव विद्यन्ते।

सर्वनामस्वपि पुरुषवाचकसर्वनाम्नां वैशिष्ट्यं सुविदितमेव। तेष्वपि उत्तमपुरुषवाचकः 'अस्मत्' मध्यमपुरुषवाचको युष्मच्च प्रामुख्यं भजेते। अत एव समग्रासु संस्कृतसजातीयभाषासु सर्वनाम्नां समानत्वप्रतिपादनावसरे प्रथममुत्तममध्यमपुरुषयोर्ग्रहणं समुचितं भाति। संस्कृते उत्तमपुरुषवाचकास्मच्छब्दस्य—

प्रथमैकवचने 'अहम्' द्विवचने 'आवाम्' बहुवचने च 'वय'मिति रूपाणि सन्ति।

एवमेव युष्मच्छब्दस्य—

'त्वम्' 'युवाम्' 'यूय'मिति रूपाणि निष्पद्यन्ते। परं द्वितीया-चतुर्थी-षष्ठीति-विभक्तित्रये 'मा', 'नौ', 'नः', 'त्वा', 'वाम्', 'वः' इति वैकल्पिकान्यनुलग्नानि लघु (inclitic) रूपाण्यपि संस्कृते सुप्रयुक्तानि सन्ति।

ग्रीकलातिनजार्मण्यांग्लरूसीफारस्यादिसंस्कृतेतरासु भारोपीयभाषास्वनयोः क्वचिद्वैकल्पिकानि लघुरूपाणि, क्वचिच्च पूर्णरूपाण्यवलोक्यन्ते। परं संस्कृतस्यैतद्वैशिष्ट्यं यदत्रोभयविधान्यपि रूपाणि सुरक्षितानि सन्ति।

अपि च नानाभारोपीयासु भाषासु अस्मद्युष्मदोरेतादृशान्यपि रूपाणि प्रचलितानि सन्ति, येषां मूलं लौकिकसंस्कृतस्य प्रचलिते रूपजाते क्वचिदपि न दृश्यते, परं ते सर्वे वैदिक 'अस्मे', 'युष्मे' इति अस्मद्युष्मद्वाचकान्निपातद्वयादुद्भूताः सन्ति।

अपि च, संस्कृतस्यैतदपि वैशिष्ट्यं यदस्यामेव वाचि सर्वासु विभक्तिषु सर्वेषु वचनेषु च रूपाणि विद्यन्ते। अन्यासु भाषासु तु कानिचिदेव रूपाणि अवशिष्टानि। तद्यथा—

**ग्रीक्याम्—**

११. अस्मच्छब्दस्य ग्रीक्यां प्रथमैकवचने ईगो (ego)।

द्वितीयैकवचने ईमे (Eeme) सं० मा।

चतुर्थ्यां ईमोइ (Eemoi), मोइ (Moi), (सं० मयि, सप्तमी-एकवचनम्) षष्ठ्यां ईमू (Eemou), मू सं० मे रूपाणि विद्यन्ते।

बहुवचने च प्रथमायां हेमेइस् (Hamais) द्वितीयायां हेमास् (Hemas) चतुर्थ्यां हेमिन् (Hemin) षष्ठ्यां च हेमोन् (Hemon) इति रूपाणि जायन्ते।

बहुवचनस्यैतानि सर्वाणि रूपाणि वै० 'अस्मे' इत्यस्मादुद्भूतानीति तु सुस्पष्टमेव।

अत्र च अकारात्पूर्व हकारागमो जातः, यतो हि ग्रीक्यां पदादौ स्वरात्पूर्वं हकारागमोजायते। एवमेव मध्यमपुरुषस्य प्रथमैकवचने सु (su) (तु), द्वितीयायां से (Se) (ते), चतुर्थ्यां सोइ (Soi), (त्वयि), षष्ठ्यां सोउ (Sou) (तव, ते) इति रूपाणि सन्ति। बहुवचने च प्रथमायां हुमेइस् Humais, द्वितीयायां हुमास् Humas चतुर्थ्यां हुमिन् Humin षष्ठ्यां च हुमोन् Humon इति रूपाणि जायन्ते।

अत्र हि एकवचने भारोपीयस्य संस्कृतस्य च 'त्व' इत्यस्य तकारः सकारे परिणतः। ग्रीकबहुवचनरूपाणि च वै० 'युष्मे' इत्यस्मान्निष्पन्नानि। अत्र पदादौ यकारो हकारे परिणतः।

अथ च षष्ठीबहुवचनस्य आम् on<om इति प्रत्यय उभयत्र सुरक्षितो वर्तते।

**लातिन्याम्—**

१२. लातिन्यामपि अस्मद्युष्मदोः रूपाणि संस्कृतसमानान्येव सन्ति। तद्यथा—

**एकवचनम्**

| **विभक्तयः** | | **अस्मद्** | **युष्मद्** |
|---|---|---|---|
| प्र० | कर्ता | ईगो Eego (अहम्) | तु Tu (तु त्वम्) |
| द्वि० पञ्चमी | कर्म अपादा० | मे Me (मा) | ते Te (त्वा) |
| च० | सम्प्रदानम् | मिहि Mihi (मह्यम्) | तिबि Tibi (तुभ्यम्) |
| ष० | सम्बन्धः | मेई Mei (मे) | तुइ Tui (ते) |

**बहुवचनम्**

| | | **अस्मद्** | **युष्मद्** |
|---|---|---|---|
| प्र० | कर्ता | नोस् Nos (नः) | वोस् Vos (वः) |
| द्वि० | कर्म | ,, ,, ,, | ,, ,, ,, |
| च० पं० | सम्प्रदानम् | नोबिस् Nobis (नोभ्यः) | वोबिस् Vobis (वोभ्यः) |
| ष० | सम्बन्धः | नोस्त्रम् Nostrum (नः) | वोस्त्रुम् Vostrum (वः) |

अत्रापि वयम्, यूयम् इत्येताभ्यां सम्बद्धानि रूपाणि विलुप्तानि केवलं नस्, वस् इत्यनुलग्नानि लघुरूपाण्येव प्रयुज्यन्ते।

अथ च, नोबिस् Nobis (नोभ्यः) सदृशेषु वस्नसोः परतः 'भ्य' इति विभक्तिः प्रयुज्यते। लातिन्यां चतुर्थीपञ्चमीषष्ठीतिविभक्तित्रये एक एव प्रत्ययो युज्यते।

१३. एवमेव तच्छब्दः लाति० इस्-ते इति जायते। इदं शब्दश्च पुंसि इस is स्त्रियां एस es इति रूपमापद्यते। नपुंसके च इद् इत्येवास्ति। किम् शब्दस्य लातिन्यां que, quae, quad क्वेद इति रूपाणि जायन्ते। अस्यार्थश्च यः, यत् इत्यस्ति।

१४. लातिनस्य संस्कृतस्य च विभक्तिप्रत्यया अपि संस्कृतसदृशा एव सन्ति। तद्यथा—

| | एकवचनम् | | बहुवचनम् | |
|---|---|---|---|---|
| | संस्कृतस्य | लातिनस्य | संस्कृतस्य | लातिनस्य |
| प्रथमा | विभन्नाः प्रत्ययाः | | अस् | es एस् |
| द्वितीया | अम् | em एम | अस् | es एस् |
| चतुर्थी | ए | i इ (सप्तमीविभक्तौ) | एभ्यः | ibus इबुस् |
| पञ्चमी | अस् | e ए (चतुर्थीविभक्तौ) | एभ्यः | ibus इबुस् |
| षष्ठी | अस् | is इस् | आम् | um उम् |

एवं स्पष्टं प्रतीयते यद् यूरोपीयासु प्रत्नासु नवासु च भाषासु पारसीकावेस्तयोश्च संज्ञासर्वनामक्रियापदानि सर्वथा संस्कृतसमानान्येव सन्ति।

१५. जार्मण्य (ट्यूटानिक) वर्गीय गॉथिकांग्लजार्मण्यादिका भाषा ग्रीकलातिन्यादिभ्यो नवीनास्तथाप्यस्मद्युष्मदोरन्येषां च सर्वनाम्नां विभक्तिरूपाणि तास्वन्यापेक्षया प्राचुर्येण सुरक्षितानि। यथा हि—

**उत्तमपुरुषवाचक अस्मद्शब्दस्य मध्यमपुरुषवाचकयुष्मद् शब्दस्य रूपाणि—**

**एकवचने**

| **विभक्तयः** | **गॉथिक्याम्** | **जार्मण्ये** | **आंग्ल्याम्** |
|---|---|---|---|
| कर्ता | इक Ik | इख् (श्) Ich | I आई<*ईगो>अहम् |
| | थु Thu | डु Du | दाउ Thou<त्वम् |
| कर्म | मिक् Mik | मिख् Mich | मी Me मा |
| | थुक Thuk | डिख् Dich | दी Thee (त्वा) |
| सम्बन्धः | मेइना Meina | मिर Mir | माइ My माइन Mine (मे) |
| | डिर् | | दाइन Thine (ते) |

बहुवचने

| | गॉथिक्याम् | जार्मण्ये | आंग्ल्याम् |
|---|---|---|---|
| कर्ता | वेइस् Veis | विर् Wir | वी We (वयम्) |
| | युस् Yus | इर Ihr | यू You (यूयम्) |
| कर्म | अन्सिस् Unsis | उन्स् Uns | Us अस्मे (नः) |
| | लुप्त | ,, ,, | ,, ,, |
| सम्बन्धः | अन्जर Unsara | अन्जेर Unser | अवर Our (अस्मे) |

अनेनैतत्स्पष्टी भवति यद् गॉथिकांग्लजार्मण्यास्वस्मच्छब्दैकवचनबहुवचनयोः—मः 'वि', 'अस्मे', इति रूपाणि युष्मच्छब्दस्य च—त्व, ते यु, युष्मे इति प्रकृतयः सुरक्षिता विद्यन्ते।

रूसी

रूसीभाषायामप्युत्तमपुरुषैकवचने बहुवचन च मी (अस्मे) तथा सम्बन्धैकवचने मोया (मे) रूपमस्ति। कर्मसम्बन्धादिषु क्रमशो नास्, नाशा (नस्) वास् वाशा (वस्) मध्यमपुरुषप्रथमैकवचने ती, हिन्दी तू (सं०, त्वा, ते वस्) प्रतिरूपं बहुवचने वी इत्येताभ्यां सम्बद्धानि रूपाणि सन्ति।

१६. पुरुषवाचकानां सर्वनाम्नामिव तदादीनामपि सुब्रूपाणि लातिन्यां प्रायशः सुरक्षितानि तेष्वनेकानि तु संस्कृते परिवर्तितानि, परं लातिन्यां मूलप्रत्यययुक्तान्येव विद्यन्ते। तद्यथा—

संस्कृते इदम्, इयम् सदृशेषु सर्वनामसु 'इह' इति निपाते चैतदर्थिका 'इ' प्रकृतिर्विद्यते। लातिन्यान्त्वेषा 'इ' प्रकृतिस्तदर्थे प्रयुज्यते। एवं लातिन्या iste इत्यस्यार्थ तद् यत्तव सन्निकृष्टेऽस्तीतित्यस्ति।

एकवचने

| | पुंलिङ्गे | स्त्रीलिङ्गे |
|---|---|---|
| कर्ता | इस-ते is-te (ते सः) | इस-ता is-ta (ते सा) |
| कर्म | इस-तुम् is-tum (तम्), | इस-ताम् is-tam (ताम्) |
| सम्प्रदानम् | इस-ती is-ti (तस्मै) | ,, |
| अपादानम् | इस-तो(द्) is-to (d) (तस्माद्) | इस्ताद is-ta (d) (तस्याः) |
| सम्बन्धम् | इस-तीउस is-tius (तस्य) | ,, |

**बहुवचने**

| | | |
|---|---|---|
| कर्ता | इस-ती is-ti (ते), | is-tos इस-तास् (ताः) |
| कर्म | इस-तोस is-tos (तान्), | इस-तास is-tas (ताः) |
| सम्प्रदानम् | इस्-तीस् is-tis (तेभ्यः) | ,, |
| अपादानम् | ,, | ,, |
| सम्बन्धः | इस-तोरुम is-torum (तेषाम्) | इस्तारुम istarum (तासाम्) |

लातिन्यां तद् शब्दस्य नपुंसकलिंगे प्रथमाद्वितीयारूपाण्यपि संस्कृत इव जायन्ते।

एकवचने इस-तुद् is-tud (तद्) बहुवचने च इस-ता is-ta (तानि)।

संस्कृत इव लातिन्यामपीदं शब्दस्य स्त्रीपुंनपुंसकेषु रूपाणि भिन्नानि जायन्ते। तद्यथा—

**एकवचने**

| | |
|---|---|
| कर्ता | इस is (पुं०) इद् id (नपुं०) es एस् (स्त्री) |
| कर्म | एउम् eeum (पुं० इमम्) eam एआम् (स्त्री) |
| सम्प्रदानम् | एइ eei |
| अपादानम् | एइउस् eius (अस्) |

**बहुवचने**

| | |
|---|---|
| कर्ता | एइ eei (पु०) एअए eae (स्त्री) इआ ea (नपुं०) |
| कर्म | इऑस eos (पु०) इआ ea (नपुं०), एआस eas (स्त्री०) |
| अपादानम् | एइस eeis (त्रीषु लिङ्गेषु) |
| अपादानम् | एइस eis ,, |
| सम्बन्धः | एओरुम eorum (एषाम्) पु० इआरुम earum<आसाम् |

१७. **अत्रेदमवधेयम्—**

(क) संस्कृते 'इ' प्रकृत्या सह पुंसि प्रथमैकवचने 'अम्' प्रत्यययोगेन इकारस्य गुणेन 'अयम्' स्त्रियाञ्च इयङादेशेन इयमिति रूपे निष्पद्येते। संस्कृतेऽहम्, त्वम्, इयम् सदृशेषु 'अम्' इति नपुंसकलिङ्गस्य विभक्तिप्रत्ययोऽनियमित एव। परं लातिन्यां पुंसि स्त्रियाञ्च प्रथमैकवचने सुविभक्तिप्रत्यय एवास्ति।

(ख) एवमेव 'इमम्' इत्यत्रापि राममित्यस्यानुकरणेन मकारागमो जातः, परं लातिन्यां eeum एउम् इति स्वाभाविकमेव रूपं विद्यते।

(ग) लातिन्यां षष्ठ्यैकवचने यथानियमम् अस्, उस्—प्रत्ययो विद्यते। यतो हि संस्कृतातिरिक्तं सर्वासु भाषास्वकारान्तेभ्योऽन्येभ्यः शब्देभ्यश्च षष्ठ्यैकवचने समानरूपेण 'अस्' इत्येव विभक्तिप्रत्ययो युज्यते, परं संस्कृते 'अस्' स्थाने 'स्य' इत्यागच्छति। एवं लातिन्यां eius एइउस् इति स्वाभाविकमेव रूपं विद्यते। अत्र विभक्तेः अस् us इत्यस्य सान्निध्याद् ei एइ इति वृद्धिर्जाता।

(घ) एवमेव लातिन्यां स्त्रियां पुंसि चोभयत्र अस् os, as इति विभक्तिप्रत्ययः सुरक्षितः। परं संस्कृते स्त्रियान्तु 'इमाः' imas इति रूपे 'अस्' प्रत्ययो विद्यते, किन्तु पुंसि तत्स्थाने द्वितीयाबहुवचने 'आन्' इति प्रत्यय आगतः।

(ङ) एवमेव षष्ठीबहुवचनस्य 'आम्' um प्रत्ययः संस्कृते लातिन्याञ्चोभयत्र सुरक्षितः। संस्कृते 'एषाम्' इत्यत्र गुणसन्धियुक्त एकारो विद्यते, परं लातिन्यां eorum इत्यत्र सन्धिविहीनमेव रूपमस्ति। अपरञ्च लातिन्यां स्वरयोर्मध्यगौ सषौ रेफे परिवर्तेते, इति नियममनुसृत्य सं० एषाम्, आसाम् इत्युभे अपि रूपे लातिन्यां eorum, <एषाम् earum<आसाम् इति जाते।

# आंग्ल्या व्यक्तिवाचकसर्वनामानि

## Personal Pronouns in English

### उत्तमपुरुषः (अहम्) Irst Person (I) *egho

| विभक्तयः | एकवचनम् Singular | | बहुवचनम् Plural | |
|---|---|---|---|---|
| | Sanskrit | English | Sanskrit | English |
| कर्ता Nom. | अहम् aham <egho> I | | वयम् vayam | we |
| कर्म Acc. | मा mā | me | अस्मान् asmān | us |
| सम्बन्ध Gen. | मे mē | my | आवयोः āvayor | our |

### मध्यमपुरुषः Second Person द्विवचने dual

| | | | | |
|---|---|---|---|---|
| कर्ता Nom. | त्वम् tvam | thou | यूयम् yuyam | you |
| कर्म Acc. | त्वा tvā | thee | यूष्मान् yushmān | you |
| सन्बन्ध Gen. | ते te | thine | युवयोः yuvayor | your |

### प्रथम (अन्य) पुरुषः third person इदम् तद्

| | | | | |
|---|---|---|---|---|
| Nom. | इदम् नपुं० Idam | It | ते te | they |
| Nuter | तद् नपुं० Tad | that | | |
| Mes. | सः sas | he | | |
| Fem. | सा sā | she | | |
| Acc. | सम् (तम्) | Him | तान् tān | them |
| Gen. | तस्य tasya सस्य | His | तयोः tayor | their |

Agamnigam Digital Preservation Foundation, Chandigarh

### प्रश्नवाचकः किम् शब्दः

| | संस्कृत | लातिन | | आंग्ल्या |
|---|---|---|---|---|
| प्रथमा कर्ता Nominative | कः | $k^{w}$as qui | > | who |
| द्वितीया कर्म Accusative | कम् | $k^{w}$om quim | > | whom |
| षष्ठी सम्बन्ध Genative | कस्य | $k^{w}$os cūjus | > | whose |

एवमेव सं० कत >आं० what सं० कतर>आं० whether इति जायेते।

**१८. अत्रेदमवधेयम्—**

संस्कृते अहम्, वयम् तथा यूयम् इत्येतानि अम् विभक्ति युक्तानि रूपाणि सन्ति। परमांग्ल्यां i<*egho, वी we, यू you इत्येतेषु रूपेषु अम् विभक्तिप्रत्ययो लुप्तः। यथा अन्यास्वप्याधुनिकासु भारोपीयासु भाषासु विभक्तयो लुप्तास्तथैवात्रापि। आंग्ल्या he, him, his इत्येतानि रूपाणि लातिन्या hoc इत्यस्माद् गृहीतानि। तस्यार्थश्च 'एतद्' इत्यस्ति। संस्कृते केवलं स्त्रीपुंसोः प्रथमैकवचन एव 'तद्' शब्दस्य 'स' इति रूपं जायते, परं लातिन्यामन्यास्वपि विभक्तिषु 'स' वन्त्येव रूपाणि जायन्ते। तदनुसृत्यैवांग्ल्यामपि he, him, his, her इति रूपाणि जायन्ते। आंग्ल्या adhoc वस्तुतो लातिन्याः शब्दोऽस्ति। अस्यार्थश्च अधिअस्य (सस्य) (—अस्य स्थानेऽधिकृत) इत्यस्ति।

आंग्ल्या us पञ्चाब्याश्च 'असी' इत्युभावपि वैदिक 'अस्मे' इत्यस्माज्जातो।

# धातूनां स्तरत्रयम्

**धातवः क्रिया रूपाणि च**

१९. संस्कृते सार्धसहस्राधिका धातवो विद्यन्ते। आदौ किल पञ्चशतमिता ५०० एव धातव आसन्। क्रमादेधमानस्ते प्रभूततरा जाताः। भाषावैज्ञानिकविवेचनेनै-तत्स्पष्टीभवति यद्धातूनां स्तरत्रयं विद्यते। यथा हि—

(क) प्रथमस्तरे निम्नाकारा मुख्या अथवा सिद्धधातवः परिगण्यन्ते—

१. एकस्वरवन्तो धातवः। यथा-'इण्' गतौ, 'ऋ' गतौ इत्यादयः।

२. स्वरेण व्यञ्जनेन च युक्ता धातवः। यथा-'अद्' भक्षणे, 'अत्' सातत्य-गमने, 'अल्' गतौ वृद्धौ च इत्यादयः।

३. व्यञ्जनेन स्वरेण च युक्ता धातवः। यथा—भू, दा, भा, मा, गा, धा, पा, ला, यु वृ, षूञ् (सू) जी इत्यादयः।

(ख) द्वितीयस्तरे ते गौणा अथवा साधिता धातवः परिगण्यन्ते ये व्यञ्जनेन स्वरेण पुनश्च व्यञ्जनेन युक्ताः सन्ति, येषाञ्चाद्यस्यान्तिमस्य वा व्यञ्जनस्य परिवृत्त्या नानाधातवो निष्पद्यन्ते। यथा हि—'तु' धातोर्निष्पन्नस्य तुदतेर्द्वितीय-व्यञ्जनस्य दकारस्य स्थाने भिन्नव्यञ्जनानां समावेशनेन नानाधातवो निष्पद्यन्ते। यथा—

१. 'तुप्', 'तोपति', 'तुपति'' 'तुम्पति'।

२. तुभ्, तुभ्यति, तोभ्यते, तुभ्नाति, ग्रीक्यां type-to.

३. तुफ्, तोफति, तुफति, तुम्फति।

४. तुग्, तुङ्गति, तोगति।

५. तुर्।

६. तूर्, तुतोर्ति, तूर्यते।

७. तुर्व, तुर्वति।

८. तुह्, तोहति।

९. तुस्, तुसते।

यथा च—१. मृ २. मृज्, ३. मृद् ।

(ग) तृतीयस्तरे व्यञ्जनद्वयवन्तश्चतुर्विधा धातवः परिगण्यन्ते—

१. व्यञ्जनद्वयेन स्वरेण च युक्ताः धातवः यथा 'प्लु', प्लवते आं० float.

२. स्वरेण व्यञ्जनद्वयेन च युक्ता धातवः यथा 'अर्द्' ।

३. व्यञ्जनद्वयेन स्वरेणव्यञ्जनेन च युक्ता धातवः यथा 'स्पश्' ।

४. व्यञ्जनद्वयेन स्वरेण पुनर्व्यञ्जनद्वयेन च युक्ता धातवः ।

एतादृशानां धातूनां व्यञ्जनयोरन्यतरोऽर्धस्वरो वोष्माक्षरो वा भवति। अनयोरन्यतरश्च पश्चादागतोऽपि भवति । 'स्पश्', स्पशतेः सहैव 'पश्', पश्यति अप्यस्ति । अश् धातुरपि धातुपाठे परिगण्यते । 'वद्', 'मद्', युज् (ग्), सदृशा धातव एवानुनासिकागमेन वन्द्, मन्द्, युञ्ज् रूपेण परिवृद्धा जाता । युज् धातुरपि यौतेरेव परिवृद्धं रूपम् । मिश्रणं मिलनं वेत्यर्थोऽस्ति 'यु' धातोः । मिलनञ्चानुकूल्येन प्रातिकूल्येन चोभयथा सम्भवति । मित्रभावार्थे 'युज्' शत्रुभावेन मिलनार्थे च 'युध्' इति धातुद्वयमाविर्भूतमेकेनैव 'यु' धातुना सह 'जकारधकारयोर्योगेन। पाणिनिना तु 'यु' मिश्रणामिश्रणयोरिति वदता द्विविधोप्यर्थः प्रकटीकृतः ।

संस्कृते यूरोपे चानुकूल्येन मिलनार्थे 'यु', 'युज्' इति धातुरूपद्वयं प्रयुज्यते, शत्रुभावेन प्रातिकल्येन वा मिलनार्थे तु धकारवान् 'युध्' इति। परममिश्रणार्थे पृथग्भावे वा संस्कृते व्युपसृष्टो 'वि-युज्' प्रयुज्यते नत्वनुपसृष्टः। किन्तु पारस्यामनुपसृष्टो 'जुदा' वियोगार्थको विद्यते ।

एतेषां सर्वेषां स्तरत्रययुक्तानां धातूनां कस्याञ्चिद् भाषायामेकमपरस्याञ्चान्यं, कस्याञ्चिदेकमपस्याञ्च रूपद्वयं रूपत्रयं व विद्यते। आंग्ल्याम् √अद्>eat, √स्वद्>sweet इति रूपद्वयं विद्यते, परमस्यैव तृतीयं रूपं 'खाद्' <क (कुत्सित) 'अद्' तु यूरोपे नावलोक्यते, किन्तु पारस्यां 'खायद' (दन्तैः कर्तयित्वा—दान्तों से काटकर—भक्षणम्) विद्यते ।

एभिः कैश्चिदेवोदाहरणैः सुस्पष्टं सिद्धयति यत् पञ्चशतसंख्याका एव पुराणा मूलधातवो वर्धमानाः सार्धसहस्रतोऽप्यधिका अष्टादशशतसंख्याका जाता । ग्रीक-लातिनांग्लपारस्यादिषु सम्भूय सोपसृष्टानुपसृष्टाश्च त एव धातवो नानाकारा प्रभूततराश्च सञ्जाता इति ।

√वृ (वरति, वृणोति) धातोरेव तकार योग √वृत् (वृतु वर्तने) धकारयोगेन √वृध्-वर्धते, जकारयोगेन वृज्, वृजि, वर्जने, श्च <skʷe कारयोगेन च वृश्च (ओ वृश्चू छेदने) इत्याद्याः नैके धातवो निष्पन्नाः ।

एवमेव √रु (रौति, रवीति) धातुना सह द् योगेन रुद्, ध योगेन च √रुध्, ज् योगेन रुज् इत्यादयो नैके धातवो जाताः।

धकारस्य हकारेण च रुध् > √रुह् (to grow) जातः।

यथा √तृ, √स्तृ, √स्पश्, पश्य, स्तन्, तन्, अद्, स्वद् इत्यादिकं सकारवत् सकारहीनञ्च धातुयुग्मं वर्तते तथैव √रु √स्रु इत्यप्यवगन्तव्यम्। रु इत्यस्य पूर्वं सकारागमेन √स्रु जातोऽथवा 'स्रु' इत्यस्माद् √'रु' जात इत्यपि वक्तुं-शक्यते। रुधातोरांग्ल्यां roar, uproar, रुद्धातोश्च rut, √स्रु धातोश्च river, फा० रुद्खन (नदी) इत्यादयोऽनेके शब्दा निष्पन्ना। तथैव सं० √तन्, तनु (सूक्ष्मम्) इत्यस्मादांग्ल्यां thin √स्तन, स्तनितर् इत्यस्माञ्चांग्ल्या thunder, जा० donner इति जातम्।

एवमेवांग्ल्यां लातिन्यां ग्रीक्याञ्च √मृ mer, mur, murder, ma,r mortal, mortar, post-mortam <पश्च मृत्युम्, √मृज्, *milg[w], आं० milk, √मृद्, आं० mud, सं० मृणोमि, ग्रीक mornumai, 'मृ' इत्यस्यैवानैकानि रूपाणि विद्यन्ते। तथैव च १. √भा, २. √भास्, ३. √भाम्, √भाष् व्यक्तायां वाचि इति भातेरूपचतुष्ठयमेवांग्ल्यां photo<भातः, विभातः, विभातम्, face[१]<√भासः (भासते, प्रकाशते इति), phone √भष्, ग्रीक phonos, आं० fame[२], famous सदृशेषु शब्देषूपलभ्यतेऽथचास्य √भा धातोः प्रकाशो भाषणञ्चेतयर्थद्वयमप्यांग्ल्यां सुरक्षितं वर्तते। आं० fashion, French-facon, (make shape, appearance), fact सादृशाः शब्दा अपि भातेर्भासतेर्वा निष्पन्नाः।

√वृ वृणोमि (कामये) वर एवांग्ल्या will[३] इत्यस्ति। √वृत् धातोरेव लातिन्या आंग्ल्याश्च invert[४], convert, revert सदृशानि सोपसृष्टानि विभिन्नार्थकानि नैकानि रूपाण्युद्भूतानि। जार्मण्यां werde < √वर्त् to be, to grow, to turn इति मूलरूप एव विद्यते।

संस्कृतसजातीयभारोपीयो भाषापरिवारः खलु सुमहान् वर्तते। अत्रैतादृशा अपि धातवो विद्यन्ते येषामेकत्र प्रकृतिरन्यत्र च विकृतरेव प्रयुज्यते। अथचैतादृशा अपि धातवः शब्दाश्च सन्ति ये वेदेष्वेवोपलभ्यन्ते, लौकिकसंस्कृते त्वप्रयुक्ता जाता

---

१. २. ३. ४. Sh. Ox. Eng. Dic.

परं यूरोपे इराने वा तेऽद्यापि व्याह्रियन्ते । एतच्च भाषावैज्ञानिकं तथ्यं सप्तशताधिकद्विसहस्रवर्षपूर्वमेवाचार्येण यास्केन प्रकटीकुर्वता स्पष्टमेवोक्तम्—

"अथापि प्रकृतय एवैकेषु भाष्यन्ते, विकृतय एकेषु । शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते । विकारमस्यार्येषु भाषन्ते शव इति अथापि नैगमेभ्यो भाषिकाः— उष्णम्, घृतमिति[1] ।" निरुक्ते प्रतिपादितोऽयं भाषावैज्ञानिको नियमोऽद्यत्वे भाषाणां तुलनात्मकाध्ययने महदुपकारक्षमः यतो हि संस्कृतग्रीकांग्ल्यद्यासु सजातीयभाषास्वपि क्वचित् (विशेषतः संस्कृते) प्रकृतिरन्यत्र विकृतिरेव प्रयुज्यते। यथा हि—

संस्कृत √मृ प्रकृतेरांग्ल्यां murder, mortal इति, √स्मृ इत्यस्य च memory memoir, √वम् इत्यस्य च womit इत्याद्या विकृतयो दृश्यन्ते । √वन् (वन्षण् सम्भक्तौ) लौकिकसंस्कृतेत्वप्रयुक्तः परमांग्ल्यां win इति रूपेण, वैदिको √वश् च wish इति रूपेण सुप्रचलितः ।

एवमेव वैदिक √ईर् प्रकृतेर्निष्पन्न ईर्म (बाहुः) लौकिकसंस्कृते त्वप्रयुक्तः परमांग्ल्यां arm इति रूपेण तस्मिन्नेवार्थे प्रचलितः । सं० 'समीर' शब्द एव 'ईर' प्रकृतिः सुरक्षितः ।

एवमेव 'पण्डा' (सदसद्विवेकिनी बुद्धिः) शब्दः संस्कृते 'पडित' इति ताद्धिते रूपे एव सुरक्षितः परं पारस्यां 'पन्द' (स एवार्थः) इति मूलरूपेणैव प्रयुज्यतेऽद्यापि । इताल्व्या pedanti पैदेन्ती आंग्ल्याश्च pedant (पण्डितोऽध्यापको वा) इति शब्दावपि 'पन्द' इत्यनेनैव सम्बद्धौ प्रतीयेते ।

एवमेव √वृ धातोः 'ऊर्णा' इति विकृतिर्जाता। सा च पुनः संस्कृत एव 'ऊर्णु ञ्' आच्छादने इति प्रकृतिरूपेण प्रचलिता ।

आंग्ल्या wool शब्दे √वृ प्रकृतिः सुरक्षिता ।

सं० √ऊर्णु ञ् इति तु वृ धातो निष्पन्नस्योर्णाशब्दस्य विकृति (नातधातु) रेव विद्यते इति तु पूर्वमेव स्पष्टी कृतम् ।

नानाभाषासु नानारूपेषु प्रयुक्तयोरनयोः प्रकृतिविकृत्योर्ज्ञानेन भाषाणां तुलनात्मकाध्ययने महत्सौकर्यं जायते ।

---

१. निरुक्त २-१ ।

एवमेव √रा धातुरेवजकारयोगेन √राज्, धाकारयोगेन च √राध् इति रूपमाषेदे। एष √राध् धातुर्नानाभाषासु विविधानि रूपाण्यवाप। तद्यथा—

सं० राधति rādhati अवे० रादइति rādaiti (प्रस्तुतं), पु० फा० अवह्यरादीय avahyarādiy (therefore), फा० आरद् गॉथिक—ग-रेडन ga-rēdan (to provide), पु० सैक० राडेन rādan (सहायता, परामर्शः), बुल्ग० रादिति rādete, आं० ready (प्रस्तुत), जर्मन gerade।

एवमेव संस्कृते √दुह् $<^{*}dug_{v}h$ प्रकृतिस्तस्याश्च दुग्धम्, दोग्धा, दुहितर् इत्यादयो विकृतयोऽपि विद्यन्ते। परं यूरोपीयभाषास्वीरान्यासु च 'दुहितर्', इत्यस्या विकृतेः daughter जा० tochter फा० दुख्तर सदृशानि प्रतिरूपाण्येव प्रचलितानि। प्रकृतिस्तु संस्कृत एव सुरक्षिता। तथैव √दह् $<^{*}deg_{v}h$ इति प्रकृतिस्तस्याश्च दाघः' दग्ध इत्याद्या विकृतयोऽपि संस्कृते सुरक्षिताः, परं यूरोपे तु तस्याः आं० day>जा० tag (टाख् दिनम्) फा० दाग इत्याद्या विकृतय एव सन्ति।

तद्वदेव संस्कृते √घृ (क्षरणदीप्त्योः) इति प्रकृतिस्तस्या च घृतम्, घर्मः इत्याद्या विकृतयोऽपि विद्यन्ते, परं यूरोप therm, thermal, therma, fornus, furnace सदृशा इराने च गर्म इति विकृतय एव दृश्यन्ते। तथैव संस्कृते √तृह् (छदने) इति प्रकृत्या सह तृणम्, तर्दनम् इत्याद्या विकृतयोऽपि विद्यन्ते, परं यूरोपे तु आंग्ल्यां thorn (कण्टकम्), जा० dorn इत्येका विकृतिरेवावशिष्यते। एतादृशानि भूयांस्युदाहरणान्यत्रैवान्यत्र द्रष्टव्यानि।

## क्रियारूपनिष्पत्तिः

२०. समग्रासु संस्कृतसजातीयासु भारोपीयासु भाषासु क्रियारूपाणि द्विधा निष्पद्यन्ते—क. तिङ् प्रत्यययोगेन, (ख) कृत्प्रत्यययोगेन च।

तिङ्प्रत्ययैः क्तक्तवतु शतृशानचादिभिश्च युक्ताभिः क्रियाभिः क्रियाव्यापारस्य पूर्णता समाप्तिर्वावगम्यते, अत एताः क्रियाः समापिका finite परं तुमुन् प्रत्ययेन तदर्थसूचकै असे असेन् अध्यै इत्यादिभिर्वैदिकैः प्रत्ययैश्च क्त्वा प्रत्ययेन तदर्थं सूचकेन 'य' प्रत्ययेन च युक्ताभिः क्रियाभिः कार्यस्य पूर्णता समाप्तिर्वा नावगम्यतेऽत एतादृशी क्रियासमापिका unfinite इत्युच्यते।

**तिङ्प्रत्ययविकासः**

२१. लुटिमध्यमपुरुषैकवचनवत्पुरा किल सर्वाण्येव क्रियारूपाणि प्रत्ययविहीनान्येवासन्नित्यनुमीयते भाषावैज्ञानिकैः । गच्छति काले धातुभिस्सह कानिचित्सर्वनामानि लुटि 'तृच्' प्रत्ययाश्च योजयित्वा क्रियारूपनिष्पादनप्रवृत्तिः प्रादुरभूत ।

एवमुत्तमपुरुषक्रियानिष्पादनायास्मत् सूचको 'मः', प्रथमपुरुषक्रियासम्पादनाय च 'तः' धातोरन्ते योजितः । परं केवलं मकारतकारयो र्योगेनैव क्रियार्थाभिव्यक्तिर्न समभवदतस्तेन सहेकारोऽपि योजितः । एवम्-अस्ति सन्ति, अस्मि, स्मः सदृशानि क्रियारूपाणि विकसितानि । परं लुटि केवलं तृच् प्रत्यययुक्तानि क्रियारूपाणि पुरुषत्रयस्यावगमनाय नालमतो मध्यमपुरुष उत्तमपुरुषे च तृच् प्रत्ययैस्सहास् धातोरूपाण्यपि योजितानि । एवं हन् धातोर्लुटि—

| | | |
|---|---|---|
| हन्ता | हन्तारौ | हन्तारः |
| हन्तासि | हन्तास्थः | हन्तास्थ |
| हन्तास्मि | हन्तास्वः | हन्तास्मः |

इति रूपाणि निष्पन्नानि ।

**द्विवधानि क्रियारूपाणि** ('आ', विकरणेन मि mi प्रत्ययेन च युक्तानि )

२२. भारोपीयासु भाषासूत्तमपुरुषस्यैकवचनस्य लटि क्रियारूपाणि द्विधा निष्पद्यन्ते—

(क) 'आ', o विकरणयोगेन (ख) 'मि' प्रत्यययोगेन च।

कैश्चिद्धातुभिस्सह आ विकरणो युज्यते कैश्चिच्च सह 'मि' प्रत्ययः। यैर्धातुमिस्सह 'आ' o विकरणो युज्यते ते सविकरणा thematic इति व्यपदिश्यन्ते। येश्च सह 'मि' प्रत्ययो युज्यते तेऽविकरणा athematic इति।

# परस्मैपदिनश्चतुर्विधास्तिङ्प्रत्ययाः

२३. संस्कृतवद् ग्रीकलातिनगॉथिकावेस्ताद्यास्वन्यास्वपि प्रत्नासु भाषास्वात्मनेपदिनः परस्मैपदिनश्च क्रियानिष्पादकास्त एव तिङ्प्रत्यया सन्ति। परस्मैपदनिष्पादकास्तिङ्प्रत्ययाः अपि निम्नक्रमेण भागचतुष्ठये विभाजयितुं शक्यन्ते—
**मलप्रत्ययाः** primary endings

१. लटि वर्तमानकाले Present indicative लृटि (भविष्यति) च future tense.

| पुरुष | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र० पु० ist. | ति ti | तस् tas | अन्ति anti |
| म० पु० iind | सि si | थस् thas | थ tha |
| उ० पु० iiird p. | मि mi | वस् vas | मस् mas |

२. द्वैतेयिकाः प्रत्ययाः Secondary Endings

लिट्लकारे पूर्णभूते Perfect Endings

| | | | |
|---|---|---|---|
| प्र० पु० irst P. | अ a, e | अतुस् | उस् us |
| म० पु० iind P. | थ tha | अथुस् athus | अ a, e |
| उ० पु० iiird P. | अ a, e | व va | म ma |

३. लङि्. लिङि्, लुङि, लृङि च (सामान्ये हेतुहेतुमति च भूते विधौ च)

Imperfect, aorist, optative, prekative, conditional

| | | | |
|---|---|---|---|
| प्र० पु० ist. p. | त tas | ताम् tām | अन्, उर an, ur |
| म० पु० iind p. | स sa (अस्) | तम् tam | त ta |
| उ० पु० iiird p. | (अ) म् am | व va | म ma |

४. लोटि आज्ञार्थकप्रत्ययाः Imperfective endings

| | | | |
|---|---|---|---|
| प्र० पु० ist p. | तु tu | ताम् tām | अन्तु antu |
| म० पु० iind p. | हि hi, o, अ | तम् tam | त ta |
| उ० पु० iiird p. | आनि āni, | आव āva | आम āma |

लुटि

ता तारौ तारः

इति प्रत्ययास्तु न स्वतन्त्रा अपितु 'तृच्' प्रत्ययस्यैव रूपाणीति त्वन्यत्रोक्तम्।

**आत्मनेपदिनः प्रत्ययाः**

संस्कृतवद्ग्रीक्यामवेस्तायाञ्च आत्मनेपदनिष्पादका त एव तिङ् प्रत्ययाः सन्ति। तेऽपि मूलप्रत्ययाः द्वैतेयिकाः प्रत्ययाश्च इति द्विविधाः सन्ति। मूलप्रत्ययाः अत्र निर्दिश्यन्ते—

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्र० पु० irst p. | ते te | आते | अन्ते ante |
| म० पु० iind p. | से se | आथे āthe | ध्वे dhve |
| उ० पु० iiird p. | इ, ए i, e | वहे vahe | महे mahe |

२४. ग्रीक्यां ध्वनिविकरणन्तु प्रभूतं जातं, तथाप्यात्मनेपदिनोऽप्येते सर्वे प्रत्ययास्तत्र याथातथ्येन विद्यन्ते। यूरोपीयासु भाषास्ववेस्तायाञ्च वैदिको 'मसि' masi इत्युत्तमपुरुषबहुवचनप्रत्ययोऽप्युपलभ्यते। ग्रीक्यां क्रियारूपबाहुल्यन्तु संस्कृतादपि प्रभूततरं विद्यते।

'आ', 'मि', इत्युभयोरपि स्वतन्त्रयोरुत्तमपुरुषवाचकयोः संस्कृते सायुज्यं जातम्। अत्र तु धामि, दधामि, दामि, ददामि सदृशानामाकारवतामुत्तमपुरुषवाचक 'मि' प्रत्यययुक्तक्रियारूपाणामनुकरणवशादाविकरणेन सह 'मि' प्रत्ययोऽपि योजितः। एवं संस्कृते उत्तमपुरुषैकवचनस्य क्रियारूपे 'आ', o अथ च 'मि' इत्युभावपि क्रियार्थद्योतकौ ('आ' विकरणः 'मि' प्रत्ययश्च) योजितौ। अनयोः पुनरुक्तिजर्जातेति यावत्। परं ग्रीक्यां नैवं जातम्। ग्रीक्यान्तु केषांचिद्धातूनां 'मि' प्रत्यययुक्तानि केषांचिच्च आ o प्रत्यययुक्तानि रूपाणि जायन्ते। परमद्यत्वे सर्वेषां धातूनामुत्तम-

पुरुषैकवचनरूपाणि ओकारवन्त्येव निर्मीयन्ते सौकर्यात्। तत्र 'मि' प्रत्यययुक्तानि रूपाणि तु साहित्य एव प्रयुज्यन्ते।

भाषाणां तुलनात्मकाध्ययनप्रसङ्गेऽनयोरुभयविधयोरपि क्रियारूपयोर्ज्ञानमावश्यकमतएवेदमत्र स्पष्टीकृतम्। रूसी लिथ्वान्याद्यासुभाषास्वपि o>u विकरणयुक्तानि क्रियारूपाणि प्रचलितानि सन्ति। संस्कृते 'मि' प्रत्यययुक्तानामन्यत्र च तद्विहीन (o युक्त) रूपाणामेतदेव विनिगमकामित्यवगन्तव्यम्।

अस् भुवि, अद् भक्षणे, इण् गतौ, भू सत्तायां, विद् ज्ञाने, दा दाने, धा धारणे, वच् परिभाषणे, तनु विस्तारे, तुद् हिंसायां, वम् उद्गीर्णे, स्तृञ् विस्तारे, स्पश् दर्शने, गम् गतौ, इष् इच्छायाम् पा पाने, म्ना अभ्यासे, कृञ् करणे, स्मृ स्मरणे, शोऽन्तकर्मणि, सीवृ-सीवने, ज्ञा ज्ञाने, जनि प्रादुर्भावे, भृ भरणे' इत्यादयः शतशोऽप्यधिका धातवस्तैरेव रूपैस्तेष्वेव चार्थेषु संस्कृतग्रीकलातिनावेस्तादिसर्वास्वपि भाषासु विद्यन्ते।

विकार्यविकारिभेदेन द्विधा धातव एव थेमेटिकाथेमेटिकेति नाम्ना व्यपदिश्यन्ते। सर्वेषु च धातुषु अस्तेरेव प्रामुख्यं सर्वविदितमेव। अतएव प्रमुखास्वार्यभाषासु 'अस्' धातोरेव रूपाण्यत्र प्रथमं प्रस्तूयन्ते।

२५. अस्ते रूपाणि ग्रीकलातिन-गॉथिकावेस्तादिप्रत्नासु जार्मण्यफ्रेञ्चादिनवासु च यूरूपीयासु भाषासु संस्कृतसदृशान्येवोपलभ्यन्ते। तद्यथा—

### ग्रीकभाषायाम्

ess—**अस्धातोर्लटि रूपाणि**—Present

| | एकवचनम् | बहुवचनम् |
|---|---|---|
| प्र० पु० | एस्ति esti | एइसि eisi |
| म० पु० | एइ ei | एस्ते este |
| उ० पु० | एइमि eimi | एस्मेन् esmen |

**लङि रूपाणि** Imperfect

| | | |
|---|---|---|
| प्र० पु० | एन् en | ऐसन् esan |
| म० पु० | एस्थ estha | एते ete |
| उ० पु० | एन् en | एमन् eman |

संस्कृतभाषायामस्तेर्लृटि रूपाणि विलुप्तानि। परं ग्रीकभाषायामस्तेर्लृट्यपि रूपाण्युपलभ्यन्ते। तानि चात्मनेपद एव सन्ति।

लृटलकारस्य द्योतको 'स्य' seo प्रत्ययोऽपि ग्रीकलातिन्यादिषु समास्वपि भाषासु सममेवोपलभ्यते। अस् धातोर्लृटि रूपाणि ग्रीकभाषायामेतादृशानि दृश्यन्ते—

अस्-लृट् (Future) आत्मनेपदे

| | एकवचनम् | बहुवचनम् |
|---|---|---|
| प्र० पु० | एस्ताई estai | एसेन्तइ esantai |
| म० पु० | एसे ese | एसेस्थे esesthe सं० असिष्यथ |
| उ० पु० | एसोमई esomai | एसोमेथ esometh |

लातिन्यां तिङ्प्रत्ययाः

लटि present

| | एकवचनस्य | | बहुवचनस्य | |
|---|---|---|---|---|
| | संस्कृत | लातिन | संस्कृत | लातिन |
| प्र० पु० | ति ti | अत् at | अन्ति anti | अन्त ant |
| म० पु० | असि asi | असि asi | थ tha | आतिस् ātis |
| उ० पु० | मि, आ mi, ā | ओ o | मस् mas | आमुस āmus |

अस्तेर्लातिन्यां रूपाणि (aesse to present tense)

| | एकवचनस्य | बहुवचनस्य |
|---|---|---|
| प्र० पु० | एस्त est | सुन्त sunt |
| म० पु० | एस es | एस्तिस estis |
| उ० पु० | सुम sum | सुमुस sumus |

लेट्प्रतिरूपके लङि (subjunctive imperfect)

| | एकवचनस्य | बहुवचनस्य |
|---|---|---|
| प्र० पु० | एस्सेत् es-set सं० आसीत् | एसन्त essent सं० आसन् |
| म० पु० | एस्सेस् es-ses सं० आसीः | ऐसेतिस essetis सं० आस्थ |
| उ० पु० | एस्सम् es-sem सं० आसम् | एस्सेमुस essemus सं० आस्म |

लङि (imperfect)

| | एकवचनस्य | बहुवचनस्य |
|---|---|---|
| प्र० पु० | एरत् erat | एरन्त erant |
| म० पु० | एरास् eras | एरातिस् eratis |
| उ० पु० | एरम् eram | एरामुस eramus |

एतादृशानि रूपाणि जायन्ते। सामान्यभूतादावत्र स्वरमध्यस्थः सकारो रेफत्वमापद्यते।

अवेस्तायामपि संस्कृतप्रतिरूपाण्येव सर्वाणि रूपाणि सन्ति। तद्यथा—

| | एकवचनस्य | बहुवचनस्य |
|---|---|---|
| प्र० पु० | अस्ति asti | हन्ति hanti |
| म० पु० | अहि ahi | स्ता sta |
| उ० पु० | अह्मि ahmi | मेहि mahi |

यूरोपेऽद्यत्वे व्याहृतासु जार्मण्यफ्रेञ्चादिभाषास्वपि अस्तेरूपाण्यद्यापि व्यवह्रियन्ते। तद्यथा—

जार्मण्याम् अस्तेः रूपाणि—

| | एकवचनस्य | बहुवचनस्य |
|---|---|---|
| प्र० पु० | इस्ट ist (अस्ति) | ज़िन्ट sind (सन्ति) |
| म० पु० | बिस्ट bist (भू, अस्) | ज़ीट seid (स्थ) |
| उ० पु० | बिन bin (भवन्) | ज़िन्ट sind (सन्ति) |

अत्र हि प्रथमपुरुषस्यैकवचने बहुवचने मध्यमपुरुषस्य बहुवचने च अस्तेरेव रूपाणि सन्ति। परमवशिष्टानि रूपाणि भूधातोः सन्ति। संस्कृतस्य 'भू' लातिन-फ्रेञ्चादिषु 'फ्यू' (fu) गॉथिक्यांग्ल्यां जार्मण्यां च 'बी' (be) जायते।

प्रथमपुरुषस्य इस् (is) आर् (are)

उत्तमपुरुषस्य च 'एम्' (am) रूपाण्यपि अस्तेरेव सन्ति।

फ्रेञ्चभाषायां 'सन्ति' (sont) 'सां' इत्युच्चार्यते।

'अस्तेर्भू' इति नियममाश्रित्य गीर्वाणगिरीव लातिन्यामपि लृटि भूधातोरेव

फ्युइत fuit फ्यूरुत् fuerut इत्यादीनि रूपाण्युपलभ्यन्ते।

एवमेव लोट्लकारे (imperative) अपि—

एस्तो (esto) सं अस्तु सुन्तो (sunto) सन्तु।

इत्यादीनि तान्येव रूपाणि सन्ति। अस्तेर्गाथिक्यामपि तान्येव रूपाणि सन्ति। यथा—

गॉथिक्यां लटि (present)

| | एकवचनस्य | बहुवचनस्य |
|---|---|---|
| प्र० पु० | इस्त est | सिन्द sind सं० सन्ति |
| म० पु० | इस is | सियुथ sijuth सं० स्थ |
| उ० पु० | इम im | सियुम् sijum सं० स्मः |

एवमेव पारस्यामपि तान्येव रूपाणि दृश्यन्ते। तद्यथा—

| | एकवचनस्य | बहुवचनस्य |
|---|---|---|
| प्र० पु० | अस्त | एन्द |
| म० पु० | ई | एत |
| उ० पु० | अम | एम |

एवमेव लिथ्वानिय-भाषायामपि अस्तेस्तान्येव रूपाणि तत्रत्या जना अद्यापि व्याहरन्ति।

## अस् धातोर्वर्तमानकाले लट्लकारे परस्मैपदे रूपाणि

As Indicative Present Active

| भाषा | भारोपीयरूपम् | संस्कृता | अवेस्ता | फारसी | ग्रीका | लातिनी | गॉथिकी | लिथ्वनीया |
|---|---|---|---|---|---|---|---|---|
| | | Sanskrit | Avesta | Persian | Greek | Latin | Gauthic | Lithuanian |
| प्रथमपुरुषे | | | | | | | | |
| एकवचनम् | esti | अस्ति asti | asti | ast | esti | jists, est | ist | jests |
| द्विवचनम् | stes ? | स्तः stas | stō | | | | | jesta |
| बहुवचनम् | senti, sonti | सन्ति santi | and | hasad and | dor enti eisi | sunt sent | sind | sat |
| मध्यमपुरुषे | | | | | | | | |
| एकवचनम् | esi | असिasi | ahi | ei | hom. es-si att-ei | ess. esi | is | jesi |
| द्विवचनम् | sthes, stes | स्थः sthas | | | | | sijuts | jesta |
| बहुवचनम् | ste | स्थ stha | sta | aed | este | estis | sijuth | jeste |
| उत्तमपुरुषे | | | | | | | | |
| एकवचनम् | esmi | अस्मि asmi | ahmi | am | eimi | sum | im | jesm |
| द्विवचनम् | swes | स्वः svas | usvahi | | | | siju | jesee |
| बहुवचनम् | semos | स्मः smas | mahi | aem | asmen | sumus | sijum | jesm |

Agamnigam Digital Preservation Foundation, Chandigarh

### लिथ्वान्यामस्तेर्लटि रूपाणि

| | एकवचनस्य | बहुवचनस्य |
|---|---|---|
| प्र० पु० | एस्ते este | (अत्र बहुवचनरूपं लुप्तम्) |
| म० पु० | एसि ese | एस्ते este |
| उ० पु० | एस्मि esmi | एस्मे csme |

अत्र पदादौ j युज्यते ।

अन्येषां धातूनां लुङि लिटि perfect क्रियारूपनिष्पादनाय लातिन्याम् तैः सह 'अस्' धातोर्निम्नरूपाणि संयुज्यन्ते—

| | एकवचने | बहुवचने |
|---|---|---|
| प्र० पु० | इत् it आसीत् | एरुन्त ērunt, ēre आं० are आसन् |
| म० पु० | इस्ति isti आसीः | इस्तिस् istis अस्त |
| उ० पु० | ई ī आसम् | इमुस् imus (आस्मः) |

### लातिन्यां भू धातोः पूर्णभूतकाले (लुङि, लिटि च perfect) रूपाणि

| | एकवचनम् | बहुवचनम् |
|---|---|---|
| प्र० पु० | फ्युइत् fuit (अ) भूत | फ्युएरुन्त fuerunt भूवन्त |
| म० पु० | फ्युइस्ति fuisti (अ) भूः | फ्यूइस्तिस् fuistis (अ) भूत |
| उ० पु० | फ्यूई fui (अ) भूवम् | फ्यूईमुस् fuemus (अ) भूमः |

**लातिन्यां लङि (सामान्यभूते imperfect) रूपसम्पादनाय धातुभिः सह भूधातोर्लङ्लकारस्य निम्न रूपाणि संयुज्यन्तेः—**

| | एकवचदम् | बहुवचनम् |
|---|---|---|
| प्र० पु० | आबत् ābat<अभवत् | आबन्त ābant<अभवन्त |
| म० पु० | आबास् ābās<अभवस् | आबातिस् ābātis<अभवतस् |
| उ० पु० | आबम् ābam<अभवम् | आबमुस् ābmus<अभवाम् (स्) |

### भूधातोर्लिटि भविष्यति future रूपाणि

| | एकवचम् | द्विवचनम् |
|---|---|---|
| प्र० पु० | आबित् ābit | आबुन्त ābunt |
| म० पु० | आबिस् ābis | आबितिस् ābitis |
| उ० पु० | आबो ābo | आबिमुस् ābimus |

भवतेरस्तेश्चैतानि सर्वाणि क्रियारूपाण्यन्येषां धातूनां रूपसम्पादनाय तैः सह संयुज्यन्ते ।

### अस् धातोर्विधिलिङ् (optative) रूपाणि

#### ग्रीक्याम्

| | एकवचनम् | बहुवचनम् |
|---|---|---|
| उ० | ehien (सं० स्याम्) | simus (सं० स्यामः) |
| म० | ehies (सं० स्यास्) | eite (सं० स्यात्) |
| प्र० | eii (सं० स्यात्) | eien (सं० स्युस्) |

#### लातिन्याम्

| | | |
|---|---|---|
| उ० | siem (स्याम्) | simus (स्याम) |
| म० | sies (स्यास्) | sites (स्यात) |
| प्र० | siet (स्यात्) | sient (स्युस्) |

#### गॉथिक्याम

| | | |
|---|---|---|
| उ० | sijau ( स्याम् ) | sijaim ( स्यामः ) |
| म० | sijais (स्यास् ) | sijaith (स्यात) |
| प्र० | sijai ( स्यात् ) | sijaina ( स्युस् ) |

अत्रेदमवधेयम् यद् ग्रीक्यां मध्यमपुरुषस्यैकवचने—

**'स्वरमध्यगतो सो हो भूत्वा विलुप्यते'**

इति नियमेन अस्तेस्सकारलोये एइ (e i) जायते। पारस्या 'ई' रूपमपि तथैव निष्पन्नम्।

संस्कृतलातिनप्रभृतिष्वनेकासु भाषासु अस्तेर्लटि द्विवचनबहुवचनयोराद्यो-ऽकारो 'श्नसोरल्लोप' इतिनियममनुसृत्य लुप्यते। निरुक्तकार आचार्ययास्को-ऽप्येतादृशेषु स्थलेष्वाद्याक्षरलोपमेव मन्वानस्सन्तीति पदमाद्यस्वरलोपोदाहरण-रूपेणोपस्थापयति।

परं ग्रीकलिथ्वानियादि द्वित्रा एतादृश्योऽपि भाषाः सन्ति यत्र 'स्थ' 'स्मः' इत्यादि बहुवचनरूपाणामाद्याकारो नैव लुप्यते। तत्र 'एस्ते' 'एस्मेन्' सदृशान्येव रूपाणि प्रचलितानि सन्ति।

अत एवोच्यते यदेतादृशेषु स्थलेषु संस्कृतरूपाणि विकसितानि परं ग्रीक्यां तानि प्रकृतिमेवानुसरन्ति। अथ च ग्रीक्यादिषु भाषास्वपि पुरा द्विवचनमप्यासीत्। तत्तु होमररचिते इलियडादिमहाकाव्येष्वेवावशिष्टम्।

ददातिप्रभृलीनां द्विरुक्तप्रकृतीनामनेकेषामन्येषामपि धातूनाँ रूपाणि संस्कृत-ग्रीकलातिन्यादिषु समानान्येनैवोपलभ्यन्ते। तद्यथा

**दा धातोर्ग्रीक्यां लटि रूपाणि**

| | **एकवचनम्** | **बहुवचनम्** |
|---|---|---|
| प्र० पु० | दिदोसि didosi | दिदीअसि didoesi |
| म० पु० | दिदोस् diedos | दिदोते didote |
| उ० पु० | दिदोमि didomi | दिदोमेन् didomen |

इति जायन्ते। धा धातोश्च ग्रीक्यां प्रथमपुरुषैकवचने tithemi तिथेमिति जायते। संस्कृतस्यैष धा धातुरेव गाँथिक्यामांग्ल्याञ्च 'डू' do इति जायते। ततश्च जार्मण्यां 'टून्' tun इति रूपं निष्पन्नम्। आंग्ल्यां do, did, done यानि त्रीणि रूपाणि जायन्ते तान्यपि संस्कृताश्रितान्येव। एवमेव स्था धातोरपि समान्येव रूपाणि सर्वत्रावलोक्यन्ते। ग्रीक्यामस्य histemi इत्यादीनि रूपाणि सन्ति। आंग्ल्यामयमेव 'स्था' stay इति रूपमवाप। stand, station, stop, stationary

systom, state, इत्यादयो नानाकृतयो ये शब्दा आंग्ल्यामवलोक्यन्ते ते सर्वे 'स्था' मूलकास्सन्ति।

ग्रीकभाषायां धातूनां लिटि रूपाणि तथैव निष्पाद्यन्ते यथा संस्कृते। तत्रापि लिटि धातोर्द्वित्वं हल्विशेषस्य चर्त्वञ्चापि विधीयते। तद्यथा—

'दृश्' धातोर्लिटि ग्रीकभाषायां देदोर्क dedork संस्कृते च 'ददर्श' इति रूपद्वयं सममेव विद्यते।

अत्रेदं बोध्यं यद्भारूपायाः केन्तुंवर्गस्य क्वकारः शतंवर्गे शकरो जातः। क्व-कारश्च तालव्यस्वरयुक्तश्चेच्चवर्गतामवाप। अतएव 'ओक्टो' octo अष्टौ, डेकड decade दशित इत्यादि 'क' 'श' युक्तं द्विविधं शब्दयुगलमवलोक्यते। संस्कृतेऽपि च 'क्लमम्' 'श्रमम्' वाक्, वाच् सदृशं रूपद्वयमनयैव दिशा जातम्।

संस्कृत इव ग्रीक्यां लातिन्यां गॉथिक्यामपि च लङि, लुङि चाडागमो दृश्यते। संस्कृतस्य 'भृञ्' भरणे ग्रीक्यां phero गॉथिक्यां च bear इति जायते। अस्य ग्रीक्यां लङि अडागमे कृते उत्तमपुरुषस्यैकवचने—

एफेरन् epheran<सं० अभरन् इति जायते।

आत्मनेपदिनो भृ धातो रूपाणि ग्रीकगॉथिकावेस्तासु सदृशान्येव जायन्ते। तद्यथा—

## भृ, भर् धातुः

### आत्मनेपदे लटि रूपाणि

| | एकवचनम् | बहुवचनम् |
|---|---|---|
| प्र० पु० | ग्रीक-फेरेतइ phere-tai | फेरोन्तई pherontai |
| | गॉथिक-बइरद baira-da | बइरन्द bairanda |
| | अवे-बइरते bairate | बइरन्ते bairante |
| | सं० भरते | भरन्ते |
| म० पु० | ग्रीक फेरेआत phereāt | फेरेस्ते phereste |
| | गॉ० बइरेजा bairaza | |
| | अवे बरइसे baraese | बरेथ्वे barethwe |
| | सं० भरसे | भरध्वे |

| | | |
|---|---|---|
| उ० पु० | ग्रीक फेरोमइ pheromai | फेरोमेथ pherometha |
| | गॉ०— | — |
| | अवे—बैरे baire | बरामइदे baramaide |
| | सं० भरामसि (वै०) | भरामहे |

## परस्मैपदे रूपाणि

### लट् present indicative एकवचने

| | सं० | ग्रीक | लाति० | आयरिश | गॉथिक | पु० स्ला० | आर्मेनी |
|---|---|---|---|---|---|---|---|
| उ० पु० | भरामि | phero | fero | beur | baira | bera | berem |
| म० पु० | भरसि | phereis | fereis | biri | bairis | beresi | beres |
| प्र० पु० | भरति | pherei | ferit | berid | baerith | beret | bere |

### बहुवचने

| | | | | | | |
|---|---|---|---|---|---|---|
| भरामस् | pheromen | feremus | bermai | bairam | berem | beremk |
| भरथः | pheret | fereta's | bere'd | bairth | berete | berek |
| भरन्ति | pherousi | ferunt | barait | bairand | berat | beran |

### ग्रीक्यां लङि रूपाणि

| | एकवचनम् | बहुवचनम् |
|---|---|---|
| प्र० पु० | ephere | epheron |
| म० पु० | epheres | epherete |
| उ० पु० | epheron | epheromen |

### ग्रीक्यामात्मने पदे लटि रूपाणि

| | | |
|---|---|---|
| प्र० पु० | pheretai | pherontai |
| म० पु० | pherei | phereste |
| उ० पु० | pheromai | pherometha |

### विद् धातोर्लटि रूपाणि

एकवचनम्

| | सं० | ग्रीक | लातिन | गॉथिक |
|---|---|---|---|---|
| उ० पु० | वेद | oide (वेदे) | vedit | weit |
| म० पु० | वत्थ | oistha (वेत्थ) | vidiste | waist |
| प्र० पु० | वेद | oida (वेद) | vide | wait |

**बहुवचनम्**

| | | | | |
|---|---|---|---|---|
| उ० पु० | विद्म: | idmen (vdman) | vidimus | wetum |
| म० पु० | विद | iote वेते | vidistes | wituth |
| प्र० पु० | विदु: | isasi | videse | witum |

**लातिन्यां धातुरूपाणि**

Perfect tens of regere सं० √राज्

| | एकवचनम् | | बहुवचनम् | |
|---|---|---|---|---|
| | **लातिन** | **संस्कृत** | **लातिन** | **संस्कृत** |
| प्र० पु० | rexit | अराजत | rexērunt | अराजन्त |
| म० पु० | rexisti | अराज: | rexistis | अराजत |
| उ० पु० | rexi | अराजम् | reximus | अराजाम |

perfect tense of monere—√मन्

| | एकवचनम् | | बहुवचनम् | |
|---|---|---|---|---|
| | **लातिन** | **संस्कृत** | **लातिन** | **संस्कृत** |
| प्र० पु० | monuit | अमन्यत | monuerunt | अमन्यन्त |
| म० पु० | monuisti | अमन्य: | monuistis | अमन्यत |
| उ० पु० | monui | अमन्यम् | monuimus | अमन्याम |

future tense of regere सं० √राज्

| | एकवचनम् | | बहुवचनम् | |
|---|---|---|---|---|
| | **लातिन** | **संस्कृत** | **लातिन** | **संस्कृत** |
| प्र० पु० | reget | राजिष्यते (ति) | regent | राजिष्यन्ते (न्ति) |
| म० पु० | reges | राजिष्यसे (सि) | regētis | राजिष्यध्वे (थ) |
| उ० पु० | regam | राजिष्ये (ष्यामि) | regīmus | राजिष्यामहे (आम्) |

future tense of monere मनु अवबोधने

| | एकवचनम् | | बहुवचनम् | |
|---|---|---|---|---|
| | **लातिन** | **संस्कृत** | **लातिन** | **संस्कृत** |
| प्र० पु० | monēbit | मन्यिष्यते (ति) | monēbunt | मन्यिष्यन्ते (अन्ति) |
| म० पु० | monēbis | मन्यिष्यसे (सि) | monebitis | मन्यिष्यध्वे (थ:) |
| उ० पु० | monēbo | मन्यिष्ये (ष्यामि) | monebimus | मन्यिष्यामहे (म:) |

अत्र 'मन्' धातोरन्ते भूधातोरूपाणि संयुक्तानीत्यवगन्तव्यम् ।

# आंग्ल्यां क्रियारूपाणि

२८. जार्मण्यामस् धातोरस्ति, सन्तीति रूपद्वयमद्यापि प्रचलितमिति तु प्रत्यक्षतोऽवलोक्यते। आंग्ल्याञ्च is<सं० अस्-ति, अथ च am<सं० अस्मि इतिरूपद्वयं विद्यते। प्रथमे रूपे प्रकृतिरेवावशिष्टा, द्वितीये च प्रकृतिप्रत्ययावुभावपि सुरक्षितौ। पारस्या एम आंग्ल्या am इत्युभयत्रापि अस्मीत्यस्य सकारो लुप्तः। एतदस्मि-रूपमेव प्राकृते अह्मि भूत्वा हिन्द्यां 'हूं' इति जातम्। हिन्दीरूपे तु अस् धातोः चिह्नमपि नावशिष्टम्। स्यान्नाम।

२९. जार्मण्या bist इति रूपे संस्कृतस्य 'भू' 'अस्' इति च धातुद्वयं संश्लिष्टम्। एवमेवांग्ल्यामपि सत्तार्थे वर्तमानकाले तु is, are इति रूपद्वयं प्रयुज्यते, परमन्यत्र—

be, was, been.

इति रूपजातं प्रयुज्यते। was इत्यस्य बहुवचन रूपं तु wer इत्यस्ति।

आंग्ल्यामेतद्धातुरूपजातं कुत आगतमित्यस्योत्तरन्तु भाषावैज्ञानिकैः संस्कृताश्रयेणैव ज्ञातम्। तद्यथा—आं० was<सं०उवास आं० were<सं० √वृ, वर् इत्यस्ति व्युत्पत्तिक्रमः।

संस्कृतस्य √भू>आं० be, सं० भवन्>आं० been.

अनेनैतन्निश्चीयते यदांग्ल्यां धातूनां यानि त्रीणि कठोराणि क्रियारूपाणि strong forms निष्पद्यन्ते। तेषु—

१. प्रथमं धातोर्मूलरूपम्।

२. द्वितीयं संस्कृतस्य परोक्षभूतकालिकं लिट्लकारस्य धातोर्द्विरुक्तं रूपम्।

३. तृतीयञ्च past participle रूपे धातोरन्ते en, on इति युज्यते। तच्च संस्कृतस्य शत्रेः शानचस्य वा रूपमिति निश्चप्रचम्। कानिचिदुदाहरणानि—

| धातुरूपम् | लिटिरूपम् | शतृशानज्रूपम् |
|---|---|---|
| present | past tense | past participle |
| सं० आं० | सं० आं० | सं० आं० |
| √अद्, eat | आद ate | अदन् eaten |
| √भू be | वस् उवास was | भवन् been |
| √धा do | दधौ did | दधान् done |
| √भृ, भर् bear | बभार् bore | भरन् born |
| √दृ, दर् tear | ददार् tore | दरन् torn |
| √भिद् bite | बिभेद bit | भिदन् bitten |
| √बुध bid | बुबोध bade | बुधन् bidden |
| √स्वृ, स्वर् swear | सस्वार swore | स्वरन् sworn |
| √ज्ञा jnā know | जज्ञौ jajnāu knew | जानन् known |
| √गम् gam, come | जगाम came | — come |

एवमांग्लभाषाया वर्तमानकालसूचकं प्रथमं क्रियारूपं संस्कृतस्य मूलधातुरस्ति। तृतीयं past participle रूपं च संस्कृतस्य शतृशानचयोरन्यतरं रूपं विद्यते। सामान्यभूतकालसूचकं द्वितीयं past tanse रूपं was इति तु वस् धातोर्लिटि उवास् uvās इत्येवास्ति। अस्यैव बहुवचनरूपं were संस्कृतस्य वृ, वर्, भरोपीय ver इत्येवास्ति। एषो वृ, वर् *ver, *vel एव आंग्ल्या भविष्यद्द्योतकः will इत्यस्ति। यथा संस्कृते वृ धातोर्निष्पन्नस्य वर् इत्यस्येच्छा, कामनावेत्यऽर्थोस्त्येवमेवांग्ल्यामपि will इत्यस्य मुख्योऽर्थ इच्छैवास्ति। भविष्यति कार्यकरणायापि कर्तुरिच्छैव प्रेरत्यत्यत आंग्ल्यामिच्छासूचको will जार्मण्यां 'वर्डे' फारस्याञ्च 'ख्वाहद्' इति भविष्यद्योतनायापि प्रयुज्यते।

ग्रीक्यां विहाय 'अस्' धातोः कस्यामप्यन्यभाषायां सर्वेषु लकारेषु रूपाण्यप्रयुक्तानि। संस्कृते अनेकेषु लकारेषु अस् स्थाने भू धातुः प्रयुज्यते। तदर्थञ्च पाणिनिना 'अस्तेर्भूः'[1] इति सूत्रं निर्मितम्।

लातिन्या आंग्ल्याश्च 'अस्', 'भू' इति धातुद्वयेन सह 'वस्', 'वृ', 'वर्' इत्यन्यद्धातुद्वयमपि तदर्थसम्पादनाय प्रयुज्यत इत्यवधेयम्।

---

१. अष्टाध्यायी २।४।५२।

एवमेवांग्लभाषायां धातूनां कोमलक्रियारूपाणां weak forms निष्पादनाय धातोरन्ते ed अथवा d इति प्रत्ययद्वयं प्रयुज्यते। एतत्तु स्पष्टमेव संस्कृतस्य कृत् प्रत्ययस्य क्त (त) इत्यस्येव रूपम्।

√सीव्, स्यूत>swe स्यूत swed स्यूत swed

√वल् walk वल्गित walked walked

√वम् वमित vamit आंग्ल्यां धातुरेव vomited
त-प्रत्यययुक्तः। (भूतकालनिर्माणाय
त>d प्रत्ययो युज्यते)।

√वृत् वर्त vert वर्तित verted (inverted)

√दो (अवखण्डने) द्यति die दित्, दितिः died dead.

√सो (स्यति) saw सित sawed.

√सद्, सीद् sit sit sit

√स्था stay स्थित stood (stayed).

√बन्ध bind बबन्ध bind, bound, bound.

अत्रेदं वैशिष्टचम्—आंग्ल्यां सं० बुध् bid, सं० सद् आं० sit सदृशानामनेकेषां धातूनां रूपत्रयं समानमेव जायते। अपि च strong verbs धातूनामपि past and past participle इति रूपद्वयं d, ed प्रत्यययोगेन निर्माणप्रवृत्तिरप्यद्यत्वे प्रादुर्भूता। अतएव eat, eated, eated इति रूपजातमपि प्रचलितम्।

३०. ing आंग्ल्यां पठन्, लिखन्, भवन्, अदन् इत्यादीनां धातोः अन् (शतृ) प्रत्ययान्तरूपाणां स्थाने ing इंग् इति प्रत्ययो युज्यते। तथा हि—सं० अदन्त>आं० eating, सं० भवन्त>आं० being, सं० भरन्त>आं० bearing, सं० जानन्त—आं० knowing, सं० (ति) ष्ठन्त>आं० staying, सं० (नि) षीदन्त>आं० sitting, सं० भ्राजन्त>आं० blazing इत्यादयः। एवं प्रतीयते यथा सं० युवन्-कः >आं० youn-g इत्यत्र पदान्ते नकारात्पर आंग्ल्यां स्वार्थिकः कः-ग g प्रत्यय आगतः तदनुकरणेनैव अन्त प्रत्ययान्तेऽपि तकारोद्भूतेन (g) प्रत्यययोगेन ing< सं० अनन्त इति प्रत्ययो जातः, एवमांग्ल्या ing प्रत्ययः संस्कृतस्य अन्त इत्यस्यैव परिवर्तितं रूपं विद्यते। अपि च संस्कृते √अञ्चु गतिपूजनयोरित्यस्मान्निष्पन्नोऽञ्च<*enkʷe>सं० अंक् प्रत्ययोऽप्यस्ति। सं० सध्य्रञ्च्, प्रथमैकवचने सध्य्रङ्-

दध्यङ् सदृशाः शब्दा अनेन अञ्च् < *enque इति प्रत्ययेन निष्पद्यन्ते। तदनुकरणेन being, eating इत्यादय ing प्रत्ययान्तानि क्रियारूपाणि निष्पन्नानीत्यपि वक्तुं शक्यते। Shorter Oxford English Dictionary इति कोषे लिखितमस्ति:—

Suffix forming verbal derivs, orig. abstract nouns of action. OE.—ung, ing, O Teut. type *ungā. The original function of the suffix was to form nouns of action, as Asking, reading. Originally abstract, these sbs., even in OE., came to express a completed action, a process, habit or art as learning tidings etc.

संस्कृतेऽपि अन् प्रत्ययान्तैः अञ्च् अङ्क् प्रत्ययान्तैश्च शब्दैः क्रियासातत्य. भाववचनञ्चेत्युभयविधोऽप्यर्थोऽवगम्यते।

# तृतीयप्रकरणम्

## संख्यावाचकाः शब्दाः

**संख्यावाचकशब्दानां संस्कृतसमानत्वम्**

१. सर्वासु सजातीयभाषासु संख्यावाचकाः शब्दाः संस्कृतसदृशा एव विद्यन्ते। अपि च 'एकद्वित्रि-पञ्चदश-शतम्' इत्याद्यापाततोऽव्युत्पन्नवत्प्रतीयमानानां संख्यावाचकशब्दानां व्युत्पत्तयोऽपि आचार्ययास्केन प्रदर्शिताः। ता एवानुसरद्भिर्वाकरनेगलादिभिः शार्मण्यैराचार्यैरेषां शब्दानां व्युत्पत्तयस्तुलनात्मक-पद्धत्या वैज्ञानिकरूपेण निर्धारिताः। तद्यथा—

१. (क) एकवाचकः सं० एकः, अवे० अएं-व, ओइव, पु० फा० अइव, तथा ग्रीक ओइनोस oi-no-s, aces, ला० oinos, unu-s, oeno-s, पु० आयर० oe-n, गॉ० aiaas, लिथ०o-e na-s, पु० उ० जा० ein, बुल्गा० i-nu, आं० one, फा० यक इत्यादि सर्वेषां शब्दानामेतदर्थिका भारोपीया प्रकृति *ए *oe *oi *ae *ai एव विद्यते।

प्रत्ययास्तु 'न' 'व' 'क' इति त्रयः। अनेन प्रतीयते यद्यूरोपीयभाषासु सर्वत्र 'न' प्रत्ययो विद्यते। अवेस्तायां पु० फारस्यां च 'व' तथा संस्कृते फारस्याञ्च कः प्रत्ययः।

एतदर्थिका एषा ए *oe. ae प्रकृतिः संस्कृतस्यैतच्छब्दे अथ च 'एनम्' सदृशेषु अनुलग्नेषु प्रत्यक्षतयाऽवलोक्यते[1]।

अनेन सुस्पष्टं ज्ञायते यत् सं० एकः अथ च आं० one सदृशाः सर्वथा भिन्नाः प्रतीयमाना अपि शब्दा मूलतः एकस्या एव प्रकृतेः प्रत्ययभेदेन निष्पन्नानि नाना रूपाणि सन्तीति।

---

१. एतद् शब्दस्य निर्धारणार्थक एकारोऽपि यास्केन आ+इ इति रूपेण व्युत्पादयतोक्तं—'एकः इता (आ-इता) 'संख्या'—निरुक्त ३-२, एषा संख्या सर्वासु संख्यासु समन्वितास्ति इति।

(ख) सं० स, सम् *sem.

सहार्थकः सम्, (स) निपातोऽपि नानाभाषासु एकार्थे प्रयुज्यते। यथा—सं० 'स-कृत्' (एकधा कृत्तं छिन्नम्), 'स-हस्र'सदृशेषु शब्देषु एकार्थकः 'स' निपातः प्रत्यक्षतो दृश्यते। एवमेव ग्रीक hen < hem, monux मोनुख (एकनखः), लाति० आं० simple, simplex, sin-gular (एकदा, एकवारम्) आं० single, गॉ० simdle इत्यादि शब्देषु एकार्थकः 'सम्' निपातः प्रत्यक्षतोऽवलोक्यते।

**क्रमवाचकः**

फा० यकम् (प्रथमः) राज०, गुज० एकम् (प्रतिपत्तिथिः) इत्यपवादं विहाय संस्कृतसजातीयभारतीयभाषासु कुत्रापि 'एक'शब्दान्निष्पन्नो 'एकमः' इति क्रमवाचकः शब्दो नावलोक्यते। अस्य स्थाने सर्वत्र सं० प्रथमः (पूर्वः), आं० first, ग्रीक protos, सदृशाः शब्दा विद्यन्ते। एतेषां सर्वेषां शब्दानां प्रकृतिः √पृ, प्र पेर per विद्यते। अनया व प्रत्ययोगेन सं० पूर्वः, पूर्वीयः, स्लाव० पोउरविय, सं० प्रथम (प्र-तमः) ग्रीक प्रोतोस् pro-to-s<prof-atos प्रोवतोस् (पूर्ववर्ती) शब्दाः निष्पाद्यन्ते। गॉ० frunj (अधिपतिः), उ०जा० fro, (अधिपतिः), जा० frau (स्वामिनी, महिला lady) <pro-vo सदृशाः शब्दा अपि अनेनैव सम्बद्धाः। गॉ० fruma, आं० सैक० forma, ला० primu-s आं० primo, prime ग्रीक promo-s (अग्रणी, नेता, राजा, राजकुमारः, राजकुमारी) शब्दाः √पृ, प्र इति प्रकृत्या सम्प्रसारणितेन गुणितेन वा रूपेण सह मप्रत्यययोगेन, सं० प्रथम, अवे० फ्रतेम, पु० फा० फ्रतम सदृशाः शब्दाः 'तम'प्रत्यययोगेन, पु०उ०जा० fuirst, आं० first सदृशाः शब्दाश्च इष्टप्रत्यययोगेन निष्पाद्यन्ते।

आंग्ल्याम् एकार्थकः a निपातोऽपि वर्तते।

२. सं द्वा (वै०), द्वौ (पुं०) द्वे (स्त्री-नपुं०), अवे० द्व, दुइएं (स्त्री) ला०, ग्रीक duo, दुओ, लिथ० du दु, ला० duae (स्त्री०) आयर dau, do दौ, गॉ० tvai त्वाइ, tva त्व (नपुं०) tvos (स्त्री०), उ०जा० zwene, आं० two, ला० du-plu-s du-plex, आं० duplicate, double, doubt. पु०उ०जा० zweho, सदृशानां शब्दानां प्रकृतिः du दु एव विद्यते। दूरार्थकः खल्वेषो 'दु' निपातः।

'द्वा' इत्यस्य सम्प्रसारणितं रूपमपि 'दु' इत्येव जायते।

सं० द्विकः (द्वि-सहितः consisting of two), आं० twig (शाखा), ए० सैक्सन twi-z.

I सं० द्वि dvi, द्विपद्, ग्रीक dipous, ला० di-pes, ए० सैक० twi-fete, उ०जा० zwi-valt, आं० twilight द्वाभा, twin (युग्म) सदृशेषु समस्तेषु ताद्धितेषु च शब्देषु द्वा, द्वै, द्वौ इत्यस्य स्थाने 'द्वि' शब्दो दृश्यते। तत्राकारस्थाने इकारस्तु 'त्रि' इत्यस्यानुकरणवशादागत इत्यनुमीयते।[1]

यास्केन द्वौ द्रुततरा संख्या[2] इत्युक्तं, परमाधुनिका दूरङ्गता संख्या इति व्युत्पादयन्ति।

'द्वौ' द्रुततरा संख्येत्युक्तवता यास्केन 'दु' 'द्रु' गतावित्यस्माद्गत्यर्थकाद्धातो'द्वौ' इति शब्दो निष्पादितस्तथैवाधुनिका भाषावैज्ञानिका अपि दूरार्थक 'दु' इति प्रकृतेरेवेमं शब्दं व्युत्पादयन्ति। गत्यर्थकः √दु प्रकृतेरपि दूरेगमनमित्यर्थोऽपि गृह्यत एव। अतः 'वाकारनेगल' स्य विवेचनमपि यास्कमेवानुसरति। एवमेवान्येषां संख्यावाचकशब्दानामपि विवेचनं वाकरनेगलेन सामान्यतो यास्कमनुसृत्यैव विहितमिति तु तेनैव प्रतिपादितम्।

क्रमवाचकः सं० द्वितीयः, अवे० बित्य, गाथा दबित्य पु० फा० दुबीतिय, ग्रीक deuteros देउतेरोस, दूरंगतः एषः ग्रीक देउओमइ deuomai, सं० दूर इत्यनेन सम्बद्धः। अनेनापि व्युत्पत्तिरेषा समर्थ्यते।

II सं० उभ ला० emphos गॉ० an-thār पु० उ० जा० anbar लिथ० antra-s, स्लाव० voto-u. सं० उभा, उभौ इत्यत्र 'उ' उभयार्थिका प्रकृतिः भश्च प्रत्ययः। जा० andar सदृशेषु शब्देषु उ-प्रकृतिरेव अन्, अम् रूपं भजते।

सं० द्विवचनविभक्तिः 'औ'—(आ+उ अपि) द्विवचन परिचायकमुकारं धत्ते।

III सं० युगम्, युग्मम्, युगलम्, आं० yoke, हि० जुग, जुगल, जोड़ा, जुवा (युक्तः)।

IV सं० यमः, यमलः, आं० gemini (युग्मम्)।

V आं० mutual (done by each towards or with regard to the

---

१. आं० two इत्यस्योच्चारणं 'टू' इति क्रियते परं वर्तनी तु 'द्वा' इत्यस्य प्रतिरूपा एव विद्यते।

२. निरुक्त० ३-२।

other) आंग्ल्या एष शब्दः सं० 'मिथुनम्' इत्यस्य सजातीयः इत्युच्यते[1]। संस्कृतस्य मिथुनमपि मिथः इत्यनेन निपातेन सम्बद्धम्। जार्मण्या mit (सह) अप्यनेनैव सम्बद्धः।

द्वा इत्यस्य हिन्द्यादिषु दकार एवावशिष्यते दो इति च जायते। आंग्ल्या two<सं० द्वा शब्दे च वकारेण सहाकारो (भारोपीय ओकारो वा) विद्यत एव। हिन्द्या दो इत्यस्य ओकारोऽपि आकारस्यैव प्रतिरूपः। एतेन हि० दो इत्यस्य वै० द्वा इत्यस्माद् विकासो जातो न तु लौकिकसंस्कृतस्य 'द्वौ' इत्यस्मादित्यपि सुस्पष्टमेव।

सं० विंशतिः, लाति० vigenti इत्यादिषु द्वि इत्यस्य वकार एवावशिष्टः। अन्यत्र च वकारो वकारेऽपि परिणमति। यथा गुजरात्यां वे<सं० द्वे। आंग्ल्या द्वयर्थको निपातः bi अप्येष एव। यथा—bicycle<*dvi k$^{w}$ekol >ग्रीक bikuklos, bimonthly द्विमासिकम्, bipedal द्विपादः, bidental द्विदन्तः, binocular, <bin <ocu-lar सं० द्विअक्षः।

(सं० 'अक्षि' एव लातिन्यां ocu, oculus, ग्रीक्यां च opt इति जायते ककारस्य पकारे परिवृत्त्या। आं० optecle अप्येतस्मादेव)। हिन्द्या बीस, बाईस इत्यादीनां बी bi बाइ तथा चांग्ल्या द्वयर्थको निपातः bi, इत्युपपदमेवास्ति।

यथा लातिन्यां द्वयर्थको duo दुओ इति शब्दो विद्यते, यथा च हिन्द्यां दुबारा दूसरा, दूज, पञ्जाब्या दूजा इति गौणरूपेषु द्वा इत्यस्य दुर्बलं सम्प्रसारणितं वा दु इति रूपं विद्यते, तथैवांग्ल्यादिष्वपि द्वयर्थकेन du डु इति पूर्वपदयोगेन dual, duet, duplicate, duplex सदृशाः अनेके शब्दा निष्पाद्यन्ते। अथ च double<द्वि √पृ, द्विपूर्ण, सदृशाः शब्दा अपि संख्यावाचकेन द्वा इति शब्देनैव निष्पाद्यन्ते।

आंग्ल्यां couple शब्दः युगलार्थे दम्पत्यर्थे वा रूढः। परमस्य यौगिकोऽर्थः 'यो योजयति' which unites two things or objects इत्यस्ति। संस्कृते-'कपाल'शब्दोऽपि द्वाभ्यां कपालाभ्यां घटो निर्मीयते, इत्यादिषु तस्मिन्नेवार्थे प्रयुक्तः।

---

१. Indo European Language and Society.

**क्रमवाचक:**

VI सं० द्वितीय:। आ० second<लाति० secundus<सं० सक्त: √सच् <*sek$^{w}$e इत्यस्मान्निष्पन्न:।

३. सं० त्रि, पुं० ब०व० त्रय:। अवे० थ्रय, थ्रायो, पु० फा० ए ग्रीक treis त्रेइस लाति० tres, आयर० tri त्री, गॉ० threis थ्रेइस, आं० three जा० dri लिथ० trys त्र्यस स्लाव० trij-e.

यास्केन 'तीर्णतमा संख्या भवति' इत्युक्तवता स्पष्टमेव प्रतिपादितं यत् √तॄ इति धातुप्रकृत्या सह ई—प्रत्यययोगेन तृ+इ=त्रि इति जायते। पाश्चात्यैरप्येषा व्युत्पत्तिः स्वीकृता। त्रिशब्दस्य स्त्रियां सृप्रत्ययान्तः तिसृ कर्ता ब० व०, तिस्रः इति रूपं जायते। एष 'तिसृ' शब्दः संस्कृतवदवेस्तायां, केल्टिक्यां चापि सुरक्षितः। तद् यथा—

सं० तिस्रः, अवे० तिशरो, आयर० teoir, सिमरिक teir.

सं० 'स्वसृ' शब्देऽपि एषः स्त्रीवाचकः 'सृ' प्रत्ययो दृश्यते। एष 'तिसृ' शब्दश्च सं० 'त्रि-स्र' शब्दात् विषमीकरणेन जातः इत्यनुमीयते। तद् यथा—तिस्रः<त्रि-स्रः।

स्त्रीवाचकः सं० चतसृ कर्ता ब०व० चतस्रः अप्यनेनैव व्युत्पादितः।

हि० तीन सं०<त्रीणि, नपुं० क० ब०व० तः आगतः। लहन्दा आदि पश्चिमोत्तरीयभारतीयभाषसु तु 'त्रय' इति पुं० रूपमद्यापि प्रचलितं वर्तते।

आंग्ल्यां लातिन्याञ्च त्रि tre, tri इति पूर्वपदयोगेन नैकास्ताद्धिताः समस्ताश्च शब्दाः निर्मीयन्ते। यथा—treble, trebly, tripedal, tripod त्रिपाद, tricycle त्रिचक्रम्, trio त्रयी, trident त्रिदन्तः, triduan त्रिदिवसः।

हिन्द्या तीज, पं० तीजा, हि० तिगुना, तीस इत्यादिषु त्रि इत्यस्य रकारो लुप्तः तकारो एवावशिष्टः, यथा—तीन इत्यत्र।

क्रमवाचकः—सं० तृतीयः, अवे० थ्रित्य, पु० फा० सितिय, ग्रीक tritos लाति० trit-avo-s, स्लाव० tretiji गॉ० thridja, आं० third, जा० dritto अन्त्यो यो लुप्तः।

४. सं० चत्वारः, अवे० चथ्वारो<*k$^{w}$etvores>लाति० quattor>ग्रीक tetore, बोएटिक pettares>गॉ० fidvor>fior, पु० सैक० fiwar, ऐ० सैक०

feower, आं० four, लिथ० keture, स्लाव० cetyr चेत्यर, फा० चहार, हि० चार अत्र पदादौ भरोपीयो क्य $k^{w}e$ कारः शतंभाषासु चकारे ग्रीक्यां तकारे पकारेवा परिणतः। एवं * $k^{w}$etvor-es संस्कृते चत्वारः बोएटिक ग्रीक्याञ्च pettares इति जातः।

एवमेकत्रांग्ल्यां four अन्यत्र च हिन्द्या चार इत्येतौ सर्वथाभिन्नाकारावपि सजातीयौ सिद्धयतः। गॉथिकजार्मण्यांग्लादिट्यूटानिकवर्गे भारोपीयो $k^{w}e$ कारो ग्रीक्यां पकारो भूत्वा फकारे परिणतः।

आं० quarter, quadri, quadruped सदृशाः शब्दा अपि अनेनैव सम्बद्धाः।

हि० चार, फा० चहारवत्, ग्रीक-पैतेरेस-शब्दात् आं० four इत्यत्रापि हि० चारवत् मध्यगः तकारो लुप्तः। स च गॉथिक fidvor फिड्वोर इत्यत्र सुरक्षितः।

चत्वारः चलिततमा संख्या[1] इति यास्केन प्रतिपादितम्।

**क्रमवाचकः**

I सं० चतुर्थः ग्रीक tetar-to-s.

बोएटिक petra-to-s ला० quartus.

पु०उ०जा० fior-do, आं० fourth, quarter.

एते सर्वे क्रमवाचकाः शब्दाः 'त' 'थ' प्रत्यययोगेन निष्पन्नाः।

II सं० तुरीयः, तुर्यः अवे० तूइर्य लाति० ktur.

५. सं० पञ्च <*pen$k^{w}e$>ग्रीक pent लाति० quinque जा० गॉ० fimf आं० five, लिथ penki, स्लाव० penti संस्कृतादि शतम्वर्गे अन्तिमः ककारः चकारे ग्रीक्यां च तकारे परिणतः, एवमेव लातिन्यामाद्यः पकारः ककारे परिणतः।

गॉ० fimf, जा० fimf,-गॉथिकजार्मण्योः fimf, fimf, funf इत्यत्र मध्यगोऽनुनासिकः सुरक्षितः स च आं० five इत्यत्र लुप्तः, अपि च सं० 'वृकात्' 'वृक्'

---

१. निरुक्त ३-२।

आं० wolf वत् अत्रापि अन्त्यः भारोपीयः ककारः फकारे परिणतः। स च आंग्ल्यां ब भूत्वा वकारो जातः।

**क्रमवाचकः**

सं० पञ्चमः पञ्चथः (वेदे) अवे० पञ्क्तञ्हे पुख्थ, फा० पंजम हि पांचवां पंचमांशः, ग्रीक pemp-to-s पैम्पतोस, ला० quintus, penqto सिम pimphet, गॉ० fimfta जा० funfte, आं० fifth, लिथ० Pentka-s पेंक्तस, स्लाव pentu पेंतु।

**विशेषः**—चतुर्थ, पञ्चथ, षष्ठ इत्यत्र क्रमवाचकः त-थ प्रत्यय एव स्वाभाविकः। लौकिकसंस्कृतस्य पञ्चमस्य म प्रत्ययस्तु 'सप्तम'स्य अनुकरणवशादागतः इति ज्ञायते। यूरोपीयासु भाषासु तु थ-त प्रत्यय एवास्ति, परमीरान्यासु संस्कृतवन्म प्रत्ययोऽस्ति।

**भाववाचकः**—सं० पंक्तिः (पञ्चानां समूहः) इत्यत्र भारोपीयः ककारः सुरक्षितः। यतो हि तालव्य स्वरयुक्तककार एव चकारे परिणमति। आं० fist मुष्टिः फा० मुश्त हि० मुट्ठी, मुक्का हि० पञ्जा (पञ्चांगुलीयुक्तो हस्तः) आं० finger वस्तुतः पञ्चांगुलयः, अपि एतस्मादेव। सं० पंक्तिः, आं० finger उभयत्र प्रकृतिः सं० 'पंक' penk$^{w}$e पेंक्वे समाना एव। प्रत्ययौ च एकत्र 'तिः' अन्यत्र च अर er इति भेदेन। उभयोरपि शब्दयोर्मूलार्थस्तु 'पञ्चानां समूहः' इत्येवास्ति।

लिथ्वान्यां स्लावीयां च penki, penti, सदृशाः गणनावाचकाः शब्दाः सं० 'पंक्ति' इत्येतस्माद् भाववाचकशब्दादेव सम्बद्धाः।

पञ्चशब्दस्य व्युत्पत्तिं प्रदर्शयता यास्केनोक्तम् पञ्च 'पृक्ता संख्या'[१]। वस्तुतः समवायार्थकात् पचि धातोः पञ्चशब्दो निष्पन्नः। समूहार्थकः 'पंक्ति' शब्दः इत्येतस्य विनिगमकम्।

६. सं० षट् षष्, यथा षष्ठः<seks, sveks, अवे० ख्शव्श xshvash, फा० शश, ग्रीक fex, वैक्स hex स्वेक्स<sveks, ला० sex, आयर० se गॉ० saish, जा० sedhs आं० six, हि० छह, लिथ० szvrzi, स्लाव shesti.

१. निरुक्त ३-२

**क्रमवाचकः**—सं० षष्ठः. ग्रीक shekto-s पु०उ०जा० sehto, आं० sixth, लाति० sextu-s फा० शशम् हि० छठा, लिथ० szeszta-s गॉ० saihsta.

षट् 'पुनः सहते'[1] इत्युक्तवता यास्केन √सह् मर्षणे इत्यस्माद् षट्शब्दस्योत्पत्तिः प्रदर्शिता।

७. सं० सप्त, सप्तम, मूलतः मकारान्तः सप्तमशब्दो नव दश इत्यस्यानुकरणवशात् 'सप्त' इति जातः। ला० सप्तम् इत्यत्रान्तिमो मकारः सुरक्षितः। अवे० हप्त, फा० हफ्त, पं० सत हि सात, ग्रीक hepta, अल्बा sta-te लाति० septem गॉ० sibun, पु०उ०जा० sibin, आं० seven जार्मण्यवर्गेऽन्त्यो 'मः' नकरे परिणतः। लिथ० septyn-i स्लाव० sedmi.

१३. क्रमवाचकः—सं० सप्तमः ग्रीक hebdomo-s स्लाव० sedmu, ला० septimu-s पु०उ०ज० sibunto फा० हफ्तन् आं० seventh.

यास्केन सप्त 'सृप्ता' संख्या[2]—इति व्युपत्तिः प्रदर्शिता।

विशेषः I. septembar सेप्टेम्वर इति आंग्लशब्दो वस्तुतो लातिनमासनाम्नि सप्तम् इति संख्यावाचकं पूर्वपदं भृ धातोः निष्पन्नः भर् च उत्तरपदे स्थितः। एवं सप्तमं (मासं) बिभर्ति इति सेप्तेम्बरः इति व्युत्पत्तिर्जायते। एवमेव अक्तूबर, नवम्बर, दिसम्बर <अष्टम्-बरः, नवम्बरः दिसम् (दशमम्) बर इति विशिष्टानां मासत्रयाणामपि संस्कृतमूलिका व्युत्पत्तिः लातिनमहाकोशे[3] एव प्रदत्ता।

II—यथा हि० सात इत्यत्र मध्यगः पकारः लुप्तः तथैव जार्मन सैबुन इत्यत्रापि मध्यगस्तकारः लुप्तः।

८. सं० अष्टा अष्टौ <$ok_{v}$to, okatov, अवे० अश्त, फा० हश्त, आर्मे ut, ग्रीक okto, लाति० octo, पु० आयर ocht लिथ० asztu-n-i, स्लाव osmi, गॉ० ahtau, आं० eight, हि० आठ।

क्रमवाचकः—सं० अष्टमः, अवे० अश्तम, फा० हश्तम, ग्रीक agaoo-s, लाति० octav-o-s ओक्तावोस हि आठवां वत् लातिन्यां octa-vos इति रूपेऽपि मकारस्थाने व प्रत्ययो दृश्यते। आंग्ल eighth इत्यत्र च चतुर्थवत् क्रमवाचकः थ प्रत्ययोऽवलोक्यते।

---

१-२. निरुक्त ४-४ ३. लातिन डिक्शनरी।

अत्रेदं वैशिष्टयम् —सं० अष्टा (वेद) अष्टौ इति रूपाभ्याम् प्रतीयते यदस्यार्थश्चतुर्थस्य द्विगुणिता संख्या, हि० दो चौक्के इत्यासीत्। एते रूपे द्विवचनान्ते स्तः। अष्टसु इत्यस्मादनुकरणवशादष्टेति जातम्।

यास्केन अष्टशब्दस्य अष्टावश्नाते[1] इति व्युत्पत्तिः प्रदर्शिता। सप्तसंख्यातोऽपि एषा गतास्ति, अत एव 'अष्टा' इत्युच्यते।

९. सं० नव, अवे० नव, फा० नौह, हि० नौ, ग्रीक ena, आर्मे० inn, लाति० novem, आयर० noin, गॉ० niun आं० nine लिथ० devyn-i, स्लाव denenti देनेन्ति <navyni, nouenti, अत्राद्यो दकारो दश संख्यात आगतः। अन्त्यप्रत्ययश्च भाववाचकः एव।

क्रमवाचकः—सं० नवम, अवे० नवोम, पु० फा० नवम्, ग्रीक eina-to-s, लाति० non-u-s, लिथ० devin-ta-s स्लाव० deven-tu, आयर० no-mod, गॉ० niun-da, पु० ज० niunto, आं० ninth, फा, नोहुय, हि० नवां।

नव एषा संख्या, अभिनवास्ति[2]।

१०. सं० दश, अवे० दस, फा० दह *dek$_u$em, ग्रीक deko, ला० decem डेसेम्, आर्मे tesn आयर० deich गॉ० taihun, जा० tehan लिथ० deszim-t, स्लाव० dese-n-t देजेन्त, सं० दशत्।

क्रमवाचकः—सं० दशमः, अवे० दसेम, फा० दहुय ग्रीक dukato-s डेक्टोस, लाति० decimu-s आयर० dechm-ad, स्लाव० desentu, गॉ० taihunda, आं० tenth.

'दश' दस्ता संख्या भवतीति[3] निर्वचनं कृतवता यास्केन प्रदर्शितं यद् दसु उपक्षये इत्यस्माद्धातोर्निष्पन्ना 'दश' इति संख्यान्तिमापक्षीणा वा संख्यास्ति। यतो ह्यग्रिमाः सर्वास्संख्या अनया सह द्वि त्रि इत्यादिसंख्यानां योगेनैव निष्पद्यन्ते।

११. एकादशतः शतं पर्यन्ताः संख्यावाचकाः एकतयी (इकाई) संख्याशब्देन पूर्वपदेन सह दसतयी (दहाई) इत्युत्तरपदेन सह समस्ताः शब्दा विद्यन्ते सर्वास्वेव भारोपीयासु भाषासु। तद्यथा—

सं० एकादश इत्यत्राऽऽकारः 'द्वा' इत्यस्यानुकरणवशादागतः। षोडश <षट्-दश

१. निरुक्त ३-२ २. निरुक्त ३-२ ३. निरुक्त ३-२।

इत्यत्र टकारयोगेन दकारो ढत्वमाप्तष्टकारश्च लुप्तः। लोपं गच्छता टकारेण च पूर्ववर्ती अकारस्तथैवोकारे परिवर्तितः यथा वोढा इत्यादौ। अष्टादश इत्यत्र च भारोपीयं द्विवचनयुक्तमाकारवद्रूपं सुरक्षितम्। संस्कृते नवदश इत्यस्य स्थाने एकोनविंशतिः, एकान्नविंशतिः ऊनविंशतिः इति शब्दत्रयी प्रयुज्यते।

१२. २० सं० विंशतिः, लाति० viginti उभयत्र द्वि इत्यस्य आद्यः दकारः लुप्तः।

'विंशतिर्द्विदशतः'[1] इत्युक्तवता यास्केन विंशतिरित्यस्य या भाषावैज्ञानिकी व्युत्पत्तिः प्रदर्शितास्तामवलोक्य पाश्चात्या भाषावैज्ञानिकाश्चकितचकिताः संजाताः। विंशतिरित्यत्र 'द्वि-दशतिः' इत्येतस्योभावपि दकारौ लुप्तौ, 'वि' इत्यत्र चानुस्वारागमोऽपि जातः। लातिन्यां च भारोपीयेण क्यकारेण सहानुस्वरागमो जातः। एवं सं० विंशतिः <*dvi-dek$_{u}$eti>लाति० viginti, इत्युभे अपि रूपे निष्पन्ने। आंग्ल्या twenty अप्येतस्मादेव। एवमेव सं० त्रिंशत्, त्रिंशतिः, आं० thirty, चत्वारिंशत् forty, पंचाशत् fifty, षष्ठिः sixty, सप्ततिः seventy अशीतिः eighty, *ak$_{u}$ity, नवतिः ninty इत्येताः संख्या निष्पन्नाः। लातिन्यामपि triginti सदृशाः संख्याशब्दाः जायन्ते।

१३. आंग्ल्या thirteen तः आरभ्य ninteen पर्यन्तं सर्वाः संख्याः त्रि tri> three इत्यादीनां सह ten<*dek$_{u}$e योगेन निष्पन्ना इति तु प्रत्यक्षमेव।

१४. eleven तथा च twelve इत्यव्युत्पन्नौ प्रतीयमानौ संख्याशब्दावपि संस्कृताश्रयेण व्युत्पादितौ। यथा हि—

आं० eleven<जा० elf<पु०उ०जा० गॉ० ein-lif, इत्यत्र ein इति पूर्वपदं एकार्थकमस्ति। √li<*leip, सं० √लिप्, अहं लिम्पामि, संयुक्तोभवामि संश्लिषामीति यावत्। एवमेकेन लिप्तः युक्तः (दश) ten=eleven द्विसंख्यया लिप्तश्च (दश) twelve, जा० zwolf इति निरुच्येते। उभयत्र 'दश' इत्यस्याध्याहारः क्रियते।

**लातिन्यां ग्रीक्याञ्च संख्याशब्दाः**

दशपर्यन्ताः संख्याशब्दाः पूर्वमेवोक्ताः।

१५. सं० एकादश, ग्रीक hendeka, लाति० undecim.

---

१. निरुक्त ३-२।

सं० द्वादश, ग्रीक dodeke, लाति० duodecim, एवमेव लातिन्यां tridecim त्रयोदश quttor-decim चतुर्दश quindecim पञ्चदश अत्र quenque पञ्च इत्यस्य quin इत्येवावशिष्टः। sedecim षोडश (उभयत्राद्यः 'स' मात्र एवावशिष्टः)। septendecim सप्तदश अत्रावधि संस्कृते लातिन्याञ्च संख्याशब्दाः समाना एव। परमष्टादशकृते लातिन्यां duo-dāviginti दुओ दाविगिन्ति (द्वाभ्यां न्यूना विंशतिरित्यस्ति)। undēvigintī ऊनविंशतिः।

१६. हिन्द्या 'ग्यारह' 'बारह' 'तेरह' इत्यादीनां संख्याशब्दानां विकाससरणि-रपि भिन्नैव। यथांग्ल्याः thirteen इत्यत्र three इत्यस्य ther इति गुणितं रूपं ten (दश) इत्यनेन सह संयुक्तम्। तथैव हिन्द्यामपि पूर्वं 'दश' इत्यस्य 'दह' इति रूपं जातम्। पश्चाच्च त्रि इत्यस्य 'तिर्' इति गुणितेन रूपेण सह योगेन 'तिर-दह' दकारस्य च लोपेन तिरह>तेरह इति जातम्। एवमेव सं० एकादश>एकादह >एकारह>एग्यारह>ग्यारह इति जातम्। ग्यारह, बारह इत्युभयत्रापि तेरह इत्यस्यानुकरणेन 'र' कारागमो जातः।

राजस्थान्याम् 'एग्यारह' इत्येवोच्यते।

अत्र रकारागमश्चेन्नाभूत्तदा 'एग्याह' 'बाह' इति रूपे स्याताम्। शब्दसौ-श्रवसे for the sake of euphony तेरह इत्यस्यानुकरणेनात्रापि रागमो जातः। पन्द्रह, सत्रह, अठारह इति शब्देष्वपि तथैव रेफागमो जातः। सं० 'चतुर्दश' शब्दे तु रकारः पूर्वमेवास्त्यत एव पुना रेफागमो न जातः। चतुर्दश>चतुर्दह>चउदह इति जातम्। हि 'सोलह' शब्दे च सं० 'षोडश' इत्यस्य डकारो लकारे परिवर्तितः। यथा वेदेऽपि डकारो 'ल' कार उच्चार्यत एव। √हिन्द्या अन्ये संख्याशब्दा निगदेनैव व्याख्याताः।

१७. संस्कृतस्य विंशतिशब्दस्योत्तरपदं 'दशतिः' इत्यस्य घृष्टं रूपं विद्यते। त्रिंशत्, चत्वारिंशत्, पञ्चाशत् शब्देष्वपि दशत् शब्दस्य घृष्टं रूपं विद्यते। एवं पञ्चदशत् इति रूपे दकारस्य लोपे सति पूर्वस्याकारस्य दीर्घत्वं जातमेवं पञ्चाशदिति रूपं निष्पन्नम्। परं षष्ठिः इति शब्दस्य विकासस्यास्त्यन्यैव कथा। यतो हि पञ्चदशत् इत्यनेन 'पञ्चाशत्' इति रूपं तु जातम्। परमेवमेव यदा षष्-दशत् इति रूपे दकार लोपे सति षष्, शत् इति रूपे शकारत्रयस्य सहावस्थानं उच्चारणञ्च क्लिष्टमासीत्। अतएव 'शत्' इत्यस्य शकारोऽपि घृष्टस्तकारश्च भाववाचकसंज्ञासूचकस्ति इति जातः। एवं षष्टिः इति रूपं निष्पन्नम्।

तदनुकरणेन च सप्ततिः, अशीतिः, नवतिः इत्येतानि रूपाणि निष्पन्नानि।

यद्यपि सं० षष्टिः आंग्ल्याश्च sixty, सं० सप्ततिः, आं० seventy, सं० अशीतिः, आं० eighty, सं० नवतिः आं० ninty सदृशेषु शब्देषु साम्यं विद्यते, परं ते सर्वथा समाना न सन्ति। यतो हि संस्कृतशब्देषु भाववाचकः 'ति' प्रत्ययो 'दशत्' इत्यस्यान्तिमोऽशो विद्यते, परं आंग्ल्या sixty इत्यस्य ty दश<*$dek_ve$ इत्यनेन निष्पन्नस्य ten इत्यस्यैव घृष्टं रूपं विद्यते इत्यवगन्तव्यम्।

१८. १०० शतम् यास्केन शतमित्यस्य व्युत्पत्तिं प्रदर्शयतोक्तं—'शतं दश दशतः'[1]। निरुक्तिरेषा—सर्वथा समीचीना भाषावैज्ञानिकी च।

सं० शतम्<* $k_v$entum>लातिन centum.

आं० hundred भारोपीयो *$k_v$entum इत्यस्य ककारः ट्यूटानिकवर्गे खकारो भूत्वा हकार इति जातः। शतंवर्गे च स एव $k_v$e क्येकारः शकारे परिणतः एवमेकत्र संस्कृते $k_v$entum इत्यस्य 'शतम्' इति तथा ट्यूटानिकवर्गे च hund. (सं० शतम्<*$k_v$entum>ट्यूटा० hund) इति जातम्। आंग्ल्याञ्च red इति स्वार्थिको प्रत्ययो योजितः। एवं सं० 'शतम्' तथा च आं० hundred इति सर्वथा विसदृशौ शब्दावपि सजातीयौ प्रतिपाद्येते।

१९. १००० सहस्रम्। सं० √ घस्लृ धातोः भारोपीयो घेस्लो $g^w$heslo शब्दो निष्पद्यते। संस्कृते घ्वकारो हकारे परिणमति। ग्रीक्यां च खकारे।

अतएव एकत्र—

सं० हस्रम् <*$g^w$heslo>ग्रीक khillio (xillio) इति चान्यत्र जातम्।

एषः 'हस्रः' एव अवेस्तायां पारस्याञ्च हज्रः, हजारः इति च जातम्। संस्कृते 'हस्र' शब्देन सह एकार्थकः 'स' इति निपातोऽपि योजित एवं स-हस्र इत्यस्य यौगिकोऽर्थ 'एक सहस्र'मित्यस्ति।

ग्रीक्याः सहस्रवाचकस्य khillio शब्दस्य खकारस्य ककारे परिणत्या आंग्ल्याः सहस्रवाचकः killo इति शब्दः प्रादुरभूत। अधुना भारते प्रचलिताः killometer,

---

१. निरुक्त—३।२।

killogram सदृशाः शब्दा अपि killo इति पूर्वपदं बिभ्रति। एवं *g^w heslo इत्यस्मान्निष्पन्नौ सं० सहस्र, आं० killo इति शब्दौ सर्वथा भिन्नाकारावपि सजातीयावेव इति भाषाविज्ञानेन सम्यक् प्रदर्शितम्।

२०. आं० thousand शब्दस्य विकासस्यापि सुदीर्घा कथा विद्यते। गॉथिक्यां thusondi, बुल्गारियन भाषायाञ्च tysenshta तुशेंश्त एषु सर्वत्र tus इति पूर्वपदं sand इति चोत्तरपदं विद्यते। एषः tus इति निपातस्तु वैदिकसंस्कृतस्य तविश् अथवा तवस् taviś, tavas (बलः, शक्तिः, सामर्थ्यम्) एवास्ति। एवं सं० त्विषन्त > बुल्गा tysenshta > गॉ० thusondi > आं० thousand इति शब्दो निष्पाद्यते। अस्यार्थस्तु त्विषन्त सर्वातिशयसामर्थ्यवानित्येवास्ति।

२१. आं० zero शून्यस्य विकासस्तु भारत एवाभूदिति सर्वे स्वीकुर्वन्ति। आं० zero अपि सं० शून्य शब्देनैव विकसितः। संस्कृतस्य श-सकारः अरबदेशे यूरोपे च ज्ज़ z:g इति जायते। यथा सं० शृङ्गवेरम् आं० ginger इति जातम्।

सं० शर्करा च आं० gagry (गुड़)।

एवमेव शून्यस्य शः z कारे परिणतः। संस्कृते नकारान्ताः शब्दाश्च यूरोपीयासु भाषासु पारस्याञ्च रकारान्ता अपि जायन्ते। यथा सं० यकन् (यकृत्), फा० जिगर ला० yeker एवं शून्य इत्यस्य नकारो रेफे परिणतः। शकारश्च ज़कारे। तथा च सं० शून्य > आं० zero इति जातः।

**अत्रेदमवधेयम्**

२२. संस्कृते एकविंशतिः, द्वाविंशतिः, एकपञ्चाशत् सदृशाः संख्याशब्दा जायन्ते, परमांग्ल्यादिषु twentyone, twentytwo सदृशाः शब्दाः सन्ति। एवं संस्कृत इकाई सूचका एक, द्वा, त्रयः, चतुर्, पञ्च इत्याद्याः संख्याशब्दाः पूर्वं विंशत्याद्याश्च पश्चात् प्रयुज्यन्ते। परमांग्ल्यादिषु सर्वासु यूरोपीयभाषासु twentyone इत्यादि शब्देषु twenty, thirty, forty इत्याद्याः संख्याः पूर्वं पश्चाच्च one, two, three इत्याद्या युज्यन्ते। विभेदमिमं दृष्ट्वा कैश्चिद् भाषाविज्ञानानभिज्ञैरेतदपि घोषितं यन्नास्ति कोऽपि भारोपीयो भाषापरिवारः। यदि कोऽप्येतादृश एकः परिवारः स्यात्तदा कथमेकत्र एकविंशतिरन्यत्र च twentyone इति विभिन्नक्रमयुक्तौ संख्याशब्दौ जातौ।[1] परं निर्मूला खल्वेषा शङ्का। यतोहि जार्मण्यैर्भाषावैज्ञानिकैर्वर्षशतकपूर्वमेवा

१. भाषा और समाज—रामविलास शर्मा।

स्याः शङ्कायाः समाधानं कृतम् एवं स्पष्टीकृतञ्च यत् संस्कृतस्य समासशक्तिः प्रबलास्ति। अतएव पूर्वमेव समस्तेन विंशतिशब्देन एक, द्वा, इत्यादिसंख्यानां पुनः समासो जातस्तथा च एकविंशतिः द्वाविंशतिरित्याद्याः संख्याशब्दा निष्पन्नाः। परं यूरोपीयासु भाषासु न तादृशी समासशक्तिरत एव तत्र twenty इत्यनेन सह one, two इत्याद्याः संख्याशब्दाः पृथग्योजिताः[१]।

२३. अर्ध इत्यर्थे संस्कृते अर्धेन सह 'सामि' 'नेम' च इत्येतौ निपातावपि प्रयुज्येते। फारस्या नीम यथा—नीमहकीम, इत्यर्धार्थको निपातः संस्कृतस्य नेम इत्येवास्ति। आंग्ल्या लातिन्याश्च semi, ग्रीक्याश्च hemi, पु०उ०जा० sami, पू०सै० sam इत्येतावर्धार्थकौ निपातावपि सं० सामि इत्येव स्तः। ग्रीक्यां सकारस्य हकारो जातः। यथा आंग्ल्या semifinal शब्दे semi निपातो अर्धार्थक एव।

एवमेव ग्रीक्या hemisphere इत्यत्र hemi इति।

२४. अर्धार्थकनिपातप्रसङ्गे संस्कृतस्य समासशक्तिप्रदर्शनावसरे च हिन्द्या डेढ़, ढाइ, हूंठा, ढौंचा इति शब्दचतुष्ठय्यपि विदुषां ध्यानमाकर्षयति। श्रीमताचार्येण रामचन्द्रशुक्लमहाभागेन जायसीग्रन्थावल्यां स्वसम्पादिते पद्मावते शरीरार्थे प्रयुक्तं 'अहुट्ट हाथ परिमाण' इति वाक्यांशं विशदीकुर्वतोक्तं यत् संस्कृतस्य 'अध्युष्ट' शब्दस्य अहुट्ट इति प्राकृतरूपं विद्यते। वस्तुतो हिन्द्या अहुट्ट संस्कृतस्य अर्धचतुर्थ इत्येवास्ति। अर्धेन न्यूनं द्वि इति द्व्यर्ध>प्रा० डेड्ढ>हि० डेढ़। अर्धेन न्यूनं त्रि इति अर्धत्रि>अड्ढाई, अढाई, ढाई। अर्धेन न्यूनं चतुर्थ अर्धचतुर्थ>प्रा० अद्धतुथ्थ>अहुट्ठ ३॥, अर्धेन न्यूनं पञ्च इति अर्धपञ्च>अद्धञ्च>अड्ढौंच, ढौंच, ढोंचा[२] ४॥ इति।

---

१. There can be no doubt as to the reasons for this difference between the expressions for 11 to 19 and those for 21—29, 31-39 etc. The former group was more often used, for one thin;g but the chief reason was that the words for 20 and the other multiples of ten were themselves compounds, and therefore it was less convenient to compound them again with other words. A Comparative Grammar of The Indo-European Languages part III.

— Brugman Remark.

२. गुजरातप्रदेशस्य विख्यातविदुषः पं बेचारदासमहाभागेन कस्मिश्चिन्मासिकपत्रे (सम्भवतो विशालभारते) प्रदर्शिता एते शब्दा मया पठिताः।

एतादृश्यस्ति संस्कृतस्य समासशक्तिः। ध्वनीनां परस्परमेलनेन घर्षणेन च शब्दाः कीदृशं नवं नवं रूपमापद्यन्ते इत्यस्य हि० डेढ़, ढाई, हूंठा, ढौंचा इति शब्दचतुष्टयी अत्यन्तं रम्यं प्रमाणमावहति।

हिन्द्या अर्धार्थकः साढ़े शब्दश्च सं० सार्ध इत्यनेन विकसितः। हिन्द्याः पाव<सं० पादः, हिन्द्या पौन च<सं० पाद+ऊन=पौन इत्यस्ति। सं० ऊन-शब्दो हिन्द्यां औना, पौन इत्यनेनैव सुरक्षितः। यद्यपि हिन्द्या 'अँना पौना' शदृशेषु द्वन्द्वशब्देष्वप्येषो विद्यते एव। एवमेव उन्नीस, उनसठ सदृशेषु शब्देष्वपि 'ऊन' इति निपातो विद्यते।

# चतुर्थप्रकरणम्

## कृत्तद्धितसमासाश्च

**कृत्प्रत्ययाः**

१. यथा तिङ्प्रत्यया धातुभिः सह संयुज्य क्रियारूपाणि निर्मान्ति तथैव कृत्प्रत्यया अपि धातुभिः सह संयुज्य संज्ञाशब्दान् विशेषणान्यथवा क्रियासूचकानि संज्ञापदानि निर्मान्ति। कर्तृकर्मकरणाधिकरणद्योतका, भाववाचकाः क्रियाद्योतकाद्या नानार्थद्योतका विशेष्यविशेषणशब्दाश्च निर्मीयन्ते धातुकृत्प्रत्ययसंयोगेन ।

**तद्धितप्रत्ययाः**

२. कृत्प्रत्यययोगेन निष्पन्नैः शब्दैर्विशेषणैर्वा संयुज्य ये प्रत्ययाः पुनरन्यान्नवीनांच्छब्दान्निष्पादयन्ति ते 'तद्धिताःप्रत्यया' इति परिभाष्यन्ते ।

३. एवं कृत्प्रत्ययाः 'प्राथमिका' स्तद्धिताश्च द्वैतेयिका अप्युच्यन्ते ।

**कृत्तद्धितप्रत्ययविभेदः**

वस्तुतः कृत्तद्धितप्रत्यययोर्नास्ति सुमहदन्तरम्। उभयत्र प्रयुज्यमाना नैके समानाः प्रत्यया अप्यवलोक्यन्ते। एतादृशाः समानाः प्रत्यया यदा धातुभिस्सह संयुज्यन्ते तदा 'कृत्प्रत्यया' यदा च नामभिर्विशेषणैर्वा संयुज्यन्ते तदा च 'तद्धितप्रत्यया' इति व्यपदिश्यन्ते ।

**संकृतसजातीयासु भाषासु कृत्प्रत्ययाः**

सन्त्येतादृशा भूयांसः कृत्प्रत्यया ये संस्कृत इवान्यास्वपि सजातीयासु भारोपीयासु भाषासु समानरूपेणोपलभ्यन्ते। पूर्वं तावदत्रैतादृशा एव कृत्प्रत्यया उपस्थाप्यन्ते ।

**४. 'इ' प्रत्ययः**

संस्कृतवदन्यास्वपि भाषासु इ प्रत्यययोगेनापि शब्दा निर्मीयन्ते। यथा—

सं० अविः avis, ला० ovi, उ०ज० ou, आं० eue लिथ० avi-s, स्लाव० ovī-ca.

सं० अहिः ahis, अवे० अजिस्, आर्मे० iz (viper.), ला० angu-i-s, आं० anguish (क्रोधः), ग्रीक ekhi-s, ophi-s.

सं० असिः asis, ला० ēnsi-s, आं० fensing. (अत्र f इत्यस्य पूर्वागमो जातः)।

सं० जानिः, जनिः, अवे० जइनिस, गॉ० qēns<qēni, आं० queen.

(सं० ग्ना, अपि वेदे विद्यते)।

सं० अक्षि akṣi, लिथ० aki-i-s, स्लाव० oci (द्वि०व०), ग्रीक ossi, गॉ० augi-ba, जा० augay.

सं० अक्षा इत्यपि हि० आंख पं० अक्खी। सं० वै० अक्षण् (अक्षा) इत्यस्यैव ग्रीक्यां ककारस्य पकारेण ष (स) कारस्य च तकारेण opt इति जायते। opticle, opticean, optimist इत्यादयो नैके शब्दा अप्यनेनैव सम्बद्धाः।

सं० विः vis (वै० पक्षी), अवे० विश् (पक्षी), ला० ov-i-s संस्कृतेऽवेस्तायाञ्चाद्याकारो लुप्तः।

सं० कविः kavis, अवे० कविश् (सम्राट्) इराने कइकाऊस इत्याख्यः प्रसिद्धो राजवंशोऽभवत्।

सं० गिरिः giris, अवे० गइरिश (पर्वतः)।

सं० वव्रिः vavṛs (आच्छादनम्), अवे० ववोइरि shaelled without shell.

सं० बुध् budh, बोधः, अवे० बओइदिश, फा० बू (गन्धः), यतो हि गन्धोऽपि बुध्यते। सुगन्धः-खुशबू, दुर्गन्धः-बदबू।

सं० हरिः haris, अवे० जइरिश (सौवर्णः, पीतः)।

सं० सासहिः sāsahis (विजयी), पु० फा० साही, साहानुसाही, फा० शाहनशाह।

सं० दाधृषिः dādhṛṣis, अवे० दर्शिश्।

सं √दंश् danś, अवे० दंदशिश ।

सं० अरिः aris, ग्रीक er-i-s, (संघर्षः) ।

सं० √मन् मन्युः manus ग्रीक men-i-s, (मन्युः) ।

सं० दृशिः dṛśīs (वै० दर्शनम्), आयर० air-dire (ख्यातः), फा० दर्स (पाठः) ।

सं० √पृ, पुरिः puris, पुरी, लिथ० per-i-s, (दुर्गः) ग्रीक polis.

सं० √विद् vid, वेदिः vedis, स्लाव० ved-i (ज्ञानं), अवे० वएंइदिश् (घोषणा) ।

**५. 'नि' प्रत्ययः**

यथा संस्कृते तथैवान्यास्वपि भाषासु 'नि' प्रत्यययोगेन शब्दाः निर्मिताः । यथा—

सं० √दा dā, दानम् dānam, लिथ० dāni (उपहारः) ।

सं० √अज् $*eg^{w}e$ अग्निः agnis, ला० īg-ni-s, स्लाव og-ni, आं० ignite सदृशा नैके ताद्धिताः शब्दा अनेनैव निष्पाद्यन्ते ।

सं० श्रोणिः śroṇis<$k_u$lunis ला० clūni-s, आइस hlau-n, लिथ० szlau-ni-s, ग्रीक kloni-s, अवे० श्रओनिस् ।

सं० √रज् raj <$*reg^{w}e$ रञ्जति, रज्यते । सं० राजिः (पंक्तिः) अवे० राजयएंइति, रजिम (युद्धम्) ।

सं० छाया chāyā, फा० साया, स्लाव० se-ni.

सं० हानिः hānis. अवे० ज्यानि ।

**६. 'मि' प्रत्ययः**

संस्कृत इवान्यास्वपि भाषासु 'मि' प्रत्यययोगेन शब्दा निर्मीयन्ते । यथाहि—
सं० कृमिः kṛimis, आयर० cruim, लिथ० kirmi-s, फा० किरम, ग्रीक hel-mi-s, (अन्त्रकृमिः), ला० ver-mi-s, उ०जा० wur-m, आं० worm.

सं० उर्मिः urmis <*vḷ-mi-s, ए० से० vielm, आं० welling.

सं० भूमिः bhūmis, अवे० बूमिस, पु० फा० बूमि, फा० बूम ।

७. 'रि' 'लि' प्रत्ययौ

संस्कृत इवान्यास्वपि भारोपीयासु भाषासु 'रि' 'लि' प्रत्ययौ विद्येते ।

सं० अस्रिः asris तीक्ष्ण (धारा), ग्रीक ok-ri-s, point ला० oc-ri-s पर्वतशिखरम् ।

सं० √ विद् vid, ग्रीक id-ri-s (ज्ञानम्) ।

सं० वध्रिः vadhris, ग्रीक eth-ri-s (वधिया पशुः) ।

सं० तूलिः tūlis, ग्रीक tulē.

सं० धूलिः dhūlis, लाति० fūlīgo (धूमः), लिथ० dulke.

सं० भूरिः bhūris अवे० बुइरि ।

सं० वम्रिः (वै० ) vamris अवे० मओइरिश, फा० मूर (पिपीलिका) (अवे० फारस्याञ्च आद्यो वकारो लुप्तः) ।

सं० 'वल्मीक' अप्येष एव प्रतीयते ।

८. 'क्ति' (ति) प्रत्ययः

संस्कृत इवान्यास्वपि भाषासु 'ति' प्रत्यययुक्तशब्दानां बाहुल्यं वर्तते । आंग्ल्याञ्च ति ti प्रत्ययेन सह सर्वत्र on इति स्वार्थिकः प्रत्ययो युज्यते । एवमांग्ल्याः tion (शन) 'ति' इत्यस्यैव विस्तारितं रूपं विद्यते । एष च tion प्रत्ययः संस्कृतस्य तवत्, तवान् tavān प्रत्यय इव प्रतीयते ।

सं० पीतिः (वै० पानम्) pītis, स्लाव० पिति piti (पानम्), ग्रीक am-potis (ज्वार ebb भाटा tide) ।

सं० स्रुतिः srutis, स्रोतः, ग्रीक shu-si-s.

सं० जुष्टिः juṣtis, ग्रीक geusi-s, tast स्वादः रुचिः, गॉ० gukusi-s

√चि (चयने) <$k^w$e सं० अपचिति: ग्रीक gisi-s.

सं० भृति: bhṛtis ला० fortis आयर० brith, fortis गॉ० gabourth आं० birth पु० सेक, आं० fortune (भरणम्) आं० fort. (सर्वत्रान्तिम इकारो लुप्त:)।

सं० गति: gatis आं० gait, ग्रीक basis<*buti, ला० inventio, invention, गॉ० ga-gumth-s (सम्मेलनम्), उ०जा cumft (युद्धम्) camf.

सं० √मन् मति: matis ग्रीक man-ti-s (द्रष्टा, ऋषि:), ला० mentio आं० mention, स्लाव pāmentis (स्मरणम्)।

सं० √जन्, जाति: jātis जात:, अवे० फ्रजइ ंतिस, फा० फरजन्द बालक: (पुत्र:), ला० gēns, natio, nation.

सं० √शंस्, *$k_v$ens, शस्ति: śastis प्रशस्ति, ला० cēnsio, आं० census.

सं० √पच् *pek$^w$e पक्ति: paktis, ग्रीक pepsi-s, ला० coctio.

सं० √धा, हिति: hitis देवहिति: <*dhēti, ग्रीक thesi-s, प्रस्थापनं, व्यवस्थापनं arranging, आं० thesis, ला० condi-ti, condition. जा० tat आं० deed, लिथ० deti.

सं० आप्ति: āptis, (प्राप्ति:) ला० ad-aptio, adoptation (लातिन्यामांग्ल्याञ्चाध्युपसर्ग:)।

सं० स्यूति: syūtis, लिथ० siuti, स्लाव siti, आं० suit (dress पोशाक)।

स० √दिश् diṣṭis दिष्टि: (दिशा, निर्देश:), ग्रीक deixi-s, ला० dic-tio dictation, dictator, अवे० आदिष्ट:, जा० in-ziht अन्तर्दर्शनम्, दाषारोपणम्।

सं० प्राति: (पूर्ण), ग्रीक ple-si-s, ला० expletio, exploit *√ple.

सं० प्रज्ञाति:, प्रज्ञानं (ज्ञानम्), ज्ञाति: jnāti-s, आं० knowledge, ला० no-tio, notify, स्लाव० po-znati, ला० cognitio, अवे० आजइन्ति-स (ज्ञानं), गॉ० ga-kunth-s (परिचय:), उ०जा० kunst (विज्ञानं, कलायुक्त), स्लाव० zen-ti जामाता, लिथ० jenta-s, ग्रीक gnōtos निकट सम्बन्धी।

सं० श्रुतिः śrutis अवे० फस्त्र इतिस recitation, declamation स्लाव० श्लाउत० to be called आहुतिः।

सं० बुद्धिः, buddhis, अवे० पइति-बुश्तिश, ग्रीक pusti-s ज्ञानाम् सूचना वार्ता, संदेशः।

सं० √इण् गतौ, इतिः itis (गमनम्), अवे० पइतितिश् प्रतिगमनं, (पश्चात्तापः) ला० i-tio.

सं० इत्वरिः itvaris, ला०, आं० इटनेरेरी itnerary अप्येतस्मादेव।

सं० क्षितिः kṣitis, अवे० शितिश् (निवासः), ग्रीक kti-si-s (उपनिवेशः स्थापना)।

सं० दृष्टिः dṛṣṭis, अवे० दर्शितश, ग्रीक derxi-x.

सं० अपसृप्तिः apasṛptis, ग्रीक आं० herpsi-s, प्रसर्पणशीलश्चर्मरोगः।

सं० √रम्, रतिः ratis, रन्ति (यथा रन्तिदेवः), ग्रीक erasi-molpos (संगीतरतिः), ग्रीक eratic इराटिक अप्येतस्मादेव, लिथ० rim-ti.

सं० हृतिः hatis, आहन्तिः, अवे० जइतिश, जयन्तिश, लिथ० apginti-s vindication लिथ० gin-ti, to drive cattle पशु-हांकना, स्लाव० zen-ti (फसल काटना)।

सं० √सद् निषत्तिः niṣattis, लाति० sesaio, लिथ० ses-ti, अं० session अप्यस्यैव विस्तारितं रूपम्।

सं० √स्पश् (वै०) (स्पष्ट) spaṣṭa अवे० अवस्पशित, ग्रीक skepsi-s निरीक्षण, लाति० in-spectio आं० bio-psy (जीवाणुदर्शनम्) inspecti-on-tos.

सं० स्थितिः sthitis अवे० स्ताइतिश, ग्रीक sta-si-s (स्थानं, स्थितिः, उन्नतिः, लाति० statio, station, उ०जा० sta-t, stead, स्लाव० po-stati pars, nodus-स्वस्थानम्। लिथ० stoti चलना tread.

सं० √मा, मितिः mitis, ए० सैक० maed.

सं० √भज्, भक्तिः bhaktis अवे० बख्तिम् विभाजननम्, फा० बख्त बख्तावर।

**तिः (क्तिः) प्रत्यय (पूर्वागतः)**

संस्कृतवदन्यास्वपि भाषासु 'ति' प्रत्यययोगेनान्येऽपि प्रभूताः शब्दा निर्मीयन्ते । यथा हि—

सं० √धू dhū, धूतिः dhūtis, ग्रीक thu-si-s (raging, roaring) शब्दायमानः ।

सं० √रा दाने, रातिः rātis, अवे० राइतिस (distribution), फा० खे-रात ।

सं० √वस् vas आच्छादने, लाति० vesti-s, आर्मे० z-gest.

सं० √हु hu, आहुतिः āhutis, ग्रीक xu-si-s (out pouring उडेलना) ।

सं० √क्षण्, क्षतिः kṣatis, ग्रीक phthi-si-s (क्षतिः, क्षयः) ।

सं० √तृप्, तृप्तिः tṛptis, ग्रीक terpsi-s (तृप्तिः, धारणम्), गॉ० thaurf-t-s, उ० जा० durft (इच्छा, कामना) ।

सं० √तनु, ततिः tatis, ग्रीक ta-si-s, लाति० in-tentis, आं० intention, intend.

सं० √दो अवखण्डने दितिः dltis (क्षयः, खण्डिता), आं० death.

सं० √अदितिः aditis (अनन्त, अखण्डिता, अबद्धा), ग्रीक de-si-s (ग्रन्थिबन्धनम्) ।

सं० √भातिः bhātis, ग्रीक phati-s कथा, वार्ता, आं० phantāsi.

सं० √घस् अदने, घस्ति ghasti, लाति० hosti-s (foreigner विदेशी), host (अपरिचितः, शत्रुः), गॉ० gastas, आं० guest, स्लाव० gosti (अतिथिः, सहचरः, मित्रम्) ।

The root meaning is perhaps injury, harm.

(किं ghost भूतप्रेतः अप्येष एव ?) ।

सं० √नज् naj, नक्तिः naktis,, गॉ० nah-t-s, लिथ० nak-ti-s,

स्लाव० nos·ti-s, आं० nignt. जा० nacht (ट्यूटानिक्यास्वन्तिम इकारो घृष्टः, संस्कृत 'नक्त'मिति निपातोऽस्ति परमन्यासु भाषासु नक्तिरिति स्त्रीलिंग शब्दो विद्यते)।

सं० √शोऽन्तकर्मणि, शातः śātas<*k$_v$ātas, लाति० cotis सम्बन्ध, अवे० श्येइतिस, आं० whet.

सं० दृह्, दृढ dṛdha, लाति० fortis.

सं० √युज्, युक्त yukta (संस्कृते 'त' प्रत्यययुक्तं विशेषणपदम् परं लातिन्यां ति प्रत्यययुक्तः संज्ञाशब्दः), लाति० junctio, (योजनं युक्तिः), आं० junction.

सं० भिद्, भित्तिः bhittis, लाति० fissio (खण्डेषु विभाजनम्), आं० fission, (The action of splitting into pieces).

सं० पच्, पक्तिः paktis, लाति० coctio.

सं० √कू kū, आकूतिः ākutis, लाति० oc-tio, आं० oction.

सं० √तायुः tāyus (स्तेनः), स्लाव० tati (चौर्यम्), आयर० taid, आं० theif.

सं० भू, भूतिः bhutis, ग्रीक phu-si-s, physics, आयर० buith, लिथ० buti (प्रकृति), स्लाव० byti.

सं० √पृ, पर् par, पूर्तिः, लाति० ga-faurd-s (सभा, समितिः) उ० जा० far-t (यात्रा), आं० frieght. यात्राव्ययः, परिवहनव्ययः), fare.

सं० √घृ, घृतिः ghṛtis, स्लाव० gre-ti (to warm उष्णीकरणम्)।

सं० पंक्तिः panktis (पञ्चानां समूहः), स्लाव० pensti, उ० जा० fust. आं० fist (मुष्टिः)।

सं दसु, उपक्षये, दस्यतिः dasyati, आइस० tiun-d, लिथ० deszim-ti-s, स्लाव० desenti.

सं० कतिः kati:, आं० quot. (किमर्थकेन 'क' निपातेन सह 'ति' प्रत्यययोगेन 'कति' शब्दो निष्पाद्यते)।

सं० दिश्, दिष्टिः distis, लाति० con·ditio, आं० condition.

सं० मतिः matis, ग्रीक: matis.

सं० इश्, इष्टिः, अवे० इश्तीश (इच्छा)।

सं० √स्ना, स्नातः, स्नातिः snatis, अवे० उपस्नाइतिश्।

६. तृ-तर् ter प्रत्ययः

तृ-तर् ter (तृच्) प्रत्यययुक्ताः संस्कृतस्य मातृपितृभ्रातृदुहितृसदृशाः शब्दास्तु सर्वासु सजातीयभाषासु समानरूपेण प्रयुक्ताः, सर्वविदिताश्च सन्ति। तथैव तृच्-प्रत्ययनिर्मिता अन्येऽपि बहवः संस्कृतशब्दा नैकासु सजातीयभाषासु प्रचलिताः सन्ति। तद्यथा—

सं० √जुष्, जोष्टर् joṣṭar, जोष्टा, *gʷev-s, पु० फा० दउष्तर, फा० दोस्त, ग्रीक geuster-io-n (परीक्षणपात्रम् goblet).

सं० √वह्, वोढा vodhā, *vegh, अवे० वश्तर (भारवाही पशुः), लाति० vec-tor.

सं० √धा, धातर्, अवे० दातर, फा० दाद, ग्रीक the-ter, लाति० con-ditor.

सं० √दा, दातर dātar, अवे० दातर, ग्रीक doter, dotor, लाति० dator स्लाव० date-le, सं० दातास्मि, लाति० daturus-sum.

स० √यज्, यष्टा yaṣṭā, यष्टर्, अवे० यश्तर।

सं० (वि) भक्ता (विभाजयिता-विभज्य प्रदाता), अवे० बख्ता, हि० बख्तावर।

सं० √भू, भवितर् bhavitar, ग्रीक ba-ter, epi-bētōr (आरोही)।

सं० √स, *se, सं० स्त्री, लाति० stator (उत्पादिका begetter) ग्रीक he-tor.

सं० पेष्टर् peṣtar, लाति० pīs-tor, pins-tor, pis-tr-i-x.

सं० √मन्, मन्ता mantā, मन्तर्, लाति० आं० com-mentor, comment.

सं० √तक्ष्, तष्टा [taṣṭā, तष्टर् (foremen, अग्रणी, शिल्पी), लाति० tex-tor.

सं० √अद्, अत्ता, अत्तर्, लाति० ēsor, estri-x, ग्रीक omēstēr (आमभक्षणम्, अपक्वभक्षणम्)।

सं० √या, यातरः yātaras, ग्रीक eina-ter-es भ्रातृणां पत्न्यः, लाति० jani-tr-ī-c-s.

सं० √उष्, उषर् uṣar, ग्रीक० heri, लाति० आं० early, orion.

सं० प्रेता, प्रेतः pretā, अवे० आफ्रेता, फा० उफ्रेत।

सं० √कृ, कर्ता, अवे० करेता, फा० करदा।

सं० √भृ, भर् bhar, भर्ता, लाति० fertur.

सं० √दिव्, देवरः devaras, ग्रीक dāēr, लाति० lēvir, आर्मे० taiger (अत्र 'अर्' प्रत्ययः)।

सं० नाः nās, (नार्), ग्रीक an-ēr, लिस्ब० andr-os (√नृ-अच्)।

सं० √इण् गतौ, पुरइतर, पुरेतर puretar (पूर्वगामी, मार्गदर्शकः), लाति० prateor.

सं० √विद्, वेत्तर् vettar, ग्रीक histor (वेत्ता, ज्ञाता, साक्षी), लाति० visor, आं० history अप्येष एव (ग्रीक्यां पदादौ वकारो हकारे परिणमति), स्लाव० su-vestele (साक्षी, ज्ञाता)।

सं० √बुध्) बोद्धा boddhā, ग्रीक peustēr-io-s प्रच्छकः, प्रष्टा, जिज्ञासुः।

सं० √भृ, भर्ता bhartā, लाति० in-furtus.

सं० √गम्, गन्ता gantā, ग्रीक batēr, लाति० in-ventor.

सं० √पच्, पक्ता paktā, ग्रीक pep-tr-ia, लाति० coc-tor.

सं० √सद्, सत्तार् sattār, सद्-ता, लाति० ad-sessor.

सं० पातर् pātar, पाता (पानकर्ता), ग्रीक po-ter (पात्रम्), लाति० potor, आं० pot, pottery.

सं० ज्ञाता jñātar, लाति० no-tor, आं० notary-pubiic, note, notification, स्लाव० zno-tel-i (ज्ञाता)।

सं० √जन्, जनिता (उत्पादकः) janitā, ग्रीक gene-ter, लाति० geni-tor, आं० generate अपि जन् धातुना निष्पद्यते।

### १०. अन्त (न्त) प्रत्यय

संस्कृतवदन्यास्वपि भाषासु धातुभिः शतृ (अन्, अन्त, न्त) प्रत्यययोगेन शब्दा निष्पाद्यन्ते। यथा हि—

सं० √भृ, भरन्त bharanta, ग्रीक pheron (ont), सं० भारयन्त, ग्रीक-pherion, लाति० ferens-ent, गॉ० bairnds (and), स्लाव० bery-ant.

सं० √दृश्, √*derk$_v$, दर्शयन्त darśayanta, गॉ० ga-tarhjand-s.

सं० √नश्, नाशयन्त nāśayanta, लाति० nocēns<noceyent.

सं० √रुद्, रुदन्त rudanta, लाति० rudens-ent.

सं० √विद्, विदन्त, ग्रीक idōn, गॉ० vitand-s.

सं० √वा, गतिगन्धनयोः : वातः, वान्तः vāntas, ग्रीक aeis, ʻa( f )ent, लाति० ventus (ventilation), गॉ० vinds, आं० wind.

(संस्कृते तः प्रत्यययुक्तो 'वातः' परमन्यत्र अन्तप्रत्यययुक्ताः शब्दाः सन्ति)।

सं० वातः vātas, फा० वाद्।

सं० √अस्, सत् sat, सन्त, ग्रीक (डोरिक) eassa<e(s)-at-ya, ent-es, eont-es, लाति० pra-esēns,-ent, आं० present.

सं० √दा, ददत्, dadat, ददन्त, ग्रीक didont, tithent.

सं० √जृ, जरन्त jaranta, ग्रीक geron,-ont.

सं० √श्वि (टुओश्वि गतिवृद्ध्योः) श्वयति śvayati, शश्वन्त< *k$_v$ek$_v$went, (भारोपीयः *k$_v$ संस्कृते शकारे ग्रीक्याञ्च पकारे परिणतः)। ग्रीक pant (pass, सर्वे, प्रत्येकः), ha-pant, kueo (उपस्थितोऽस्मि)।

आंग्ल्याः सर्वार्थिको निपातः pan अप्येष एव।

सं० √बृह्, बृहन्त bṛhanta, बृहन्त, बृहति, आयर० brigit (महनीया नारी)।

सं० √अद्, दन्तः<अदन्तः, ग्रीक odont, odon (अत्र आद्यः अकारः

सुरक्षितः परं संस्कृतादिषु अः घृष्टः), लाति० dent, dēns, आयर० det, गॉ० tunth-u-s, उ०जा० zan, लिथ्वा० dantis, फा० दन्द्, आं० tooth, teeth. जा० zahn.

सं० √वह्, *vegh, वहन्त vahanta, अवे० वजन्त, लाति० vehens, गॉ० ga-vigands, लिथ० vezans, स्लाव० vezy.

सं० वाहयन्त vāhayanta, ग्रीक okheon, गॉ० vagjand.

सं० √पृच्छ, <*porsk$^{w}$e, पृच्छन्त pṛcchanta, अवे०पेरेसन्त, लाति० poscens<por (c)-scent.

सं० √विन्द्, विन्दन्त vindanta, आं० finding.

सं० √रिच् <*leyk$^{w}$, रिचन्त ricanta, ग्रीक lepon (ont), आं० leaving, आं० leak अप्येष एव ।

सं० √अज् गतौ, अजन्त ajanta (गतिमान्), लाति० agens, ग्रीक agōn, आं० agent (acting, opposite to 'patient' क्रियाशील) ।

सं० (सम्) मानयन्त (sam) mānayanta, लाति० monens<money-ent.

सं० √स्पश्, पश्य, स्पशन्त, पश्यन्त, spaśanta, paśyanta, लाति० con-spcius.

सं० लुम्पन्त lumpanta (breaking, भेदनम्), लाति० rumpēns.

सं० सर्पन्त sarpanta, लाति० serpens, serpent.

सं० √ जुष्, जुषन्त juṣanta, जोषन्त, गॉ० aius-and-s, उ० जा० ehios-a-nt-e, आं० choosen, kiss.

सं० √वाज् *veg$^{w}$h, वाजयन्त vajayanta (प्रेरयन्त urging, urgent), गॉ० usvakja-nd-s, उ० जा० wecche-nt-i, आं० wakening, awakening.

सं० प्र-वर्तयन्त pra-vartayanta, गॉ० fra-vardja-nd-s, उ० जा० far-wertten-ti. आं० for-ward<सं० प्र-वर्त ।

सं० √विद्, विदन्त vidanta, ग्रीक id-on-t (दर्शनम्), गॉ० vit-a-nds उ० जा० wizz-a-nt-i. (दृ० १९३ तमे पृष्ठे)।

सं० √धृष् धृषन्त, धर्ष्, धर्षन्त dhṛṣanta, dharṣanta, गॉ० ga-dours-a-nd-s, आं० dare.

सं० पृ, प्रीणाति prṇāti, प्रीणन्त, गॉ० frcjonds, उ० जा० friunt, आं० friend. जा० freund.

सं० √मृज्, मृजन्त mrjanta, लिथु० melzans, ग्रीक० amelyon, स्लाव० mluzy. आं० milking, amalgam (पारदेन सह मिश्रितो धातुः)।

**११. वान्, वत्, वन्त, वस्, मत् मान, मत् प्रत्ययाः**

एभिः प्रत्ययैर्युक्ता अपि शब्दा नाना सजातीयभाषासु निर्मीयन्ते। तद्यथा—

सं० अपवन्त apavanta, ग्रीक opo-eis (रसप्लावित)।

सं० गोमान् gomān, अवे० गओमन्वन्त (मांसयुक्तः) गओम—मांसः, फा० गोश्त (गवा सम्बद्धः)।

सं० √रिच्, रिक् <*leykʷ, रिरिक्वस् (वै०) ririkvas, ग्रीक le-loip-os, लिथु० lēk-ens, आं० leave, leap.

सं० √भु, √भुग्, बुभुजिवस्,-वान्, bubhujivas, ग्रीक pe-phug-os, लिथ० pug-es.

सं० भू, भव् bhav, *bhev, सं० बभूवस् babhūvas, ग्रीक pephu-g os, लिथु० bu-vems, स्लाव० vy-vru.

सं० √अद्, आदिवस्, (आदुः) ādivas, ग्रीक ed-ēd-ōs, लिथु० ed-ens, स्लाव० jad-u.

सं० √दा, दद्वः dadvas, ददिवान्, लिथ० davens. स्लाव० da-vu.

सं० √स्था *sta, तस्थिवस्-वान्, (तस्थुषः), ग्रीक he-sta-ōs, स्लाव० sta-vu.

सं० चिकित्वस् cikitvas-वान्, अवे० चिकिथ्वः।

सं० √गम्, जगन्वस् jaganvas, जग्मिवान्, जग्मुः, अवे० जग्मुश्, ग्रीक be-ba-os.

सं० पप्तिवस्,-वान् paptivas,-vān, ग्रीक peptos.

सं० सेदिवस्,-वान् sedivas, सेदुः, ससाद, अवे० ह्ज्द, लिथ० sed-ems.

सं० √ज्ञा, जज्ञिवान् jajñivān, स्लाव० zna-vu, zna-ti.

सं० √विद् vid विद्वस्, ग्रीक oid-e, गॉ० veit-voth-s (साक्षी)।

सं० √स्फृ, √स्फुर् sphir, गॉ० spar-va, आं० sparrow.

सं० √हु, होमन् homan, ग्रीक kheu-ma (gush गश)।

सं० √स्रु (स्रवति) स्रुमन् sruman, ग्रीक rheu-ma, आँ० rheumatic-pain.

सं० √भू, भूमन् bhūman, (सत्त्वं, महत्त्वं), ग्रीक phu-ma (उत्पत्तिः), लिथु० bume-ne (उपस्थितिः)।

सं० √भृ, भर्मन् bharman, ग्रीक pher-ma (गर्भफलम्), स्लाव० bre-men. आं० firm (solid thing तथा च form आकृतिः इत्युभावपि सं० भर्म एव)।

सं० √तॄ, तर्मन् tarman (यूपाग्रम्), ग्रीक ter-ma (लक्ष्यस्थानम्) ter-mo-n (सीमा), लाति० ter-men, ter-mo, आं terminate,-tion.

सं० √वृत्, वर्त्मन् vartman, स्लाव० vre-men (समयः)<vert-me.

सं० √पॄ, पर्वन्, पर्वतः parvatas, ग्रीक perrati, peirrata.

सं० अपर्वन् aparvan, ग्रीक aperōn<parer, आं० apron (अनिर्बद्धं-ग्रन्थिहीनमाच्छादनम्, वस्त्रम् an article of dress worn in front of the body. The covering for the legs.)

सं० √ग्र<ग्रस्, ग्रावन् grāvan, आयर० broo, bro, सम्ब. broon bron (ग्रावन् mile-stone)।

सं० √ऋ गतौ, अर्वन् arvan (धावकः, अश्वः), अवे० अउरव् (सत्वरम्) ए० सैक० aru (तत्परः)।

सं० √धन्व्, धन्वन् dhanvan, धनुः dhanus (उत्थितः सिकतामय-प्रदेशः), आं० dune (सिकितोद्गतः प्रदेशः)।

सं० √स्था, स्थावन् (रः) sthāvan (ras), ग्रीक steiar, ste-ar, आं० stair.

सं० √अशन् aśan, अशनिः (प्रक्षिप्तः, पाषाणः), ग्रीक akon, फा० संग (अत्र अकारो लुप्तो गकारस्य चागमो जातः)।

सं० ऊधन् ūdhan, ऊधस् (प्र०ए०व०), ग्रीक outh-a-to, auth-ar (कर्ता ए०व०), आं० udder.

सं० यकन्, yakan, लाति० jec-in, jec-ur, ग्रीक ep-a-to, hep-ar (प्र०ए०व०), फा० जिगर।

सं०अक्षन् akṣan, आर्मे० ak-n, गॉ० aug-o, स्लाव० ok-n-o, (गवाक्षः,) आं० eye.

सं० √मह्, महन् mahan, ग्रीक meg-a, लाति० magnum.

सं० √धा, दधन् dadhan, दधि dadhi, प्रश० dadan (दुग्धम्)।

सं० अहन् ahan (दिवसः), अवे० अयन्, अयरे, फा० अय्याम् ?

**वन्-मन्-प्रत्ययौ (पूर्वागतौ)**

सं० तक्वन् takvan, तकु (shooting on, to drive with force, to propell धक्का देना), फा० तका-दादन।

सं० आयुन्, तृतीया-आयुना, ग्रीक ai (f) ōn (नित्यता, सदा)<ay-v-en, लाति० ae-vo-m, गॉ० ai-v-s.

सं० पीवन् pīvan, पीवरः, ग्रीक pi (f) ōn, pīe-ro-s.

सं० पीवस् pīvas, ग्रीक pio-tes, आं० fat.

सं० √मन्, मन्मन् manman, ग्रीक thra-su-memnō, aga-memnô> men-mon (मस्तिष्कम्, आत्मा, बुद्धिः)।

सं० √वस्, वस्मन् (आच्छादनं, वस्त्रम्), ग्रीक ei-ma. eu-eimōn (सुवेशः)।

सं० अद्मन् adman, ग्रीक ed-men-ai (भोजनम्)।

सं० √धा, धामन् dhāman, ग्रीक ana-thema, (निर्माणं, स्थापनं विधानम्), eu-thēmōn (सुव्यवस्थापनम्), themon (राशिः संघातः) thema (निर्धारितः, सुस्थापित,-प्रतिष्ठापितः), आं० theme.

सं० √दा, दामन् dāman (दानं, उपहारः), ग्रीक do-ma.

सं० √स्था, स्थामन् sthāman, ग्रीक epi-stema (उपरि स्थापितः), लाति० sta-men, गॉ० sto-ma, (तत्त्वं, विधायकः तत्त्वः)।

सं० अज्मन् (मार्गः train), लाति० āgmen.

सं० सीमन् sīman (केशवेशः), सीमा, ए० सै० si-mo (रश्मिः), ग्रीक hi-man-t (रश्मि), फा० सीम (ललाटम्), ग्रीक ahimasia (भित्तिः, hedge)।

सं० √ज्ञा jñā, नामन् nāman, नाम, ग्रीक ono-ma, लाति० no-men, आर्मे० anun, आयर० ain-m, गॉ० namo, स्लाव० i-men, फा० नाम्, आं० name, nominate.

सं० √जन्, जन्मन् janman, जनिमन्, लाति० geni-men.

सं० √इ, एमन् eman (course), ग्रीक oi-ma (assault)।

सं० √ऋ अर्यमन् aryaman, आयर० ai-rem.

**१२. अस्, स् (असुन्) प्रत्ययः**

संस्कृत इवान्यासु भाषास्वपि स्, अस् प्रत्यययोगेन शब्दा निर्मीयन्ते। यथा हि—

सं० —तन्, ग्रीक tons, लाति० tenus नपु० tenor, (संस्कृते तनु तनू शब्दौ उ ऊ प्रत्ययान्तौ स्तः सहैव सकारान्त तनुस् शब्दोऽपि विद्यते इत्यवधेयम्)।

सं० √शॄ, शिरस् śiras, शीर्षम् >*$k_v$er-os, ग्रीक korsē, लाति० cerebru-m<ceres-ro-m, अं० head (भारोपीयः $k_v$er-os शब्दस्य क्यकारः

संस्कृते शकारे आंग्ल्याञ्च खकारो भूत्वा हकारे परिणमतीत्यवधेयम् सर्वत्र सदैव च)।

सं० अंसस् amsas, अंसम् (स्कन्धः), ग्रीक omo-s<om-s-o-s, गॉ० am-s-a, लाति० un-er-u-s.

सं० वत्सस् vatsas (वर्षः, गोवत्सः), ग्रीक feto-s वेतोस् (वर्षः)।

सं० √रिप्, रेपः repas (spot, stain), ग्रीक lepos (fat मेदः)।

सं० महस् mahas <*megyos>लाति० max-imu-s.

१३. उ प्रत्ययः

सं० √गॄ, गुरुः gurus, अवे० अग्रु (अविवाहितः), ग्रीक barus, लाति० garavis, गॉ० kawru-s, आं० coarse (मोटा, खुरदरा)।

सं० √पॄ, पुरुः purus, अवे० पोउरु, पु० फा० परु, ग्रीक लाति० आं० poly (उपपदम्), फा० फरावां (प्रभूत), गॉ० fil-u.

सं० √प्रथ्, पृथु, प्रथु prathu (विस्तृतः विस्तीर्णः), ग्रीक plat-u-s, आं० plateau<pleothe, आं० plate, flat अपि प्रथतेरेव।

सं० √स्वद्, स्वादुः svādus, ग्रीक hev-u-s, लाति० suavi-s<suadvis, गॉ० sud-s, उ० जा० suoze आं० sweet, जा० sush सुज्।

सं० √हन् <*g$^{w}$hen, हनुः hanus, ग्रीक gen-u-s, लाति० genu-in-u, आयर० ginu मुखम्, गॉ० kinnu-s, आर्मे० cn-aut (कपोलः, हन्वस्थि), ऐ० सैक० cin, आं० chin.

सं० √कित्, केतुः ketus (धूमकेतुः, चित्रम्, आकृतिः), गॉ० haid-u-s (प्रकारः, आकृतिः), जा० heit, आं० hood जार्मण्यामांग्ल्याञ्चैषो भाववाचकस्य 'ता' प्रत्ययस्य स्थाने प्रयुज्यते। यथा—childhood.

सं० √*बाघ्, बाहुः bāhus<*pāgh-u-s>ग्रीक pēkhu-s, आर्मे० bazu-k, अवे०, फा० बाज़ू।

सं० मधु madhu, ग्रीक methu, स्लाव० medu, आं० mead.

सं० √जन्, जानुः jānus<*g$_w$onus, gnu, अवे० जन्व (ब० व०), आर्मे० cun-r, ग्रीक gōnu, लाति० gēnu, गॉ० kniu, आं० knee, फा० ज़ानू।

सं० 'प्रज्ञुः', आं० knee इत्युभयत्र धातोर्दुर्बलं रूपं विद्यते।

सं० √मनु, मनुः लाति० manus (स्त्री)।

सं० √वृ, उरुः urus (विस्तृतः), अवे० वोउरुस्, ग्रीक euru-s.

सं० √स्यन्द्, सिन्धुः sindhus, >अवे० पु० फा० हिन्दुश् (भारतम्) >लाति० जा० Indis, आं० India.

सं० √दृ, दर्, द्रुः drus, दारुः, अवे० द्रु, दाउरु, ग्रीक doru, usdru-es, (देवदारुः, चीड़), गॉ० triu, आं० tree, स्लाव० drevo.

सं० √भ्रस्ज्, भृगुः bhṛgus, आर्मे० barju, फा० burj बुर्ज्।

सं० √मृद्, मृदुः mṛdus, ग्रीक bradu-s (मन्द)।

सं० √बहि वृद्धौ, बहु bahu, *bhaghu>ग्रीक pakhu-s, अवे० वंनजह् (शक्तिःसामर्थ्यम्), हि० बहुत (अत्र स्वार्थिकः 'त' प्रत्ययः)।

सं० √श्वि (परशुः parasuś), ग्रीक pelek-u-s.

सं० √पा, पायुः pāyus, (संरक्षकः), ग्रीक poi-men पशुपालकः, लिथ० pe-mu.

सं० √इन्ध् indh[1] >लाति० indūs (प्रकाशमानः) indūs-noctēs (प्रकाशिता रात्रिः)।

सं० √अंघ्, अंघुः anghus, गॉ० aggvu-s, उ० जा० eng-i, आइस० ong-r, आं० anguish.

सं० √कृत्, कर्त्, kart कटुः<*kartu-s, लिथु० kartu-s, गॉ० hard-u-s, जा० hart, आं० hard.

---

१. 'इन्दु' शब्दोऽपि इन्ध् धातोरेव निष्पन्नोऽस्तीति प्रतीयते, यद्यपि संस्कृत-कोषेष्वयं शब्द उन्दी क्लेदने इत्यस्माद् व्युत्पादितः।

सं० शरुः, त्सरुः tsarus (खड्गः, प्रक्षेपास्त्रम्), गॉ० hair-us (असिः)।

सं० √स्कन्द्, स्कन्धः skandhas>कन्धः, हि० कन्धा, गॉ० handus, उ० जा० hant, आं०, जा० hand, संस्कृते 'अ' प्रत्ययो गॉथिक्याञ्च उः)।

(सं० स्कन्धः>आं० hand तथैवास्ति यथा सं० दोष (बाहुः), फा० दोश्-स्कन्धः)।

सं० √दह् dah, स्लाव०, लिथ्० dyg-u-s (ज्वलनशील), फा० दाग्।

## १४. नु प्रत्ययः

सं० √सू, सूनुः (पुत्रः सूर्यश्च), अवे० हूनुस, आं० son पुत्रः sun सूर्यः, लिथु० स्लाव० synu.

सं० √भा, भानुः bhānus, अवे० बानु-श् (प्रकाशः प्रभा), फा० बानु, बानवी (स्त्री) यथा—हुस्नबानू।

सं० √धेट् पाने, धेनुः dhēnus, अवे० दएनुस (स्त्रीपशुः)।

सं० √धृ, धर् dhar, ग्राक thro-no-s, आं० throne (an elevated seat).

सं० √मा, मनुः manus, लाति manus (स्त्री)।

सं० √चि ci, स्लाव० ci-nu चिनु (rank, order).

सं० √दा dā, स्लाव० do-snee (दानशीलः वै० दास्नुः)।

## १५. रु, लु प्रत्ययौ

सं० √अश्, अश्रु aśru, अवे० अस्रु, अस्रम्, अश्रम्, लाति० dacruma गॉ० dakru-ma लातिन्यां गॉथिक्याञ्च दकारागमो जातः)। फा० अश्क अत्र 'क' त्ययः।

## १६. तु, तुम् तुमुन् प्रत्ययाः

अपूर्णक्रियावाचकः gerund, supine.

एषः तुम् प्रत्यय'स्तु' इत्यस्य द्वितीयैकवचनस्यैव रूपम्। यथा संस्कृते 'तुमुन्' प्रत्यययोगेन तु-प्रत्यययोगेन च संज्ञाशब्दा अपूर्णक्रिया वा निर्मीयन्ते तथैवान्यासु सजातीयासु भाषास्वपि 'तु' प्रत्यययुक्तानि पदजातानि निर्मीयन्ते। तद्यथा—

सं० जीवातुः jīvātus (जीवनम्, जीवनौषधम्), अवे० ज्यातुश् (जीवनम्), ग्रीक boe-tu-s (क्रन्दनम्)।

सं० अप स् (वै० कर्म) apas, लाति० apparātu-s, आं० apparatus.

सं० वहतुः (मार्गः, वरयात्रा)।

सं० क्रतुः kratus (शक्तिः, बुद्धिः, यज्ञः), फा० खिरद् (बुद्धिः)।

सं० √भू, ग्रीक phi-tu-s (उत्पादकः), लाति० futu-o, आं० future अप्यनेनैव, लिथ० butū, स्लाव० by-tu, आयर० bith जगत्।

सं० √लश्, अभि-लाषः abhi-laṣas, गॉ० lustus, आं० जा० lust.

सं० √जुष् <*gyuk$_y$, लाति० gūs-tu-s, गॉ० kus-tu-s (trial, proof). आं० just, justice, justification सदृशाः शब्दा अप्यनेनैव सम्बद्धाः।

सं० ऋतुः ṛtus, अवे० रतुश् (निश्चितसमयः)।

सं० √श्रि, श्रयति śrayati, श्रयितुम्, ग्रीक klei-tu-s.

सं० √गॄ, गिरति, निगिरति, लिथु० ger-tu (पानम्), ग्रीक bro-tu-s (भोजनम्), आं० bread अप्यनेनैव सम्बद्धः प्रतीयते।

सं० अद्, अत्तुम् attum, लाति० esu-s, लिथु० estu, स्लाव० jastu (भोजनम्)।

सं० √इण्गतौ, स्वैतु svaitu (स्वइतुः = स्वस्यमार्गः व्यवस्था वा), लाति० adi-tu-s, लिथ० ei-teu, आं० edit, edition अप्यस्यैव परिवर्धितं रूपम्।

सं० स्थातुः (वै०) sthātus, आं० state, status, स्लाव० stu-tu (स्वयंस्थापनम्)।

सं० √पा, पितुः pitus (वै० पानम्, भोजनम्), अवे० पितु (पीतुदारु pine tree), ग्रीक pi-tu-s (pine), लाति० pītu-ita, आयर० ith (अन्नम्), लिथु० pe-tu-s, स्लाव० pitwania (lunch, dinner), आं० food<पितुः।

सं० √विन्द्, √विद्, वेत्तुम् vettum, लाति० visu-s, आयर० fiss, आं० wit.

सं० √गम्, गन्तुः gantus, गातुः (वै० मार्ग, स्थानम्), अवे० गातु, पु० फा० गाथु, गमनम्, कक्षः, सिंहासनम्, फा० गाह्-स्थानम्, लाति० ad-venture, ven-tu-m, ven-tū. ला० आं० adventure.

सं० √शंस् <$^*k_v$ens शंसितु, लाति० cēn.su-s<cens-tu-s.

सं० √पच् <$^*$pek$^w$e, सं० पक्तुम्, paktum, लाति० coc-tu-m, स्लाव० peshti, आं० pestry, cake.

सं० √धा, धातुः, धातुम् dhatum, लाति० conditu-s, con-di-tu-m. आं० condition, conduct.

सं० (आ) √अप्, आप्तु, लाति० ad-eptu-s, आं० adapt.

सं० √चर्, चर्तु, चरितुम्, चरितु caritu, अवे० चरेतुस् (अश्वमार्गः अश्वयुतिः)।

सं० √दो, द्यातु, दातुः dātus (भागः, कार्यम्), अवे० वीदातुस् (पञ्चभूतानां, पृथग्भवनं, मृत्युः), ग्रीक dai-tu-s (भोजनम्, वस्तुतः विभागः, अंशः), आं० diet.

सं० √षिञ्, बन्धने सेतुः, अवे० हएंतुश, लाति० si-tu (बन्धनम्)।

सं० √या, यातुः yātus, (वै०) यथा यातुधानः अवे० यातुः, यातुश्, फा० हि० जादू।

**१७. म प्रत्ययः**

संस्कृतवदन्यासु सजातीयासु भाषास्वपि धातुना सह म प्रत्यययोगेन शब्दा निर्मीयन्ते। यथा—

सं० √घृ, घर्मः gharmas, ग्रीक ther-mos, लाति० for-mus.

सं० √धू, धूमः dhūmas, ग्रीक० thymo-s (आत्मा, भावना), लाति० fūmus, आं० fume, perfume, स्लाव० dymu द्रूम्, उ० जा० tu-mon (स्वयं परिवर्तते, परिक्रमते, toum (वाष्पम्)।

सं० √तु*tev, √तुमः tuma, अवे० tuma (सशक्त, दृढ़ः), लाति० tumeo, स्लाव० tuma स्त्री० (बहुसंख्या), उ० जा० dumo, आं० thumb. जा० doumen.

## १७. र, ल, अर, रिर् (अर, इर, उर) प्रत्ययाश्च

सं० √रुध्, रुधिरः rudhiras, लाति० आं० rubra, rubro, ruddy (healthely red)।

सं० √छिद्-छिद्रम्, (परशुः, असिः), ग्रीक skid-aro-s (सूक्ष्म, भंगुर), उ० जा० scet-ar (सूक्ष्म, सदोषः), लिथु० sked-ra.

सं० √स्फायी, स्फिरः sphiras, लाति० pro-sper, spira, आं० spare, pro-sperity, स्लाव० spo-ru (धनी, पुष्ट)। आंग्ल्यां pro-sper, pro-sperous, Prosperity. इत्यादयः शब्दा अप्यनेनैव सम्बद्धाः।

सं० √इष्, इषिरः iṣiras (वै०) (सद्यः, सप्राणः, सत्वरः fresh), ग्रीक hiro-s, iro-s<īs-ro, आं० eros, erros (स्वस्थः सशक्तः)।

सं० √उष्, उस्रः, उस्रिया (वेद उषः सम्बन्धी, प्रकाशः), ग्रीक agkhayros एंखीरोस (उषः सन्निधौ), aur-io-n<aus-ro, लिथु० ausz-ra (पौ फटना, प्रभा-फटना), आं० orion.

सं० √उन्द्, उद्र udra (जल) यथा समुद्रः, अनुद्र, उदन्, ग्रीक hud-aro-s. (जलीयः), an-udro-s. संस्कृतस्याय 'मुद्रः' ग्रीक्याः hud-ro-s, आं० जा० otter, उ० जा० uttar, लिथु० उद्र, स्लाव० उद्र, फा० उद्र, हि० उदबिलाव इति नामक जलजन्तुवाचकोऽस्ति। ग्रीस्यां त्वस्यार्थो राजिलः (जलसर्पोऽस्ति)। स्लाव० वोद, वोदा (जलम्), वोद्का (मदिरा)<सं० उदकः।

सं० √पत्, पत्रम् patram, अवे० पतर्, अवे० हुपतरेत् (सुपक्षः), आइस० fiodr, जा० fedar, आं० feather.

सं० —या, यामः yāmas ग्रीक hō-ro-s (वर्षम्), ho-ra ऋतुः होरा च गॉ० jēr, उ० जा० jar, स्लाव० jaru वसन्तः, अवे० यारे, आं० year, एते

सर्वे शब्दाः संस्कृतस्य या धातुना सह र प्रत्यय योगेन निष्पन्ना। क्वचिद् होरा, क्वचिद् वसन्तर्तु क्वचिदृतुः क्वचिच्च संवत्सर इत्येवं क्रमेण सर्वत्र कालमेवार्थमभिदधते। एते सर्वे शब्दाः संस्कृतेषु र प्रत्ययस्थाने 'म' प्रत्यययोगेन कालखण्डविशेषवाचकः यामः (घण्टाचतुष्टयी) इत्येक एव शब्दो निष्पद्यते।

सं० √घस्, क्षीरः kṣīras, गॉ० skeirs (शुद्ध, स्वच्छ), फा० शीर् (दुग्धम्, मधुर) अत्रापि घस् धातोदुर्बलं रूपं विद्यते।

सं० सायम् sāyam, लाति० sē:ru-s.

सं० रिप्रम् ripram (वै०, अपवित्रता, दाग-धब्बा), ग्रीक liparos, (पीवरः), आं० leprosy (कुष्ठः, कुष्ठरोगः)।

सं० बधिरः badhiras, आयर० bodar.

सं० √दंश् <*denk$_{v}$, damś, दंष्ट्रा, दंष्ट्र, उ० जा० zangar, zang <tangra<दंश्र<denk$_{v}$ra, आं० tongue जिह्वा, tongs(संदशिनी सण्डासी) अपि दंश धातोरेव, फा० जम्बूर (संदंशिनी)।

सं० √धेट्-पाने, धयः dhayas, धारुः, ग्रीक the-lus (suckling), thele स्तनः, लाति० felāre, आयर० de-l, उ० जा० tel, आं० teat (अत्र त प्रत्ययः)।

सं० चिरम् ciram, गॉ० hvei-la, आं० while.

सं० √अञ्ज्, अङ्क aṅk, अङ्कुरः, ग्रीक ogkulos, अङ्कुलोस् (swollen).

सं० √मुष्, मुश्कः muśkas, लाति० mus-culus क्षुद्रः मूषकः, अण्डकोषावपि क्षुद्रमूषकाकारौ भवतः अतस्तत्र लाक्षणिकः प्रयोगः। यतो हि मुश्कौ पुरुषचिह्नौ स्त अतएव आंग्ल्यां पुलिङ्ग सूचको masculine इति शब्दो निष्पद्यते।

संस्कृते रलयोर्न तथा विभेदः यथा यूरोपीयासु वाक्षु विद्यते। अवेस्तायां प्रत्न पारस्यां तु लकारस्य स्थानं रकारेणैव गृहीतम्।

सं० √जीव्-प्राणधारणे, जीरः jīras, (वेद-सजीवः, सक्रियः, सत्वरः), अवे० पौरुजीर (परुजीरः अति सक्रिय , लाति० vi-reo (स्वस्थो भव)।

सं० √कित्, चित्र citra (प्रकाशमान, आश्चर्यकरः, ख्यातः), अवे० चिथ्र (आश्चर्यकरः, प्रकाशितः), उ० जा० heit-r (स्वच्छ, प्रभावान्) फा० चेहरा।

सं० √वज्, वज्रम् vajram, अवे० वज्र (गदा), पु० फा० वज्रक (महान्, वृद्धः. सशक्तः)>फा० गुर्ज, बुज़ुर्ग।

सं० वाजः vājas (वै०-शक्तिः), अवे० वाज़ (शक्तिः), फा० बाज़ी (क्रीड़ा, शक्ति-प्रदर्शनम् ) अप्यनेनैव सम्बद्धाः।

सं० √अम्, अम्ल, amla, अम्लः, आइस० aipr (तीक्ष्ण), उ० जा० amejaro (खट्टा, अम्ल), लाति० am-āru-s.

सं० शिथिल śithila, शिथिर, ग्रीक kath-aro-s (उद्घाटितः, विकसितः, शुद्धः, स्वतन्त्रः), आं० catherine अप्येतस्मादेव।

सं० चतुर्-अस्र catur-asra, ग्रीक ak-ro-m, शिखरं, सूच्यग्रम्।

सं० अभ्रम् abhram, ग्रीक aph-ro-s (फेनः), लाति० imber, omb-ro-s (वर्षा), फा० अब्र्। सं० अ, लाति० इ a>i.

नानाविधा व्युत्पत्तयोऽस्य शब्दस्य प्रदर्शिता नैकेषु संस्कृतकोषेषु। परम्—अप>अब>अभ्-रः अथवा अप्-भ्रः इति व्युत्पत्तिद्वयं समीचीनं प्रतिभाति।

सं० अम्बु ambu, ग्रीक amb-ro-s.

सं० रिप्र (वै०) (अपवित्रता, दाग, धब्बा), ग्रीक lip-aro-s पीवरः आं० leprosy अत्येतस्मादेव।

सं० सायः sāyas, सायम् sāyam, लाति० sē-ru-s.

सं० बधिरः badhiras, आयरिश bodar, हिं० बहरा।

सं० घोरः (भयंकर) ghoras, गॉ० gaur-s (दुखितः, कष्टप्रदः)।

१८, त (क्त) प्रत्ययः

यथा संस्कृते त प्रत्यययोगेन धातोः कृद्रूपाणि सम्पद्यन्ते तथैवान्यासु सजातीय-भाषास्वपि क्त प्रत्यययुक्ताः शब्दा निर्मीयन्ते। यथा हि—

सं० √वम्, वमित vamit, ग्रीक eme-to-s, लाति० vomi-tn-s, आं० vomit.

सं० √दृश्, दर्श, दर्शित daiśita *drok̑eyo, derk̑, गॉ० ga-tarhi-th-s.

सं० √जीव्, जीवित jīvita, *gʷiv, स्लाव० zivo-tu जीवनम्। (अयं सं० जीवातुरेव स्यात्)।

सं० √मृ, मर्तः martas, ग्रीक bro-to-s, आं० mortal, फा० मर्द।

सं० √श्रु, श्रुतः śrutas<*k̑lu-to, अवे० स्रूत्, ग्रीक kluto-s, लाति० in-clu-tu-s, आयर० cloth, clot (यशः), आं० include, उ० जा० hlūt> आं० ioud, लिथु० sru-ta (द्रवित filthy √स्रु).

सं० √युज्, युक्तः yuktas, ग्रीक gouk-to-s, लाति० juinc-tu-s √युञ्ज् इत्यस्य रूपमिदम्। आं० junction. पु० उ० जा० gi-joht, आं० yoked.

सं० √क्षि, क्षितः kṣitas, ग्रीक phthi-to-s (लुप्तः, मृतः)।

सं० √बुध्, बुद्धः, buddhas, ग्रीक pista-s (सत्यं, विश्वसनीयम्), eu-peisto-s (सुबोधव्यः), लाति० fisu-s.

सं० √दृ, दृतः dṛtas, अवे० der-ta, ग्रीक dra-to-s चर्म, फा० दर्द्।

सं० √तनु विस्तारे, ततः tatas, ग्रीक ta-to-s (ductile), लाति० tel-tu-s.

सं० √सह्, साढः sāḍhas, ग्रीक an-ekto-s (सह्यः tolerable).

सं० √यस्, प्रयस्तः prayastas (ख़मीर उठा हुआ), ग्रीक ges-to-s, आं० yeast.

सं० √त्यज्, त्यक्तः tyaktas, ग्रीक seb-to-s (पवित्र)।

सं० √ग्लै, ग्लानः glānas (त स्थाने न), ग्रीक ble-to-s (हतः, प्रक्षिप्तः)।

सं० √प्लु, प्लुतः plutas, ग्रीक plo-to-s (तरणम् navigation नाव्यम्), गॉ० flo-du-s, आं० flood, float.

सं० √दम्, दमितः damitas, ग्रीक a-dama-tos, dme-to-s, आं० tamed, dame.

सं० √भृ, भृतः bhṛtas, ग्रीक pher-to-s (भर्तुं योग्यः) phortos (भारः), फा० बुर्द, आयर० brith, brethe, आं० birth, berth इत्युभावपि भरतेरेव।

सं० √षण्, सनोमि sanomi, ग्रीक a-nu-o > an-enuto-s (अपूरणीय)।

सं० √पु, पुनामि punāmi पूत, ग्रीक pi-nu-to-s (बुद्धिमान् ग्रीक्यां 'न' विकरणयुक्तं रूपम्)।

सं० अस्तम् astam, (वै० गृहम्) ग्रीक nos-to-s (return-home गृहं प्रत्यागमनम्), अवे० aste-m (गृहम्), फा० अस्ताना (स्थानम्, गृहम्)।

सं० √पा, पीतम् pitam, ग्रीक po-to-n (पानम्)।

सं० √इण् गतौ, इतः itas, लाति० i-tu-m, i-tāra.

सं० √ऋतः, इर्णः irṇas, ग्रीक ne (f) orto-s (नवोद्गतः)।

सं० √शो <*$k_v$eo शितः (whetted, sharpened, excited, put in motion), लाति० ex-cutu-s, cutus, आं० execute, whet.

सं० √रिच्, रिक्तः riktas, लाति० re-lictu-s, आं० reluctant, ग्रीक a-dia-leipto-s (uninterrupted).

सं० √अद्, अत्तः attas, लाति० ēsu-s, उ० जा० ass (पशुभोजनम्), फा० आश् (भोजनम्), यथा 'आश्-पज्' (रसोइया)।

सं √अञ्ज्, अक्तः aktas, (अञ्जनयुक्त), लाति० ūnctu-s, anointed-

सं० √शा, शातः śātas, फा० शाद (प्रसन्न, सानन्दः), लाति० quie-tu-s.

सं० √निज् (णिजिर् शौचे), निक्त nikta, ग्रीक a-nipto-s (अनिक्तः, अशुद्धः), लाति० necht, आं० nectar (शुद्धम्, अमृतम्)।

सं० √दिश्<*dek$_{v}$, दिष्टः diṣtas, ग्रीक deik-to-s, आं० dicta-tion,-tor, आं० ditto<(उद्) दिष्टः।

**इडागमः**

संस्कृते धातूनां तिङ्-रूपेषु कृद्रूपेषु चानेकत्र प्रकृतिप्रत्यययोर्मध्ये इडागमो जायते। आंग्लजार्मण्याद्यास्वाधुनिकासु ट्यूटानिक्यासु भाषासु धातूनां तिङ्रूपाणि तु विलुप्तानि परं कृत्प्रत्ययैर्युक्तानि धातुरूपाणि तत्राद्यापि सुप्रयुक्तानि विद्यन्ते। यथा च संस्कृते कैश्चिद्धातुभिस्सह क्तप्रत्ययेन पूर्वमिडागमो जायते, कैश्चिद्धातु-भिस्सहेडागमो न जायते (इडागमयुक्ता धातवः 'सेट्-धातवः' इडागमविहीनाश्चा 'निट्-धातवो' व्यपदिश्यन्ते) तथैव आंग्लजार्मण्याद्यास्वपि भाषासु धातूनां त (क्त) प्रत्यययुक्तेषु शब्देषु प्रकृतिप्रत्यययोर्मध्ये क्वचिदिकारस्यागमो जायते क्वचित्तु नैव।

अपि चांग्ल्यां प्रभूतानि क्त-प्रत्यययुक्तानि धातुरूपाण्येव प्रकृतित्वने (मूलधातुरूपेणेति यावत्) प्रयुज्यन्ते। एतादृशैः पूर्वमेव क्त-प्रत्यययुक्तैर्धातुभिस्सह सामान्यभूतद्योतनायाथवा विशेषणादीनां निर्माणाय तत्र पुनः त>d, ed, t प्रत्ययो नियोज्यते। यथा हि—

**अनिट्-रूपम्**

सं० √स्पश् (वै०)<*spek$_{v}$ स्पेक्य-त=स्पष्ट spaṣta (अनिड्रूपम्)। आं० spect स्पैक्ट यथा respect[1], inspect, spectacles इत्यादयः।

---

१. पश्चात् परावृत्य दर्शनम् (पीछे मुड़कर देखना) वस्तुतोऽयमेवास्य respect शब्दस्यार्थः। अयमर्थश्च with respect to your letter इत्यादि वाक्यांशेषु स्पष्टतया प्रतिभाति। respect शब्दस्य सम्मानार्थस्तु द्वैतेयिकः गौणश्च।

एवं पूर्वमेव 'त'-प्रत्ययः युक्तं spect इति कृत्प्रत्ययं योजयित्वा spetced इति भूतकालद्योतकं कृद्रूपं विशेषणं वा निर्मीयते। स्पष्टमेव सं० स्पष्ट आं० spect इति चानिड्-रूपमेव।

एवमेव सं० —स्ना, स्नात>आं० neat (clean, clear) net इति चास्मिन्नर्थेऽपि प्रयुज्यते। यथा—net (clear) profit.

संस्कृतेऽपि नापितः<स्नापितः इत्यत्र हिन्द्याश्च —नहाना इत्यत्रापि आद्यः सकारो लुप्तः।

सं० √नह् बन्धने, नद्ध>आं० net.

एवमांग्ल्यां neat, net इत्युभावपि संस्कृतस्य स्ना, नह् इति धातुद्वयस्य क्तान्तं रूपं बिभृत इति।

सं० √प्लु, प्लुत pluta. आं० float इति क्तवद्रूपं निष्पद्यते, तेन सह च पुनः ed (त) प्रत्यय योगेन floated इति रूपं निष्पाद्यते।

सं० √दिश् *dik$_y$, दिष्ट diṣta. आं० dict इति त (क्त) प्रत्ययवद्रूपं जायते। अनेन सह पुनः सेट् इत्>ed इति त-प्रत्यययुक्तं dictate पुनरपि च तेन सह त-प्रत्यययोगेन dictated इति भूतकालद्योतकं रूपं निष्पद्यते।

सं० दिष्ट<*dik$_y$ta>आं० ditto इति रूपं त्वांग्ल्यां तथैव निपातरूपेण प्रयुज्यते यथा संस्कृते —नज् धातुना सह क्त-प्रत्यययोगेन निष्पन्नं 'नक्त' मिति। लातिन्यादिषु तु 'नक्तिः' noktis इति क्ति प्रत्ययवत् संज्ञारूपमेव विद्यते।

**सेट्-रूपम्**

एवमेवानिड्धातूनां 'क्त'वन्ति भूयांसि रूपाण्युदाहर्तुं शक्यन्ते।

यथा प्रकृतिप्रत्ययोर्मध्ये इकारागमविहीनानि क्तवन्त्यनेकानि कृद्रूपाण्यांग्ल्यादिषु विद्यन्ते तथैवेड् युक्तानि रूपाण्यपि तत्र प्रभूतानि प्रयुज्यन्ते। यथा हि—

सं० √वम्, वमित vamita (संस्कृते तु 'वान्त'मित्यानिड् रूपमेव प्रचलितम्)। आं० vomit इदं पूर्वमेवेड्युक्तं त-प्रत्यययुक्तं रूपमस्ति।

अनेन सह पुनः सेट् त प्रत्यययोगेन vomited इति रूपं निष्पाद्यते।

सं० √स्वन्, स्वनितम् svanitam इति सेड्रूपेणांग्ल्यां sound इत्यनिड्रूपं निष्पद्यते। ततश्च पुनः ed योगेन sounded इति कृद्रूपं निष्पाद्यते।

सं० √मन्, मत mata (अत्र नकारो लुप्तः)। आं० mind इति नकारवत् कृद्रूपं (संज्ञाशब्दः क्रियारूपञ्च) निष्पद्यते। तेन सह पुनः ed प्रत्यययोगेन minded इति कृद्रूपं जायते।

अनेनैतन्नचिन्त्यं यदांग्ल्यां सर्वे धातवः क्तान्तरूपमेव प्रकृतित्वमापन्ना इति। यतो ह्यांग्ल्यामप्यनेके मूलधातवोऽपि विन्द्यन्त एव। एतादृशा निम्नलिखिता धातवोऽनायासमेव स्मृतिपथमागच्छन्ति—

ask<इच्छ्<*aisk$_y$.

be<भू, bear<भृ, भर्।

bid<बुध्, bind<बन्ध्, bite<भिद्, bow<भुज् (भुग्न), come<गम, cook<पच्<*pek$^w$e, choose<जुष्।

chew<चर्व>हिं० चबाना।

do<धा, dare<धृष्, धर्ष, dye<दो, द्यति, dam<दम्, draw<द्रा।

eat<अद्।

fill<पृ, पूर्, flow<प्लु, find<विन्द, fear<भीष्।

go<गा (गाङ्गतौ)। glad<ह्लाद्।

hear<श्रु<*k$_y$eul.

is<अस्।

kiss<जुष्<*g$^w$es, know<ज्ञा jñā.

love<लुभ्, lay<लय, lick<लिह्<*ligh.

leak<रिच्<*lek$^w$e. leave<लिम्प्।

milk<मृज्, मर्ज<*mrlg$^w$e, move<मू।

pour<पृ, पूर्, पूर्ण ।

run<ऋ, ऋणोति, ऋण्वति, **rut**<रुद् ।

roam<रम्

stay<स्था, sit, sad<सद्, सीद्, stop<स्तभ्, sway<श्वि, टुओश्विगतिवृद्ध्योः, आंग्ल्या अयं sway धातुः गत्यर्थकः। swell, to increase<श्वि वृद्ध्यर्थकः swear<√स्वृ (शब्दोपतापयोः, आंग्ल्यां अयं swear धातुः शब्द (शपथ) अर्थकः), saw<शो अन्तकर्मणि, तनु कर्मणि च, स्यति, sport<स्पर्ध, smile<स्मि (अत्र तथैव स्वार्थिकः ल प्रत्यय यथा swell इत्यत्र), sweet<स्वद्, sweat<√स्विद्, stretch <—स्तृ यथा स्तृत, विस्तृत, sew<सीव, spy<स्पश्, ski पु० आं० skid<छिद्, tear<दृ, teach<दीक्ष्, tame<दाम्, turn<तृण्, तृणोति, तर्णोति, तर्णुते (अत्रार्थपरिवृत्तिर्जाता) ।

vert, re-vert<√वृत्, volve, involve<वृ ।

walk<वल्ग्, was<वस् अस् वा, wed<वध्<*ved$_{h}$h, wish<वश् (वै०) वष्टि कामयते, win<वन् (वै०) वण्, षण् सम्भक्तौ ।

यथांग्ल्यां अधिकतरा धातवस्तु त (क्त) प्रत्यय-युक्ताः सन्तः प्रकृतिरूपं भजन्ते, परं केचिद् मूलधातवोऽप्यत्र विद्यन्ते, तथैव पारस्यामप्यधिकांशाः धातवः क्तप्रत्यययुक्ता एव प्रकृतिरूपं प्राप्नुवन्ति। परं केचिद् मूलधातवोऽप्यत्र विद्यन्त एव। यथा हि—

सं० √भू bhū >बूदन। सं० हन्—ज़नद्, सं० भृ—बुर्दन् ।

सं० मृ √मुर्दन्, √कृ √कर्दन, √कुणु√कुनीदन्, बध्, बद्ध√बस्तन्, √धा-दास्तन्, √पच् √पुख़्तन्, √श्रु, श्रृणु √शुनीदन, √रफ्—(रफ रफि इत्यादयोऽनेके गत्यर्थका धातवो धातुपाठे सन्ति)—रफ्तन्, √गृभ् (वै०) (गृह्)—गिरफ्तन, √सद्-निहादन् निशस्तन, √ज्ञा—शिनाख़्तन, दानिस्तन, (पारस्यां सं० ज्ञ jna इत्यस्य शन् इति जायते जन jan इत्यस्य च दान इति)। √चिन् चित्—चीदन, √खन्-कन्दन, √धाव्, धौत, धावित—दवीदन (पलायनम्) ।

परमेतादृशाअपि केचिद्धातवः पारस्यामपि सन्ति यत्र मूलधातवः एव प्रकृतिरूपेण तिष्ठन्ति । यथा—

√खाद्—खायद, √क्रमु (पादविक्षेपे) खरामा (विलासगतिः—मटक-मटक कर ठुमकते चलना)। पाणिनिनापि 'क्रमु' गतिरित्यर्थो नैव प्रदत्तोऽपितु पादविक्षेप इत्युक्तवता गतिविशेष एवाऽस्यार्थः स्वीकृतः)।

√शुच् ज्वलने (वै०)—शूज़न् इत्यादयः।

यथांग्ल्यां सामान्यभूतद्योतकानि धातूनां क्तान्तरूपाणि जायन्ते तथैव पञ्जाब्यामपि क्तप्रत्यययुक्तैर्धातुरूपैः सामान्यभूतकालोऽभिव्यज्यते। यथा हि—

सं० √दा, दत्त, पं० दित्ता। सं० √कृ, कृत-पं० कित्ता, √स्वप्-सुप्त √सुत्ता पया ए। सं० √दृश दृष्ट—दिट्ठा, √मुच्, मुक्त—मुक्किया, नश्, नष्ट—नट्ठगया, √लभ्, लब्ध—पं० लब्भ्या, लद्धा, सं० √खाद्, खादित—खादा[1] इत्यादयः।

**मन् प्रत्ययः**

यथा संस्कृते धातुभिस्सह मन् प्रत्यययोगेन शब्दा निर्मीयन्ते तथान्यास्वपि सजातीयाभाषास्वपि मन्नन्त शब्दा दृश्यन्ते। यथा हि—

सं० √हु, होमन् homan, ग्रीक xei-ma.

सं० √स्रु, स्रुमन् sruman, स्रुतः, ग्रीक rhu-ma, (rhuematic pain).

**वन् van (वनिप्, क्वनिप्), मन् प्रत्ययौ**

सं० √स्ना बन्धने snā-bhndhane नामन् nāman, लाति० no-men. ग्रीक onomata (अत्राद्यः सकारस्तथैव लुप्तो यथा 'नापित' शब्दे स्नातेः सकारः। 'ज्ञा' धातोः नमतेश्चापि नाम शब्दो व्युत्पाद्यते)।

सं० √सीव्, स्यूमन syūman, ग्रीक hu-mēn (पेशी sinew), आं० sinew<सं० स्नायुः।

१. हिन्द्यान्तु क्त प्रत्ययस्य तकारो लुप्त आकार एवावशिष्टः। यथा—खाया, सोया, दिया, किया इत्यादयः।

सं० शीर्षन् śīrṣan<*$k_v$irk$_v$śn, ग्रीक kareta<krāsata, kreme, geranos, आं० crane (सारसः)। भारोत्तोलकयन्त्रमप्येतदेव।

**कः प्रत्ययः**

संस्कृतवदन्यास्वपि भाषासु क-प्रत्यययुक्ताः शब्दा विद्यन्ते। अयञ्च क-प्रत्ययः कृत् प्रत्ययरूपेण तद्धितप्रत्ययरूपेणचोभयथा प्रयुज्यते। यथा हि—

सं० √यु, युवन् yuvan, लाति० juvenkus<युवन्-कः>young, गॉ० jungus.

सं० √मुष्, मुष्कः muśkas, लाति० musculus.

सं० √शुष्<*$k_v$uk$_v$, अवे० हुश्क, पु० फा० सुष्क, आं० husk (भूसा, अयमपि शुष्को भवति), फा० हि० खुश्क।

सं० √अत्, अत्क atka (वै० परिधानम्), अवे० अत्ख्, फा० खिल्-अत (परिधानम्)।

सं० √धा, धाकः dhākas, ग्रीक thē-kē (receptacle यत्र वस्तूनि स्थाप्यन्ते), आं० task (something that one has to do), धा धातोरांग्ल्यां 'दा' इति जायते। अत्र च दकारस्य तकारो जातः।

**तद्धितप्रत्ययाः**

ये नामभिर्विशेषणैर्वा सह प्रयुक्ताः प्रत्यया अन्यान् संज्ञाशब्दान् निर्मान्ति ते तद्धितप्रत्यया, द्वैतेयिकाः प्रत्यया (Secondary Endings) वा प्रोच्यन्ते।

संस्कृते ये प्रमुखास्तद्धितप्रत्यया नामभिस्सह प्रयुक्तास्तेऽन्यास्वपि सजातीयासु भाषासु विद्यन्ते। यथा हि—

**इन ईन, इन् प्रत्ययाः**

संस्कृद्वदन्यास्वपि भाषास्विन्प्रत्यययोगेन शब्दा निर्मीयन्ते। यथा—

सं० दक्ष daksa दक्षिण[1], अवे० दशिन, ग्रीक dezio-s, लाति० dex-ter,

---

१. यतोह्ययं दक्षिणहस्तः कर्मसम्पादने दक्षोऽत एव दक्षिण हस्त इत्युच्यते, तत्सम्बन्धेन दिशाऽपि दक्षिणा, दक्षिणहस्तप्रदत्ता मुद्रापि च 'दक्षिणा' इत्यभिधीयते।

(अत्र इन् स्थाने तर-प्रत्ययः), लिथु० deszn-e देशीने (दक्षिणहस्तः), स्ला० desi-nce, आयर० dess, गॉ० taihs-da, आं० dexter.

सं० अजः ajas, अजा-अजिनम्[1], लिथ० ozys-ozinis अजेन सम्बद्धः), स्लाव० azino.

सं० अविः avis, स्लाव० ovic-ina (अविचर्म, यथा संस्कृतेऽजस्य चर्माजिनमित्युच्यते तथैव स्लावोनिक यामवेश्चर्म ओविसिन इत्युच्यते)। तथैव च—

सं० वृकः vṛkas, स्लाव० vluc-ina, व्लुकिन-वृकिन (वृकचर्म), ग्रीक्यामिन-प्रत्ययान्तानां शब्दानां बाहुल्यं दृश्यते। यथा—

ग्रीक anthos (पुष्पम्)—anthenos.

ग्रीक aere (वायुः)—aer-ino-s.

**ईन प्रत्ययः**

सं० नव nava, नवीन, स्लाव० dov-ina नवकर्षिता भूमिः), सं० कनीनः kanīnas (young), उ०जा० jung-in.

सं० नक्तम् naktam, लाति० nocht,-noctu-inu-s.

**अत्रेदमवधेयम्**

जार्मण्यामनेकत्र in, īn प्रत्ययो en प्रत्ययेन सहैकीभूतौ। यथा—

आं० gold, उ०जा० guld-in. आं० golden, goldy इति शब्दोऽपि goldin इत्यस्यैव रूपं विद्यते, अत्रान्तिमो नः n घृष्टः। आं० earth, उ० जा० erd-in, आं० earthen.

सं० व्रीहि brīhi, गॉ० bariz-eins बरिजेइन्स्।

सं० तृणम् tṛṇam, तृणिन्, आं० thorn, गॉ० thaurn-eins, आं० thorny.

---

१. अजिनमित्यस्य यौगिकोऽर्थस्तु अजचर्म इत्येवास्ति, परमस्य शब्दस्य मगचर्मण्यर्थान्तरो जातः।

**तन त्न प्रत्ययौ**

संस्कृत इवान्यास्वपि भाषासु तन-त्न-प्रत्यययुक्तैः शब्दैस्ताद्धिताः शब्दा निर्मीयन्ते। यथा—

सं० प्रत्न pratna, पुरातन, नूत्न, नूतन, अद्यतन, ग्रीक ēpe-tonos लाति० diutinu-s.

पारस्यामवेस्तायाञ्चैतौ प्रत्ययौ कृत्प्रत्ययरूपेणाऽपि प्रयुक्तौ। यथा—

सं० √खन् khan, फा० √कन्दन्, सं० खातम् khātam, पु० फा० कतन इय् ("कतनि" इति पठ्यते), फा० खतना।

सं० √च्यव् चौत्नम् coutnam (preparation), पु० फा० स्यौथ्न (कार्यं, निर्णय)।

**व (म), मु प्रत्ययः**

संस्कृतस्य व प्रत्ययस्य स्थाने स्लावोनिक्यां मु प्रत्ययो दृश्यते। यथा हि—

सं० केश kēśa, केशवः, स्लाव० kos-mu[1], kosma. स्लावोनिक्या कोस्मु शब्दे विद्यमान मु प्रत्ययस्युकारः संस्कृत'केश' शब्दस्यान्तेप्रयुक्तः।

ततश्च फारस्या गेसू इति शब्दो निष्पद्यते। सं० केशव शब्दोऽपि केश-शब्दस्यैव ताद्धितं रूपं विद्यते, केशवान् इत्यस्त्यर्थोऽस्य शब्दस्य।

सं० √अव् av ओम् om, स्लाव० u-mu (विचारः, बोधः, सम्प्रत्ययः), लाति० avēre, आं० aware,

१. यद्यप्यद्यत्वे आंग्ल्यां cosmetic शब्दो प्रसाधनोपकरणे श्रृंगारोपयोगिपदार्थ-जाते श्रृंगारे वा एव रूढः, परमयं शब्दो वस्तुतः केशेन सम्बद्धोऽस्ति। केशालङ्करणञ्चास्य शब्दस्य मुख्योऽर्थोऽस्ति। ततश्च केशैश्च सह मुख-प्रसाधनसामान्येऽस्य शब्दस्यार्थविस्तारो जातः। Shorter Oxford Dictionary इति कोशे शब्दस्यार्थस्य विशदीकरणे लिखितमस्ति—
A preparation for beautifying the hair, skin or for complexion.
अत्रापि केशालङ्करणमेव प्राथम्येन प्रतिपादितम्।

**तर तम प्रत्ययौ**

यथा संस्कृते तुलनावाचकः तर प्रत्यय उत्तमावस्था सूचकश्च तम प्रत्ययस्तथैवेतयोः प्रत्यययोर्योगेनान्यास्वपि भाषासु शब्दा निर्मीयन्ते। यथा हि—

सं० अपतरः apataras, उ० जा० af-ro, aftero, आं० after.

एवमेव सं० अपरः गॉ० afar, आं० afar.

सं० उत्तरः, uttaras, ग्रीक hys-tero-s.

सं० उत्तमः uttamas, ए० सैक्० ut-emest, आं० utmost.

सं० विंशतितमः vinśatitamas, अवे० वीसमस्तेम्, लाति० vīcēnsimus.

सं० त्रिंशतितमः trinśtitamas लाति० trīcēn-simus.

सं० अन्तमः (वै०) antamas (अन्तिमः), लाति० intimus (interior), आं० intimate.

सं० अन्तरः antaras, लाति० inter-ior.

सं० नि-तराम् nie-tarām, ए० सैक ni-der-sa, जा० nieder (low), आं० near (जार्मण्यां नितराम् निम्नतर अधस्तादिति यावत् इत्येवार्थोऽस्ति, परमांग्ल्यामस्य शब्दस्य निकट इत्यर्थो जातः)।

सं० वि-तराम् vi-tarām, अवे० वीतरेम्, गॉ० vithera, जा० widar (पुनः)।

सं० नि-तमाम् ni-ṭamām, अवे० नितेम (निम्नतमः, सूक्ष्मतमः); ए० सैक० nide-mest.

स० प्रतराम pratrām, प्रतर, आं० further.

सं० कतमः katamas, लाति० quo-tumu-s, cou-tu-s, आं० quote, -tion.

सं० कतरः katara ग्रीक poteros, गॉ० hvathar (कः), आं० whether.

सं० प्रथम pratham<प्र-तम, अवे० फ्रतेम fra-tam, ग्रीक pro-tos, (अत्र तम स्थाने त प्रत्यय), एवमेव ग्रीक pro-mos, आं० promote, लाति० promom, prime, premier, गॉ० frām आं० from.

क्वचिदिष्ठप्रत्ययेनापि तम प्रत्ययः प्रयुज्यते। यथा—

सं० श्रेष्ठतमः, वसिष्ठतमः, अवे० बहिश्तम, फा० बहिश्त)।

सं० वरीयस्तर variyastar, अवे० वइरयसतार्, ग्रीक aris-teros, आं० aristocrate अप्यस्यैव विस्तारितं रूपम्, उ० जा० wimster.

सं० इतर itar, लाति० iterum, गॉ० idr-eiga, आं० other, either.

सं० वाम vāma, उ० जा० wine (प्रिय) winis-tar.

सं० अवर avar, अवे० aora अओर, फा० अवरंग<अवरांग>औरंग (सिंहासनम् यतो हि एतदपि स्थातुरधस्ताद् भवति), फारस्यां 'उपर' शब्दोऽपि 'ओर' इति रूपेण विपरिणमति, अतएव मुकुटोऽपि 'औरंग' इत्युच्चते। यतो हि स स 'उपरि अङ्गो' भवति।

सं० अन्तर antar, ग्रीक en-teron, लाति० in-ter, inter-ior, intrx intrio.

**इयस्, इष्ठ प्रत्ययौ**

यथा संस्कृते तुलनावाचकः इयस् उत्तमावस्थासूचकश्चेष्ठ प्रत्ययस्तथैवेतौ प्रत्ययावन्यास्वपि भाषसु विद्येते। यथा हि—

सं० महीयस् mahiyas, लाति० आं० major अत्रान्तिमः सकारः रेफो यकारश्च j जातः।

सं० लघु laghu, लघिष्ठः, ग्रीक elax-isto-s, आं० light, lightest.

सं० स्वादिष्ठः svādisths, ग्रीक hed-isto-s, गॉ० sut-ists, आं० sweatets.

सं० मंघिष्ठ, महिष्ठ manhisth, ग्रीक०, लाति० meg-istus, आं० migistrate अपिअस्यैवपरिवर्धितं रूपम्।

आंग्ल्यां इयस्, इष्ठ प्रत्ययौ बाहुल्येन प्रयुज्येते। यथा—

सं० युवन् yuvan, यविष्ठ, आं० youngest.

यवियस्-younger<युवन्, clearest, nearest इत्यादिषु।

**ता प्रत्ययः**

यथा संस्कृते ता प्रत्यययोगेन भाववाचकाः शब्दा निर्मीयन्ते तथा ग्रीक स्लावोनिक्यादिषुभाषास्वपि शब्दान्ते ता प्रत्ययो युज्यते। यथा—

सं० कृष्णता kṛṣṇatā, स्लाव० ctinota.

सं० दीर्घता dīrghatā, स्लाव० dlugota.

सं० नग्नता nagnata, स्लाव० nagota.

सं० पूर्णता pūrṇatā, उ० जा० fulli-da, स्लाव० plunota.

सं० युवन्-(ता), yuvan(ta), लाति० juventa, गॉ० junda, स्लाव० juno-ta युवकः, आं० youth.

संस्कृतग्रीक्यादिष्वनेकत्र ता-प्रत्यययोगेन व्यक्तिवाचकसंज्ञा अपि निर्मीयन्ते। यथा—

सं० देवता devata, लाति० deity.

सं० गुरुता gurutā, ग्रीक barutes (भारः)।

सं० मृदुता mṛdutā, ग्रीक bradutes (ग्रीक्यां पदादौ संयुक्त मकारः बकारे परिणमति)।

सं० अ-गोता a-gotā (गवामभावः), ग्रीक poly-boutes (पुरुगौता, गवामाधिक्यं प्रभूतत्वं वा)।

**इक प्रत्ययः**

यथा संस्कृते 'वृश्चिक' सदृशेषु शब्देषु कृत्प्रत्ययः इक विद्यते वार्षिक सदृशेषु स एव तद्धित प्रत्ययः। एष उभयविधोऽपि इकप्रत्ययोऽन्यास्वपि सजातीयासु भाषासु तथैव वरीवर्ति। यथा हि—

सं० अश्व aśva, अश्विकः aśvikas, ग्रीक hipp-ikos.

सं० नर् nar, नरियः, नरिकः narikas, ग्रीक andr-ikos<anēr, (कर्ता ए० व०), सम्बन्ध एकवचन-andr-os, लाति० histrion-icus, historical, fabrica, publicus.

सं० अन्तरिक antarik, उ० जा० entrig, जा० ander.

**तद्धित प्रत्ययः कः**

सं० मर्यः (वै०) maryas, मर्यकः maryakas (पुरुषः, युवापुरुषः), ग्रीक meira-x कन्या, बालिका बालकश्च, आं० marriage.

सं० लोपाकः lopākas (वै०) लोमड़ी, ग्रीक lopēx.

सं० अन्तिकः antikas, लाति० anti-quos, anticus, आं० antique (प्राचीन ढंग का) यथा antique paper.

सं० द्विकः dvikas, ए० सेक० twi-z, आं० twig (शाखा)।

**क, इक प्रत्ययौ स्वार्थे यथा—**

सं० मूषकः mūṣakas, mūṣikā, आर्मे० mu-k-n, स्लाव० my-sica.

सं० गौ gau, लाति० bu-ch, bū-cula.

सं० अजकः ajakas, लिथ० oszka.

सं० अविकः avikas, लाति० ovi-cula, लिथ० avi-k̬ne, स्लाव० ove-ca.

सं० पांशुकः pānśukas, स्लाव० pesu-ku सिकिता।

सं० देवकः devakas, देविका devikā, गाल० dēvicō, divicia.

सं० सनः sanas, सनकः sanakas (पुराणः), लाति० senex, seneca, लाति० senz-is.

सं० अंशुकः anśukas, आर्मे, स्लाव० ancuk, anjuk सङ्कीर्णः।

सं० अपूर्णायुकः apūrṇāyukas, अवे० aperenayu-ka शिशुः, फा० बरना (अवयस्कः, युवकः)।

सं० कना kanā, कन्याकः kanyākas, अवे० kaini-ka (सं० कनीन,> अवे० kainin, फा० कनीज़)।

सं० वसुकः vasukas, पु० फा० vahu-ka.

सं० ज्ञुः jnus, प्रज्ञुः prajṅus, ग्रीक jnux.

**च्छ *sk$^{w}$ प्रत्ययः**

सं० √पृच्छ pṛcha *preck$^{w}$, पृच्छा, लाति० posco<*prossco, पु० उ० जा० forsca, जा० fragen.

सं० √वाञ्छ vamchha, जा० wence, wunse वुंशे,

सं० √विश् vis<*vek$_{v}$, वेशः, ग्रीक oiki-skos (ओकः), लाति० e-sca<ēdtsca (भुक्तम्<√अद्)।

**४१. य इय प्रत्ययौ**

संस्कृतवदन्यास्वपि सजातीयासु भाषासु य, इय इत्युभावपि प्रत्ययौ विद्येते। आभ्यामुभाभ्यां प्रत्ययाभ्यां प्रायशस्ताद्धिता एव शब्दा निष्पद्यन्ते। यथा हि—

सं० पित्रियः pitriyas, ग्रीक patrio-s, लाति. patri-us, आं० patriot अपि अस्यैव परिवर्धितं रूपम्।

सं० मर्त्यः martyas (मरतियः), अवे० मशीय, पु० फा० मरतिय, ग्रीक am-bros-eo-s<सं० अमर्त्यः।

सं० भैषज्यम् bhaiṣajyam, अवे० बएंशज्य।

सं० नाव्यः nāvya, नावियः, ग्रीक nā-ios, nēios.

सं० दिव्यः divy, ग्रीक dio-s<dif-io-s.

सं० पद्यः padyas, ग्रीक pegos<ped-yo-s.

सं० उषस्य: uṣasyas, ग्रीक ēōs, ēoio-s <*us-ya-ṣ >asia (एशिया महाद्वीप एष एव)।

सं० अज्रिय: ajriyas,ग्रीक ag-io-s.

सं० स-हस्रिय: sahasriyas<*gheslo>*khesleo>ग्रीक khilio> आं० killo.

सं० नप्त्य: (वै०) naptyas अवे० नपतियो, ग्रीक anepo-ios गॉ० nith-je-s, पु० उ० जा० nefo, आं० nephew, स्लाव० netyiji (firt-cousin).

सं० राजीय rājīya, गॉ० reik-i, पु० उ० जा० rihh-i, आं० royal अपि अस्यैव विस्तारितं रूपम्।

सं० ज्येष्ठ jyeṣṭha, ज्येष्ठ्य,<* $g^{w}$yek$_{v}$tha>गॉ० hauhisti>आं० high, highest. hight.

सं० भ्रात्रिय: bhrātriyas, ग्रीक phrātreā, स्लाव० bratrija bratrija.

सं० अन्य: anya, अवे० अन्य, पु० फा० अनिय, ग्रीक allo-s, लाति० aliu-s. गॉ० alje-s आर्मे० ail.

सं० मध्य madhya, ग्रीक messo.s, लाति० medius, लाति० आं० medium.

सं० नव्य navya, पु० आयर nue, गॉ० nevje-s, आं० neo.

सं० तृतीय tṛtīya, तार्तीय tārtīya, अवे० थ्रित्य० ग्रीक trito-s, लाति० ter-t-iu-s., गॉ० third-jan.

**४२. अ, व, उव प्रत्यया:**

सं० अश्व: aśvas<* ek$_{v}$vos, अश्वा aśvā, ग्रीक hippos, लाति० equo, equā (स्त्री०), फा० अस्प, अस्पा, गॉ० aihva.

सं० जीव:<* $j^{w}$īvas jīvos, लाति० vīvo-s, सिमरिक byo, गॉ०० qiu-s, लिथ, gyvas, आयर० biu, आं० bio, स्ला० zivu.

सं० वि-√धू० dhu—अः=विधवः vidhvas, स्त्री चेद् 'विधवा'[1], ग्रीक eithēos (अविवाहितः), लाति० viduos, viduā (स्त्री), आयर० fedb, सिमरिक gvaddo, गॉ० viduvo, स्लाव० vidovr, आं० widow. (widower अनेन निष्पन्नं पुं० रूपम्), फा० बेवा ।

सं० विश्व viśva, अवे० पू० फा० वीस्प (सर्वे) ।

सं० ध्रुव dhruva (दृढ), स्लाव० su-drava (sound health स्वस्थः), फा० दुरस्त<सं० ध्रुवोऽस्ति ।

सं० पूर्व pūrva, अवे० पउर्व, पु० फा० पुरुव (पर्व इति पठ्यते), ग्रीक (डोरिका) prān, protos, prātos (प्रथमः), protos<pro-f-ato-s प्रोवोतोस=सं० पूर्वतः ।

सं० एव ēva, अवे, अएं-व, पू० फा० अइ-व, ग्रीक oio-s, oi-fo-s (तुलनीयम् *oy-no>लाति० oino-s, ūnio-s, आं० one (एवमेव सं० एकः एषु शब्देषु निश्चयार्थकस्य एव शब्दस्याद्य एकारः सर्वत्र तिष्ठति । प्रत्ययास्तु विभिन्ना, क्वचित् 'व', क्वचित् 'न' क्वचिच्च 'क' । संस्कृतस्य निश्चयार्थक 'एव' शब्द एव ग्रीकावेस्तादिषु एकार्थकः जातः ।

सं० ऊर्ध्व ūrdhvas<√*ऋध्-वो-स, ग्रीक ortho-s, लाति० arduo-s, आयर० ard, फा० अर्दा शेयर ?

सं० सर्वः sarvas, ग्रीक oulo-s, olo-s<* hol-fo-s होल्वोस लाति० sal-va-s, आं० whole.

सं० कुल्वः kulvas वै० खल्वाटः शिरश्च balled, लाति० cal-vo-s>फा०

---

१. सं० विधवा शब्दस्य 'धव'-विहीना या व्युत्पत्तिः प्रदर्शिता सा तु कल्पितैव । यतो हि पुंलिंगवाचक विधुर शब्देन 'विधवा, शब्दस्य नास्ति कोऽपि सम्बन्धः । परमन्यासु सजातीयासु भाषासु वि पूर्वकाद्धून्धातोः 'अ' प्रत्यययोगेन 'विधवः' शब्दस्तस्य च स्त्रियामाप्रत्यययोगेन 'विधवा' इति निष्पन्नौ शब्दौ सुप्रचलितौ । संस्कृते भारोपीयो 'विधवा' शब्दस्त्वागतः परं पुं० वाचकं विधव इत्यस्य स्थाने 'विधुर' इति नूतनः शब्दः प्रचलितः । पत्यर्थको 'धव' शब्दोऽपि नूतन एव ।

कुल्ला (शिरोवेष्टनम् पारस्यां पदान्ते यवयोर्लोपो जायते।) सं० खल्वाट: अपि अस्यैव महाप्राणितं परिर्वाधितञ्च रूपं० प्रतीयते ।

सं० सव्य: savyas, ग्रीक skai·(f) o-s, लाति० scae-vo-s, स्लाव० saugi (दक्षिणे) आइ० skeika (विदिशा go wrong विपरीतां दिशां गच्छ)। पं० सज्जा । संस्कृतेऽपि सव्यशब्दो दक्षिणार्थेऽपि वर्तते ।

सं० हरित इत्यत्र तकार: परं जर्मन hel-vo-s<*ghel-vo-s पु० उ० जा० velo, आं० yellow, इत्यादिषु तकारस्य स्थाने 'व' प्रत्ययस्तथैव वर्णवाचकाद् भ्रु:, भ्लु:, शब्दात् जा० blāo*bhḷ-vo-s>लाति० ful-vo-s, flā-vo-s (flower अप्येतस्मादेव), आं० blue, (सं० 'बभ्रु' रिति 'भ्रु' इत्यस्यैव द्विरुक्तं रूपम्। आं० blossom शब्दोऽप्यस्मादेव ।

सं० मनस् शब्दात् व प्रत्यय योगेन सह स्त्रिवाचक, 'आ' प्रत्यययोगेन लाति० minerva निष्पद्यते। संस्कृते तु विन् प्रत्यययोगेन मनस्विन् इति जायते। स्त्रियाञ्च मनस्विनीति। सं० मर्त्यवत् लातिन्यां व प्रत्यययोगेन mortuo-s, स्लावोनिक्यां च mrituw शब्दावपि जायेते।

सं०√ऋ, अर् ar अर्वन् arvan (त्वरितगामी), फिन्नोग्रियन arvas, आइस० grr, ए० सैक० earo, आं० early अप्येतस्मादेव 'ली' प्रत्यय योगेन निष्पद्यते।

संस्कृते पा-पी धातो: ति प्रत्यययोगेन पीति: इति जायते। तथैव स्लावोनिक्यां अपि पिति: शब्देन सह पिवो pivo (घूंट) अथ च मादकं पेयमिति जायते।

सं० पीव: pīvas, ग्रीक pi (f)-o-s.

सं० श्याव: śyāvas, प्रश० sy-va, स्ला० si-ve, फा० स्याव>स्याह, यथा अफ्रास्याव (नाम)।

सं० ग्रीवा grīvā, लाति० cer-vo-s, लिथ्वा० gri-va, फा० गरेबां (ग्रीवा, ग्रीवाया अधोवस्त्रञ्च)।

**४३. न, अन प्रत्ययौ**

संस्कृतवदन्यासु सजातीय भाषास्वपि न अन प्रत्यययोगेन पदानि निर्मीयन्ते। तद्यथा—

सं०√पॄ pṛ, पूर्ण pūrṇa, अवे० perna, ग्रीक polloi (पुरू, बहव:),

आयर० lān, गॉ० feulls<*fulnaz (प्रत्ययस्य नकारः समीभूतः पूर्वसवर्णो वा जातः), लिथ्वा० pilna-s, स्लाव० plunu, आं० full (सं० पूर्तं आं० filled)।

सं० पृ pṛ, प्राणः prāṇas, *pḷ तु० सं० प्रातः लाति० im-plētu-s (पूर्ण) अत्र वृद्धिर्जाता।

सं० अन्नम् annam<*अद्नम्, ग्रीक ed-ano-s भोज्यम्, भक्ष्यम्, ed-ano-n (अन्नम्, भोजनम्)।

सं० √च्यव्, √चय,<*k$^w$ev, चयन<*k$^w$eyana (प्रतिफलम् पूर्णता), अवे० कएइना (दण्डम्), फा० कीना (द्वेषः, संघर्षः, प्रतिकारः), ग्रीक poīnē, स्लाव० cena (मूल्यम्)।

सं० √रुच् ruc (रुष्) <*luk$^w$.

सं० रोचनः rocanas, रुक्म, रुक्णः (नैव दृष्टम्), अवे० रओखशन, फा० रोशन<*leqsnos>लाति० lūna, आं० lunar (चान्द्रः) अप्येष एव। तुलनीयम्-रुक्ष rukṣa, प्रश:० lauxn-os, लाति० illustri-s<*in-loucs-tri--s अप्यस्यैव प्रवर्धितं रूपम्, आं० illustrate अप्येष एव। अस्य यौगिकोऽर्थस्तु प्रकाशकं रूपम्। ए० सैक० lixan, lyxan (प्रकाशनम्), आं० lux, (lexicon शब्दावपि एतस्मादेव सम्बद्धौ स्याताम्) पु० से० logna ज्वाला, अर्चिः।

सं० शेते śete, ग्रीक kyo-toi, सं० शयनम् śayanama, अवे० शयन √*k$_v$ey-no, ग्रीक Q-keano-s (परिक्राम्य स्थितः he who surrounds).

सं० वसनम् vasanam> fes-anō>ग्रीक heano-s (dress, cloth).

सं० *√ev,ऊ-न ū-na, अवे० ऊन (रिक्त), ग्रीक eu-ni-s, (needing-bereft).

सं० क्षीणः kṣīṇas, ग्रीक phthi-no-karpos (क्षीणफलम्)।

सं० दीर्णः dīrṇas, अवे० दरेना (स्त्री० cleft ravine), उ० जा० zorn, आं० torn.

सं० ब्रध्नः bradhnas, (पीतवर्णः)>स्लाव० bronu (ईषत्-श्वेतः), आं० brown.

सं० यज्ञ yajña, अवे० यस्न, ग्रीक hag-no-s.

सं० प्रश्नः praśnas, अवे० फ्रश्न ।

सं० √तिग्>√तिज् यथा तिग्म, तीक्ष्ण, tīkṣṇa, कृत्स्न सदृशेषु शब्देषु प्रत्ययनकारात् पूर्वं सकारागमो जातः ।

सं० वस्नः vasnas (मूल्यम्)>*fos-nos-s >ग्रीक hōnō-s, hōnē (विक्रयमूल्यम्, किम् आं० honour अपि एतस्मादेव) आर्मे० gi-n, सम्ब० g-no-y (मूल्यम्) । लाति० venum<*vesno, पु० फा० वश्न, अवे० वस्न ।

सं० दानम् dānam, ग्रीक dā-nos (ऋणम्) ।

सं० धूनः dhūnas, ग्रीक thū-no-s(throng, युद्धम् , आक्रमणम्) ।

सं० √स्तॄ stṛ, *stḷ.

सं० स्तीर्णः stīrṇas, ग्रीक ster-no-n (breast स्त्री-वक्षोजौ), उ० जा० stirna (ताराः) ।

सं० स्थूणा sthūṇā, ग्रीक stēle<stalna, अवे० स्तूना, फा० सतून ।

सं० सदनम् sadanam, ग्रीक hedr-ano-n.

एं० √दिश् diś<*dik$_y$, लाति० dignu-s, आं० dignity (विशेषेण दृष्टः) अपि एतस्मादेव ।

सं० जीर्णम् jīrṇam<*g$^w$ṛ-no-m, लाति० grā-nu-m, गॉ० kaur-n, स्ला० gri-no, आं० grain, corn, kernel (बीजं, हि० गिरि, गुठली) अप्यस्यैव विस्तारितं रूपम् ।

सं० तक्ष्णम् takṣṇa, ग्रीक tex-nē, आं० techn, technology.

सं० ऊर्णा ūrṇā शब्दोऽयं प्रतिपादितचरः ।

सं० बुध्नः budhnas, जा० boden, आं० bottom. आयरिश bond, bonn (पादतलं) sole of a shoe.

सं० अयस्-न ayas-na,*aes-no (aes aeris)>लाति० aenu-s, जा० eisen (आइज़न), आं० iron, फा० आहन ।

सं० प्रत्न pratna, लाति० pronus, <prodno.

सं० धेना (वै०) dhēnā, धेनु: dhenu-s, लिथ० de-na.

सं० वर्णः varṇas, लिथ० var-na-s, स्लाव० vra-nu, vra-na (कृष्ण, काकः), (अत्र सं० वर्णशब्दस्य कृष्णार्थेऽर्थसंकोचः तद्वशादेव काक इत्यर्थे-रूढिर्जाता)।

सं० श्यानः śyānas, शीनः śīnas (संकुचितः), लिथ० sze-nas, स्लाव० se-no (हेयं भुसम्), हि० भूसा, आं० hay.

सं० शिशिरः sisiras, लिथ० szal-na, स्लाव० sla-na.

सं० फेनः phēnas, लाति० speuma, आं० fome, स्लाव० pena, प्रश० spaoy-no. (एकत्र नः प्रत्ययोऽन्यत्र च मः। एकत्र √स्फा इत्यस्य सः सुरक्षितः अन्यत्र च लुप्तः)।

सं० तृणम् tṛṇam, गॉ० thaur-nu-s, जा० dorn, आं० thorn; स्लाव० tri-nu.

सं० वहनः vahanas, वाहनम् vāhanam,* √vegh, स्ला० vzenu, आं० wegon, van.

सं० वर्तनम् vartanam, स्लाव० vṛet-ano, (हि० तकली spIndle यतो-ह्येषापि विवर्तते-परिवर्तते)।

सं० √अल् al गतौ वृद्धौ च, पु० से० ōle, allo.

सं० हवनम् havanam, अवे० ज़्वन (प्र०) आह्वानम्, आर्मे० jaune-m (समर्पयामि)।

सं० भरण bharaṇa, ग्रीक pher-ne (dowery).

सं० दुवस् duvas (पूजा, अर्पणम् gift), इतालवी beno, bono>*dv-eno, आं० bonus.

सं० √ईश् īś, गॉ० aig-in, उ० जा० eigin (property, the hav-ing for one's own).

सं० रचनम् raca-nam, गॉ० rag-in.

**४४. त्र, त्ल tra, tla, प्रत्ययौ।**

भेरान्यासु लकारस्य रेफे परिणत्या 'त्र' प्रत्यय एव विद्यते, परं यूरोपीयासु-'त्ल', आं dle प्रत्ययोऽपि विद्यते। अपि च लातिन्यां सं० त्र, tra, tla,* क्ल cle, cul, इति जायते, एतत्तु सर्वं ध्वनिप्रकरणे निरूपितम्।

संस्कृतवदन्यास्वपि भाषासु त्र (त्ल) प्रत्यययुक्ताः शब्दा विद्यन्ते। यथा हि—

सं० अरित्रम् aritram. ग्रीक phere-tron.

सं० भरित्रम् bharitram, लाति० fer-culu-m (भरित्रम्)।

सं० मात्रा mātrā, ग्रीक matron.

सं० क्षत्रम् kśtram; अवे० क्षसथ्रेम।

सं० वस्त्रम् vastram, अवे० वस्त्रेम, जा० wester, लाति, आं vesture (वस्त्रम्)।

सं० वहित्रम् vahitram (ship पोतः), लाति० vehi-culu-m.

सं० होत्रम् hotram (तर्पणम्), अवे० ज़ओथ्र, ग्रीक khu-trā (पात्रम्), khu-tlo-n (तर्पणम्)।

सं० श्रोत्रम् śrotram, पु० उ० जा० lio-dar, ए० सै० hleo-dar (ध्वनिः, कोलाहल), जा० hlue-thra, आं० hearings, loud.

सं० स्थात्रम् sthātram, आं० sta-ddle (seat स्थानम्)।

सं० √सद्, सीद् sad, sīd, निषीदति, विषाद, आसादयति, आं० sit, seat, sad, (विषादः, विषण्णः), सत्त्रम, <सत्रम् आं० saddle <sad-tle (पर्याणम्, काठी) एवमेव आं session अपि √सद् प्रक्रयैव निष्पन्नः।

सं० √पा pā पात्राम् pātram, √पू pū, पौत्रम्, (मुखम्) आं० foddor, (कोशः, बुसम्, हि० भूसा)। आं० food अपि सं० पा धातोनिष्पन्नाद् भोजनार्थकाद् वैदिक 'पितु' रिति शब्दान्निष्पन्न इति त्वनेकत्र प्रतिपादितम्।

# समासाः

४५. द्वयोःशब्दयोर्योगेनाथवोपसर्गनिपातैस्सह शब्दस्य धातोर्वा मेलनेन यदेकः शब्दो निष्पद्यते सः समस्तः शब्द इत्युच्यते। एषा शब्दमेलनप्रक्रियैव 'समास' इति परिभाष्यते। ते च षोढाः सन्ति[1]। प्रारम्भे संस्कृतेऽपि विशेषतो वेदेषु स्वल्पाकारा एव समस्तशब्दाः प्रचलिता आसन्। ग्रीकलातिनांग्लजार्मण्यादिषु युरोपियासु भाषास्वपि तादृशानामेव समस्तशब्दानां प्रचलनं विद्यते। अथ चोपसर्गनिपाताव्ययैः सह शब्दस्य धातोर्वा मेलनेन तादृशोऽपि नवीनः शब्दः प्रादुर्भवति यस्य प्रकृतिप्रत्ययादीनां पृथक् स्वरूपमपि ज्ञातुं न शक्यते। यथा हि —

'अद्य' इत्यव्युत्पन्नो निपात इत्युक्तः पाणिनिना। परं यास्केन 'अद्य' शब्दस्यापि निर्वचनं कृतवतोक्तं—'अद्य-अस्मिन् द्यवि'[2] इति। अत्राकारः अस्मादस्यास्मिन्नित्यादिषु दृश्यमानमेतदर्थकस्याकारस्यैव रूपं विद्यते। अथ च 'द्यु' इत्यस्योकारस्य स्थानेऽकारो जातः। एवमेतच्छब्दस्याकारेण सह 'द्यु' शब्दस्य समासेन 'अद्य' इति समस्तो निपातः प्रादुर्भूतः। गॉथिक्याम् अद्य इत्यस्य hiadaga पुराणोच्चजार्मण्यां hiutu जार्मण्यां च heute इति रूपाणि जातानि। एषु सर्वेषु शब्देष्वादौ हकारागमो जातः, इति तु स्पष्टमेव। एवमेव—अद्भुत इति शब्देऽकारो निषेधार्थकः 'अ' इत्यव्ययेन सह दभ्नोतेर्निष्पन्नस्याद्भुत शब्दस्य समासेअ-द्भुत इति रूपं निष्पन्नम्। एवमेव निस् इत्युपसर्गेण सह √सद् धातोर्योगेन नीड इति रूपं जायते। तद्यथा—नि-सद् > निस्द (अत्र धातोर्क्षीणं रूपम्) > निज़्द ततश्च ज़कारोऽपि लुप्तः। कस्यापि व्यञ्जनस्य लोपेन तत्पूर्वस्थः स्वरः दीर्घी भवति इति नियमेनेकारे दीर्घे जाते नीडमिति रूपं निष्पद्यते। आंग्लभाषाया nest इति रूपे तु √सद् धातोः सकारोऽपि सुरक्षितः। परं लातिन्या निडुस शब्दे संस्कृतवत् सकारस्थानीयो ज़कारो लुप्तः।

---

१. द्वन्द्वो द्विगुरपि चाहं नित्यं मद्गेहेऽव्ययीभावः।
तत्पुरुष कर्मधारय येनाहं स्यां बहुव्रीहिः॥

२. निरुक्त १।२।

यथा पूर्वमेव स्पष्टीकृतं प्रत्येकस्य धातोः मूलस्वरस्य (अकारस्येति यावत्) गुणोवृद्धिर्दौर्बल्यं क्षयोवेत्यवस्थात्रयं जायते। यथा हि √सद् धातोरकारो गुणरूपं सादयतीत्यत्राकारो वृद्धिरूपं 'नीड' शब्दनिष्पादकस्य 'निस्द्' इति रूपे च क्षीण-रूपं दृश्यते। एवमेव √पद् (गुणः) पादः (वृद्धिः) उपब्द <उप-पद् इत्यत्र चाका-रस्य क्षयो जातः।

एतत्सर्वं हृदि निधायैव नाम्नां निर्वचनं सम्यगवगम्यते। यतो हि परोक्षाति-परोक्षवृत्तिष्वनेकेषु शब्देषूपसर्गनिपातप्रकृतिप्रत्यायादीनां तथैक्यं समसनं वा जायते, यथा महता प्रयत्नेनैव तेषां पृथगवस्थितिर्ज्ञातुंशक्यत इति।

अधुनात्र केचिदेतादृशाः समस्ताः शब्दा उपस्थाप्यन्ते येऽन्यास्वपि भाषा-सूपलभ्यन्ते।

४६. निपाताव्ययपूर्वशब्दयुक्ताः समस्ताः शब्दाः

सं० अमृतः amṛtas, ग्रीक am-brotas, am-brosio-s.

सं० अनश्वः anśvas, ग्रीक an-ippos.

सं० अस्वपनः asvapnas, लाति०, īn-somnis.

सं० अनन्तः anantas, पु० उ० जा un-ende.

सं० दुर्मनः durmanas, अवे० दुशमनः, फा दुश्मन, ग्रीक dus-menēs.

सं० दुष्कृतः duṣkṛtas, पु० आयर० do-chruth (deformed, ugly).

सं० दुष्परः dusp̄āraṣ, ग्रीक dus-poros.

सं० दुस्√तन् dus-√tan, लाति० destinatus, आं० destiny (दुर्भा-ग्यम्)।

सं० दुर्भरः durbharas, ग्रीक dus-pheros, (हि० दूभर)।

सं० सुकृत् sukṛta, पु० आयर० so-chruth.

सं० अपिहितः apihitas <*epi-dhetos, ग्रीक epi-thetos (संयुक्तः परि-वर्धितः)।

सं० अपचितिः apcitis <*apok$_u$iti-s, ग्रीक apotisis.

सं० परिस्रावः parisrāvas, ग्रीक peri-rroos.

सं० प्रत्तः prattas<प्रदत्तः pradattas, ग्रीक pro-dotos. (त्यक्तः), ऐ० सैक० fra-cod.

सं० प्रततः pra-tatas. प्रततिः, ग्रीक pro-tasis (अग्रे विस्तारितम्)।

सं० पृष्ठम् pṛṣṭham < पृ-स्था >आं० first (संस्कृते उपर्यर्थक 'परि' इत्यस्य क्षीणं रूपं पृ इति जातं, परमांग्ल्यां गुणितमेव रूपं विद्यते)।

सं० अनाप्तः anāptas, लाति० in-aptu-s.

सं० अगतः agatas, ग्रीक a-batos.

सं० अन्तिगृहम् antigṛham, ग्रीक antithuron (अन्तिद्वारं, द्वारसमक्षम्)।

सं० अज्ञातः ajñāta. ग्रीक a-gnōto-s, लाति० īgnōtus. आं० ignore.

सं० अनुग्रहः anugrahas, ग्रीक an-ubros.

सं० प्रतिदोषः pratidoṣas, ग्रीक pros-esperos.

सुनृत sunṛta, (श्रेष्ठ नरत्वं, पौरुषं), पु० आयर० sonirt (सुशक्तिमान्)।

सं० सुनरः sunaras>फा० हुनर (कला), नेरवी (शक्तिः सामर्थम्)।

सं० अपस्था apasthā, गॉ० of-stass, ग्रीक epaostasis (पृथक्त्वं, defection), आं० apostrophy (पृथक्ताद्योतकोऽव्ययः यथा apostrophe's).

सं० मिथः गच्छन्त, mithas gacchant, गॉ० mith-gasintha (सहयात्री), पु० उ० जा० meterbelinc (co-heir), ग्रीक meta आं० mate (class-mate room-mate) अपि सं० मिथः (सह) एव आं० mutual शब्दोऽस्य अल् प्रत्यययुक्तं-रूपम्।

**४७. द्विगुः समासः**

स्वयंपदप्रधानः सङ्ख्यापूर्वो द्विगुरित्युच्यते। अन्यपदप्रधानश्च बहुव्रीहिः। संस्कृते एकादशतः शतपर्यन्तं सर्वे सङ्ख्यावाचकाः शब्दाः द्विगुसमासेन समस्ताः, परमांग्ल्यासु thirteen तः आरभ्य ninteen पर्यन्तमेव समस्ताः सङ्ख्याः। अग्रे च

समासहीना इति पूर्वमेव प्रतिपादितम् । एवमेव—

सं० द्वाभा dvābhā, आं० twilight.

सं० द्विपदः dvipadas ग्रीक di-pous, लाति० bi-pēs, ऐ० सै० twi-fēte, आं० two-feeted, हि० दोपाया ।

सं० त्रिपदः tripadas, ग्रीक tri-pous, लाति० tri-pēs.

सं० त्रिदन्त tridant लाति० tri-dens, आं० trident (त्रिशूलम्) ।

सं० चतुष्पादः catuṣpādas, लाति०, आं० quatropad. हि० चौपाया ।

सं० शतपद śatpad, लाति० cent-pēs.

सं० अष्टापदः aṣṭāpadas, ग्रीक oktō-pous.

**४८. अलुक् समासः**

एतादृशाः शतशः सङ्ख्यापूर्वपदाः समस्ताः शब्दाः सर्वासु सजातीयासु भाषासूपलभ्यन्ते । 'अष्टापद' इत्यत्र द्विवचन विभक्तेराकारः सुरक्षितः । अतएव अलुक् समासस्येदमुदाहरणम् । एवमेव—

सं० दम्पती[1] dampatī < दमस्-पतिः > ग्रीक des-potis, आं० despot, despotism (संस्कृते दम शब्दस्याकारो लुप्तः, परं ग्रीक्यां मकार एव लुप्तः, किन्तु षष्ठिविभक्तेः 'अस्' इत्यस्य सकारः सुरक्षितः । एवं ग्रीक्यामिदमलुक् समासस्योदाहरणम्) ।

---

१. सं० दम्पतीत्यस्य निर्वचनं कुर्वता पाणिनिनोक्तं यज्जाया च पतिश्च इति दम्पती, अत्र जाया शब्दस्य दम् भावो विहितः । एषा तु क्लिष्टकल्पना एव । यतो हि वेदे गृहार्थको दम शब्दो विद्यते, परं लौकिकसंस्कृते शब्दोऽयमप्रयुक्तः । मोनियर विलियम विरचिते A Sanskrit English Dictionary इति कोषे 'दम्पती' इति शब्दस्यार्थः तस्य जायापति इत्यर्थे प्रयोगश्च स्पष्टीकृतः । तद्यथा—दम्पती—the lord of the house, taken as dvandva and dam in the sense of wife. 'the two masters', husband and wife.

श्रीसूर्यकान्त महोदयेनापि स्ववैदिककोषे तदनुसृत्य दम्पतिशब्दस्य 'गृहस्वामि' lord of the house इत्येवार्थः प्रदत्तः । परं तस्य द्वन्द्वसमासे प्रयोगस्तु नैव स्पष्टीकृतः ।

आङ्ग्ल्या domestic सदृशेषु शब्देषु वैदिकोऽयं गृहार्थको दम शब्दोऽधुनापि सुप्रचलितः। अपि च पति पत्नी चोभावपि गृहस्य पती भवतः द्वन्द्वसमासेनापि च संस्कृते दम्पतीति द्विवचनरूपं प्रयुज्यते। परं ग्रीक्यामयं despot, despotes शब्दः[1] पत्यर्थक एवास्त्यतएव पुंसि प्रयुज्यते।

सं० नावाजः nāvājas (नावा-नौकया अजति गच्छति इति नावाजः), लाति०, आं० nāvigō, navigate,-tion इत्यप्येतस्मादेव।

सं० नक्तंचरः naktancaras तद्वदेव नक्तंगायः (नक्तं-रात्रौ गायति इति), आं० nightingale[2] अत्र √गै धातुना सह ल प्रत्ययो जातः। अस्यार्थस्तु नक्तंगाय एवास्ति।

सं० नृम्णः nṛmṇas<नृ-मनस् (manliness), ग्रीक andro·mēnēs, फारस्यां सुप्रयुक्तो नरिमन, नारिमन् इति संज्ञाशब्दोऽप्येष एव।

सं० कदर्थ kadartha (किमर्थम्) अत्र 'कद्' इति किमर्थको निपातः। लातिन्यामेष 'कद्' एव quod आंग्ल्याञ्च what इति रूपमापन्नम्।

यथा वेदे 'मित्रावरुणा' सदृशेषु शब्देषूभयत्र द्विवचनस्य आ विभक्तिर्विद्यते तथैवावेस्तायामपि 'अहुरामज्दा', 'अहुरामिथ्रा' इत्यादि शब्देषु पूर्वपदेऽपि द्विवचनस्य आ विभक्तिर्विद्यते।

४६. **अत्रेदं वैशिष्ट्यम्—**

संस्कृते 'अत्' (शतृ) प्रत्यययुक्तपूर्वपदेन सह बहुव्रीहिसमासस्य वेद एव कानिचिन्नामान्युपलभ्यन्ते। यथा—

भरद्वाजः, जमदग्निः<गमदग्निः। परं पारस्यामेतादृशाः समस्ताः संज्ञाशब्दाः बाहुल्येनोपलभ्यन्ते। यथा—

---

१. despotes : a word which is its greek form, meant master or lord.
an absolute ruler, a tyrant. Sh. Ox. Eng. Dic.

२. a small reddish-brown or tawny migratory bird, celebrated for the sweet song of the male heard by night during the breeding season. Sh. Ox. Eng. Dic,

सं० धारयद्वसुः>फा० दारयबहु (पश्चा'द्दारा' इत्येव जातः)।

सं० विशिताश्वः, फा० विस्तास्प (नव्य फारस्यां एष एव 'गुस्तास्प' इति जातः, यतो हि फारस्यां सर्वत्र पदाद्यो बकारः गकारे परिणमति। यथा सं० वज्रम् >फा० गुर्ज इति)।

एवमेव शतशोऽथ सहस्रशः समस्ताः संस्कृतशब्दाः सर्वासु सजातीयासु भाषासूपलभ्यन्ते, परमेकं परोक्षवृत्तिकमांग्लजार्मण्यादिषु भाषासु प्रचलितं शब्दमुदाहृत्य प्रकरणमिदं समापयामो ग्रन्थविस्तारभयात्। world जगदर्थकः आंग्ल्या world जर्मण्याश्च welt इति शब्दो विद्यते। आपातत एष शब्दोऽव्युत्पन्न इव प्रतीयते परमस्य शब्दस्यापि संस्कृताश्रयेण व्युत्पत्तिः प्रदर्शिता। वस्तुतोऽयं समस्तः शब्दोऽस्ति। अस्य पूर्वपदं आंग्लभाषाया wor जर्मण्याश्च wel इत्यस्ति। द्वावेवेमौ शब्दौ सं० वीरः, लाति० viros (नरः) इत्येव स्तः। उत्तरपदं जार्मण्या alt आंग्ल्याश्च old इत्यस्ति। एष आल्ट alt शब्दश्च सं० √अल् गतौ वृद्धौ च इत्यस्मात् क्त प्रत्यययोगेन निष्पन्नः। सं० अलित>जा० alt>आं० old. एवं० आं० world जा० welt इत्येतयोरुभयोरपि शब्दयोर्वीरस्य (नरस्य इति यावत्) अलितं-गतं, गमनं आयुरित्याकूतं विद्यते। (संस्कृतस्य जगच्छब्दोऽपि √गम् धातोरेव निष्पद्यते) एवं परोक्षवृत्तिकोऽयं आं० world[1] शब्दः संस्कृताश्रयेण व्युत्पादितः। अत्र सं० वीर, लाति० विर इति नरार्थकस्य शब्दस्य प्राण्यर्थेऽर्थविस्तारः। एवं वीरस्य गमनस्थानं सञ्चरणस्थानमथवा नरस्यायुषो निर्धारकमित्यर्थोऽवगम्यते world इत्यस्य संस्कृताश्रयेण।

**५०. द्विरुक्ताः संज्ञा**

संस्कृतस्यानेके द्विरुक्तसंज्ञाशब्दा अपि नाना सजातीयभाषासु प्रचलिताः सन्ति। यथा हि—

सं० बम्भरः bambharas भ्रमरः bhramaras, (भृंगः), ग्रीक pemphr-e-don.

सं० ततः tatas, ग्रीक tē-thē (मातामही), लिथ० de-de (पितृव्यः), रूसी-dedu (पितामहः), आं० dady, हि० दादा अप्येष एव।

---

१. world=wer-man+eld=age=human existence, a period of this. Sh. Ox. Eng. Dic.

सं० कर्कटः karkaṭas, ग्रीक kar-kinos, लाति० आं० can-cer.

सं० मर्मरः marmaras, ग्रीक आं० mur-mur.

सं० कर्करः karkaras, लिथ० kan-kal-a-s<सं० कङ्कणिः, कङ्कणम् ।

सं० चक्रम् cakram, अवे० चख्रम्, ग्रीक kuklos, लाति० आँ० circle आं० cycle, wheel. हि० फा० चर्ख ।

सं० दध्रिः dadhris (साहसं, उत्साहः), अवे० za-zar-am, फा० जज़र ।

सं० सस्मार sasmār, लाति० me-mor, आं० memory, memorandum,mamoir.

**अत्रेदं वैशिष्टचम्**

संस्कृतस्य 'सस्मार' इति लिटि रूपे अभ्यासमकारो लुप्तः सकारश्चावशिष्टः, परं लातिनांग्लादिषूभयत्र सकारो लुप्तः ।

सं० तित्तरिः tittaris, ग्रीक te-trix, लिथ० te-tervina-s रूसी० te-treve, फा० तिदरवाँ, हि० तीतर ।

सं अरालम्ः अत्र 'अर्' अल् इति द्वावेव कुटिलार्थकौ निपातौ यथा आं० albow इत्यत्र al अपि कुटिलार्थक एव' ।

**५१. निपातोपसर्गाव्ययादयः**

ये खलु निपाता उपसर्गा अव्ययादयश्च संस्कृते प्रयुज्यन्ते तेषु भूयांसोऽन्यास्वपि सजातीयासु भाषासु तेष्वेवार्थेसु प्रचलिताः सन्ति । तेषु प्रभूता निपातादयः पूर्वमेव यथा प्रसङ्ग प्रदर्शिता अग्रेऽपि च प्रदर्शयिष्यन्ते । अत्र तेषां पौनरुक्त्या ग्रन्थविस्तार एवाभविष्यदतस्तेऽत्र नात्र निर्दिष्टाः । तत्र तत्रैव दृष्टव्यास्ते इति ।

इति ध्वनिपद—नामाख्यातोपसर्गनिपातकृत्तद्धित
समासादिविषयकं पूर्वार्धं सम्पूर्णम् ।

चतुर्थं प्रकरणञ्चापि समाप्तम् ।

संस्कृतस्याथवा तस्याः प्रकृत्या हि समुद्गताः ।
यूरोपीयासु भाषासु शब्दाः सन्ति सहस्रशः ।।

# मनुष्यवर्गः

## मानवो नारी च Man and Woman

सर्वासु सं० सजातीयासु भाषासु मातृपितृभ्रातृसदृशाः सर्वेऽपि परिवारवाचकाः संस्कृतशब्दा एव इति तु सुविदितमेव। परं परिवारस्तु मनुष्यस्यैव भवत्यतः प्रथमं मनुष्यनामान्याह।

१. सं० मनुः, आं० man. मनुः, मानुषः, मर्तः, मर्त्यः, जनः, पुरुषः नरः पुमांश्चेत्येषां मानवपर्यायैः सह वीरः, वयस्, क्ष्मन् इत्यादयोऽन्येऽपि शब्दा मनुष्यार्थे प्रचलिता नानायूरोपीयासु भाषासु।

सजातीयभाषासु समानरूपेण प्रयुक्तानि संस्कृतमनुष्यनामानीमानि सन्ति—

(क) √मनु manu अवबोधने[1] इति प्रकृत्या 'उ' प्रत्यययोगेन मानवार्थको मनुः शब्दो निष्पद्यते। यतो हि समग्रेषु प्राणिषु मनुष्य एव मननशीलोऽस्त्यत एवायं मनुरित्युच्यते। संस्कृत ईरान्यासु च 'मनु' इत्यस्य मनुष्यविशेष आद्यमनुष्यरूपेण प्रसिद्धे पुरुषे वार्थसङ्कोचो जातः, परं यूरोपीयासु वाक्षु 'मनुः' स्वीये पुमानिति यौगिकेऽर्थे एव प्रचलितः। आंग्ल्यादिषु युरोपीयासु ईरान्यासु च पदान्तगा अ, इ, उ इति स्वरत्रयी घृष्यतेऽत एव सं० मनु manu आंग्ल्यां man इति जातः। अयञ्च मनुशब्दो नैकासु युरोपीयासु विशेषतो जार्मण्य (ट्यूटानिक) वर्गीयासु जर्मनांग्ल्यादिषु स्लाववर्गीयासु च वाक्षु सुप्रचलितः। यथा —

अपि चाधुनिकासु भारतीषु तु 'सिन्ध्यां' पार्वत्याञ्च 'माणु' इति रूपेण, मराठी मानुस, राज० हिन्द्याञ्च 'भलामानस' (मानुषः) इति समस्तरूपे चोपलभ्यते।

(ख) सं० वीरः viras, लाति० viros.

वि० पूर्वकात् √ईर् कम्पने इति धातोरयं शब्दो निष्पाद्यते। यतोह्ययं स्व-

---

१. पूर्वं तावत्प्राणधारणार्थको √मन् धातुरासीत्पश्चाच्चावबोधानार्थकोऽयं जात इति केचिद्।

शत्रून् सिंहादीन् हिंस्रजन्तून् विशेषेण ईरयति—कम्पयत्येतदेव वीरस्य वीरत्वम्। संस्कृते वीरशब्दस्य 'बलवान् पुरुषः' इत्यर्थसङ्कोचो जातो। वेदे चायं पुत्रार्थेऽपि प्रयुज्यते। यथा हि—

युवास्य यजमानस्य वीरो जायताम् । (यजुर्वेदे)

पंजाबीराजस्थानीहिन्द्यादिष्वयं 'वीरा शब्दो भ्रात्रर्थे प्रयुज्यते। पंजाब्यान्च 'वीरजी'ति प्रेम्णा सम्माने च सम्बुद्ध्यते। लातिनलिथ्वान्यायरीयावेस्तिकाद्यन्यास्वनेकासु भाषास्वयं vir शब्दो मनुष्यवाचक एव।

(ग) सं० वयस् vayas (वयस्क) एव लातिन्यां नरार्थको vir इति जातः इत्यपि निरुच्यते।

(घ) सं० मर्तः (त्यः) martas, ईरानी मर्द marda.

सं० √मृ, मर् mar इति प्रकृत्या त प्रत्यययोगेन वैदिको मर्त इति, 'त्य' प्रत्यययोगेन च लोके वेदे चोभयत्र प्रयुक्तो मर्त्य इति च जायेते। वै० मर्त एवेरान्यां मर्द इत्युच्यते। आंग्ल्यादिषु युरोपीयासु तु mortle (मरणधर्मा), immortle (अमर्त्यः) इत्यादिषु गौणरूपेष्वायमुपलभ्यते। यतो हि देवास्त्वमर्त्याः, परं मानवो मर्तो (मरणधर्मा) अत एवायं 'मर्त' इत्युच्यते। हिन्द्यां मर्द वीरार्थकः पत्यर्थकोऽपि च विद्यते।

(ङ) सं० पुरुषः puruṣas, आं० person. संस्कृतांग्ल्योरेतौ द्वौ शब्दौ समानावेव। संस्कृते रेफसान्निध्यात् सकारो मूर्धन्यः षः ṣ जातः।

(च) सं० नरः, ग्रीक anēr (प्र० ए० व०), andros (ष० ए० व०), नवग्रीक āntras, उम्बे० nera (विशिष्टोऽधिकृतो वा नरः), लाति० nero, nerio वेल्स ner, फा० नेरवी (शक्तिः), हुनर <सं० सुनरः, (सुनरत्वम्, कलार्थे सङ्कोचो जातः)। नरमादेत्युभौ पुं० स्त्रीवाचकावपि फारस्यां प्रयुज्यते।

(छ) सं० जरन्त jarnta (वृद्धपुरुषः) <*$g_y$ront> ग्रीक gerōn, जा० kerd (यौवनापन्नः पुरुषः) karl brughman सदृशेषु समस्तशब्देषु विद्यमानः karl ऽप्येष एव।

(ज) सं० क्ष्मा kṣhmān (वै० पृथ्वीः), आं० human. इत्यस्य आं० man इत्यनेन नास्ति कोऽपि सम्बन्ध। अपितु संस्कृते यथा पृथिव्या

सम्बद्धः पृथुः (व्यक्तिविशेषस्य नाम) यथा च तत्ताद्धितं रूपं पार्थिवः (यौगिकोऽर्थस्तु पृथिव्याः पुत्र इत्येवास्ति, परमस्य नृपार्थेऽर्थसङ्कोचो जातः) तथैव वैदिकस्य पृथ्वीवाचकस्य क्ष्मा, क्ष्मन् इत्यस्यांग्ल्यां human, फ्रेंचभाषायाञ्च homme, स्पेन्याञ्च hombre इतिरूपेण मानवार्थेऽर्थसङ्कोचो जातः। (सं० भारोपीयश्च ककारः खकारो भूत्वा हकारे परिणमतीति तु पूर्वमेव ध्वनिनिरूपणप्रकरणे विशदीकृतम्)।

(झ) सं० मुष्क muṣk शब्दस्य स्लावीयवर्गे नरपशुः इत्यर्थोऽस्ति। तेनैव muṣk शब्देन lin प्रत्यययोगेन लातिन्या आंग्ल्यामागतः पुंलिंगवाचकः mesculin शब्दो निष्पन्नः। एवम् आंग्ल्याः पुंलिङ्गवाचको mesculin स्त्रीलिङ्गवाचकश्च feminin, इत्युभावपि शब्दौ संस्कृतप्रक्रितजौ स्तः। एषां व्युत्पत्तिरपि कुत्रचित्प्रदर्शिता। अत्रेदमवधेयं यत्संस्कृतस्यइत्युभावपि समस्तौ शब्दौ। आं० mesculin शब्द एवमपि निष्पाद्यते—यथा सं० 'पुं-लिङ्गम्'। इत्यत्र 'पुमान्' इत्यस्य पूर्वपदं 'पुम्' इत्येवास्ति तथैवांग्ल्या mesculin इत्यत्र 'पुमान्' इत्यस्य द्वितीयपदम् मान्स (बहुवचनरूपं) इत्येव विद्यते। अत्र हि 'मान्स' mānsa शब्दस्यानुस्वारो लुप्तः culin (त्र) इति प्रत्ययश्चागतः, परमेषा निरुक्तिस्त्वतिपरोक्षवृत्तिकैवेति प्रतिभाति।

सं० पुमानेव लातिन्यां pūbas इत्यस्ति। एवं ज्ञायते यन्मानुषजनवृषमर्त्यनरपुमान्वीरादयो मनुष्यवाचकाः संस्कृतशब्दाः समस्तास्वपि यूरोपीयात्त्वीरान्यासु च प्रचलिताः सन्ति।

(ञ) सं० जनः janas, आं० gender. √जनि (प्रादुर्भावे) इति धातोर्निष्पन्नः जन आंग्ल्यां त्र प्रत्यययोगेन gender इति परिवर्धितं रूपम्। एतच्चांग्ल्यां जननेद्रिय वाचकं तथैव जातं यथा संस्कृते पुंलिङ्गम्। सं० जनः <*gᵥenos> ग्रीक genos लाति० genus यथा गौरित्यस्य गकारस्य ककारे परिणत्या cow काउ इति जातस्तथैव सं० जनो गणो वांग्ल्यां kin इति जातः। एष च किन शब्दः kith and kin इति वाग्धारायां सूपलभ्यते। अस्मात्स्वार्थिक त>द d प्रत्यययोगेन जार्मण्या वत्सवाचकः kind इति रूपं निष्पन्नम्।

(ट) सं० √ ऋष् ṛṣ, √वृष् vṛṣ (वीर्य) सेचने धातोर्निष्पन्नौ वृषन् (अण्डकोशौ, अण्डकोशयुक्तो वृषभो मनुष्यश्च), वृषभः, ऋषभः इत्येतौ पुरुषवाचकौ शब्दौ स्तः, परमेतयोः शब्दयोर्बलिवर्दे पुरुषविशेषे च (आद्यतीर्थंकर इति यावत्) अर्थसङ्कोचो जातः।

सं० वृषः vṛṣas, ग्रीक hersen, arsenikos (अत्र स्वार्थे कः प्रत्ययः), अवे० अर्शन्, फा० कुशन ग्रीकेरानीयशब्दानां पुंसि, पुंलिङ्गेऽथ च स्त्रीपुंसोर्मिथुने चार्थसङ्कोचा जातः । वृष्, ग्रीक hersē (अवश्यायः dew) ।

## २. अथ नारीनामानि

समस्तासु भारोपीयासु भाषासु नानाप्रकृतिजाः स्त्रीवाचका एते संस्कृतशब्दाः प्रचलिताः सन्ति ।

सं० वै० ग्नाः gnās जानि, धेनाः (वै० √धेट्), वीर (लाति० vir), भार्या स्त्री, नारी। इति सप्तप्रकृतिकाः स्त्रीवाचकाः संस्कृत शब्दा युरोपीयासु वाक्षु प्रचलिताः ।

(क) √जन् jan<*g$^w$en इति धातोर्निष्पन्नो वै० ग्नाः, ग्रीक gyne गैने ।
सं० ग्नाः gnās (वे०), जानि (पत्नी), ग्रीक gynē गैने ।
वेदे ग्ना इति शब्दस्य देवपत्नीष्वर्थसङ्कोचो जातोऽतो विपरीतमांग्ल्या queen शब्दस्य सम्राज्ञी इत्यर्थो जातः । उभयत्रार्थसंकोचेन सहार्थोत्कर्षोऽपि दृश्यते-डेन्यां kone पत्न्यर्थको जातः । नवग्रीक्याश्च gynaika इत्यत्र स्वार्थे ककारागमः ।

सं० जानि jāni, जनिः (समास एव प्रयुक्तः) वत् स्लावोनिक्यां zena अवे० zani, पारस्यां च ज़न इति सर्वत्र गकारस्य तालव्यीकरणं जातम् । गाँथिक्या qino, qins पत्नी, आर्मे० kin, पु० नार्वे० kone, पु० उ० जा० quena पु० प्रश० genna इत्यादिषु कण्ठ्यो ध्वनिः सुरक्षितः ।

(ख) सं० √धेट् पाने, धातोर्यथा धयति इति धिता (वै०) धेना (वै०) धेनुः शब्दा निष्पाद्यन्ते, तथैव यूरोपे फ्रेञ्च femma (स्त्री पत्नी च), female, लाति० fēmina, इता० femmina, femineo, feminine सदृशाः शब्दा धकारस्य फकारेण निष्पद्यन्ते । अथ च परिवारवाचकः family शब्दोऽप्यस्यैव ताद्धितं रूपम् । फकारस्त च वकारोच्चारणेन च एषा फैमिनैव woman (विमेन इत्युच्चार्यते) जातः ग्रीक्या thēlus-female, thēlukos (स्वार्थे क प्रत्यययुक्तं रूपम्) स्त्रीसदृशं रूपम् इत्यादि शब्देषु धकारस्य थकारो जातः । सं० धेट् धातुश्च तत्र thēsathai इति जातः ।

यतो हि सा धीयत अत एव सा धेना आं० फेमिना वेत्युच्यते ।

## मानवपरिवारः family

१. संस्कृते विद्यमानाः संस्कृतप्रकृतिजा वा परिवारवाचकाः शब्दा अन्यास्वपि भारोपीयासु भाषासु प्रचलिताः सन्ति। यथा हि—

(क) आं० wife, पु० नोर्स०, पु० आं० bīf, wīfman, जा० weib सदृशा नैके शब्दाः लातिन्या virgo (कन्या इत्यस्माज्जाता), एषा च virgo <virago (man like female) इत्यस्य रकारलोपेन गकारस्य च फकारे परिवृत्त्या जाता। नरार्थकश्च लातिन्या vir शब्दः स्त्रीलिंगमवाप्य तथैव कन्यावाचकः प्रबलमहिलावाचको वा जातः यथा संस्कृते नर शब्दस्य संस्कृते नारीति स्त्रीवाचकं पदं जायते। लातिन्या आंग्ल्यामागतः कन्यावाचको virgo शब्दः कन्याराशीत्यर्थसङ्कोचमवाप्तः। आं० virgin (कन्या) अप्येष एव।

(ख) सं० भार्या bhāryā, डच० vrouw (स्वामिनी, नारी च), जा० frau (फ्राउ<सं० भार्या) एषा च ग्रीक phero शब्देन सम्बद्धा।

(ग) सं०, अवे० स्त्री stri, अवे० स्त्रशथ्री।

(घ) सं० नारी nāri, अवे० नाइरी। तथैव लाति० वध्वर्थको nūbere (अवगुण्ठनम्, अवगुण्ठनवती च)वस्तुतो nubus सं० नभस् (मेघ) एवास्ति। यतो हि सा पाणिं ग्राहयित्वा प्रदीयतेऽतः च० स्लावीयायां vu-dati इत्युच्यते।

(ङ) सं० सयुज् sayuj एव ग्रीक्यां suzugos इत्यस्ति।

(च) सं० पत्नी patni, ग्रीक potnio (स्वामी)।

(छ) पोलीयस्लावीयाद्यासु वाक्षु नववधूकृते niewiasta, अथ च nevesta सदृशाः शब्दा दृश्यन्ते। एतादृशाः शब्दा अपि संस्कृतप्रकृतिजा एव। यतो ह्येतेषां शब्दानां पूर्वपदं निषेधार्थको निपातो 'न' इत्यस्ति। उत्तरपदञ्च विद् धातोर्निष्ठान्तं विद्-त=विस्त इत्येवमस्ति। यतो हि नववधूरपि पूर्वं तावन्न विदिता भवत्येतदेव न विदितत्वम् नेवेस्ताया नेवेस्तत्वम्।

(२) सं० पतिः patis, ग्रीक, आ० despotes<सं० दमस्पतिरित्येवास्त्यस्य रूपम्। यद्यप्यांग्ल्यां पत्यर्थको husband शब्दः प्रचलितस्तथापि सं० पालनार्थकात् पा धातोर्निष्पन्नः पतिः शब्दोऽप्यन्यासु सजातीयभाषास्वप्यवलोक्यते। आंग्ल्यामेष despotes शब्दो दुष्पतिरथवैकाधिकारसम्पन्नः स्वामीत्यर्थेऽर्थसङ्कोचमापन्न इति त्वन्यत्। लातिन्याञ्च potis शब्दो योग्यार्थे प्रयुज्यते।

(ख) सं० मे दमः me damas, आं०, फ्रें० medam (आंग्ल्यां मेडम फ्रेञ्च भाषायाञ्च 'मदाम' इत्येवोच्चार्यते)।

एवं medam मदाम इत्यस्य यौगिकोऽर्थो मम गृहस्वामिनीत्यस्ति। पूर्वं गृहसेविका एव स्व (गृह) स्वामिनीं medam इति सम्बोधयन्ति स्म। परमधुना महिलानां कृते medam इति सम्मानसूचकः सम्बोधनो जातः।

यूरोपेऽपि 'भार्या' पतिश्च (दम्पती) विद्येते 'स्त्रीपुंसोर्मिथुनं द्वन्द्व'मित्युक्तम्। सं० मिथुन mithun एवांग्ल्यां mutial इति जातः। सं० यमलश्चाग्ल्यां gemini इति।

३. सं० विवाहः, आं० wedding.

संस्कृतसजातीयासु भाषासु विवाहार्थकाः शब्दा अपि विविधाः सन्ति। तद्यथा—

(क) ग्रीक suzugos (पतिः) सं० सयुज् एवास्ति।

(ख) सं० मर्यः, आं० marriage.

वैदिको मनुष्यार्थको युवकार्थको वा मर्यो लोके विस्मृतचरः, परं यूरोपे सुप्रचलितोऽस्ति। सामान्यतो वेदे मनुष्यार्थको मर्यो वध्वाथवा पत्न्या सहैव प्रयुज्यते। क्वचित्प्रत्यक्षतया क्वचिच्च परोक्षतया मर्येण सह योषापि विद्यत एव। यथा हि—

१. मर्यायेव कन्या शश्वचैते[1]।

२. को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ[2]।

सं० कुमारोऽपि 'कुमर्यो' भवति, न तु 'कुत्सितमारः'।

वैदिको मर्यः maryas ग्रीक्याश्च meiraox एक एवास्ति। परं तत्र वैदिक 'युवको' मर्यो 'युवति' मर्या जाता। युवकयुवत्योर्मेलनमेव 'विवाहः'। अत एवां-

---

१. ऋग्वेदः—३-३३-१४।
२. स एव १०-४०-२।

ग्ल्यादिष्वेषा मर्यो ग्रीक meiraox एव विवाहार्थको marriage इति जातः। हिन्द्यादिष्वपि यकारो जकार उच्चार्यते एव।

(ग) सं० विवाहः vivāhas, आं० wed, wedding. आंग्ल्यादिषु wed (धातुः) wedding (संज्ञा) अपि marriage इत्यस्य पर्यायवाचकौ स्तः। आद्य-भारोपीयभाषायां वहनार्थको *√ वेध् vedh प्रवाहार्थको *√ वेघ् vegh इति धातुद्वयमासीत्। यूरोपीयासु भाषासु द्वयमपि पृथक्त्वेन विद्यतेऽद्यापि, स्वं स्वमर्थं ञ्चाभिधत्ते। परं संस्कृते सघोषमहाप्राणानां घधभानां हकार एवावशिष्ट इति तु ध्वनिनिरूपणप्रकरणे प्रतिपादितचरम्। अत एव भारोपीयो वहनार्थको √ वेध् प्रवाहार्थको √ वेघ् चेत्युभावपि √ वह् इति जातौ। परमांग्ल्या wed इति प्रकृतौ wedding इति विकृतौ चोभयत्रापि *√ वेध् सुरक्षितः। किन्तु संस्कृते 'वधू' इति विकृतावेवासाववलोक्यते, प्रकृतिस्तु √वह् इति जाता। संस्कृतकोषेषु √वह् इत्यस्य to bring, to lead, to marry इत्यर्थत्रयं प्रदत्तम्।

(घ) लातिन्या आंग्ल्यामागता विवाहार्थका mātrimonium, matrimonial, स्पेन्या matrimonio सदृशाः शब्दा अपि 'मातृमानिति' संस्कृत-प्रकृतिजा एव। यतो हि विवाहानन्तरमेव कन्या मातृत्वायार्हति।

(ङ) पारस्या आगतः 'शादी' शब्दोऽप्यत्र विवाहस्य पर्यायवाचकत्वेन गृह्यते। सं० सुखार्थकः 'शात' इत्यस्यैव हिन्द्यां स्त्रियां शादी (खुशी) ति जायते।

(च) सं० परिणयः। विवाहे वरो वधूं (अग्निम्) परि-समन्तान्नयति, (परिक्रामति) एतदेव परिणयस्य परिणयत्वम्। राजस्थान्यां परिणयः 'परणना' इति रूपेणाद्यापि सुप्रयुक्तः।

४. सं० पितृ pitṛ, पितर pitar, पिता pitā, आं० father.

सजातीयासु भाषासु पितृवाचकाः शब्दाः प्रकृतिद्वयोद्भूताः सन्ति। तद्यथा—

१. रक्षणार्थकात् पा धातोर्निष्पन्नाः—

(क) सं० पितृ, पितर्, ग्रीक patēr, लाति० pater, स्पेन० padre, आ० father, पु० जा० father, जा० vater, अवे० पितर् फा० पिदर्। एवमेव पु० आइस० (norse), डेनियस्वीडीयाद्यान्यासु जार्मण्यासु भाषास्वपि पकारस्य फकारः तकारस्य च दकारो जातः। फ्रेञ्चभाषायां मध्यव्यञ्जनलोपेन pere इति जातः।

एष सं० पितृ शब्दो भारतेऽधुना केवलं पन्जाब्यां 'पेओ', 'प्यो'। इति घृष्ट रूपेण प्रचलितः। पितर शब्दस्य मृतपितृगणेऽर्थसङ्कोचो जातः।

(ख) पा धातोः क्विप् प्रत्यययोगन निष्पन्नः 'पा' शब्दस्य संस्कृते 'विश्वपाः' सदृशेषु समस्तशब्देष्वेव प्रचलनमवलोक्यते, परं यूरोपीयासु नाना वाक्षु 'पा' इत्यस्य द्विरुक्तं रूपं ग्रीक्यां pappa लातिन्यांग्लफ़्रेन्चाद्यासु papa 'पापा' इति रूपेण सुप्रचलितम्। अस्यैव ध्वनिपरिवृत्त्या इताल्व्यां baboo इति जातः। एष एव हिन्द्यां 'बाबा', 'बाबू' इति रूपद्वये प्रचलितः। हिन्द्या 'बापा' (यथा बापा रावल), बाप[1], बापू (प्रियःपिता), बाबा (पितामह) शब्दा अप्यनेनैव विषमीकरणप्रवृत्त्या जाताः।

(ग) सं० √जन् < $^*g_y en$ धातोर्निष्पन्ना जनक, जनयिता, जननी, (माता) सदृशाः शब्दा एव लातिन्या genitor जेनितोर (जनकः) इतालव्यां च genitori जेनितोरी रूपेषु प्रचलिताः।

(घ) √तनु विस्तारे धातोर्निष्पन्नः पितृवाचकः 'तत' शब्दो वैदिकसाहित्य एव प्रचलितः। यथा ऋग्वेदे

'कारुरहं ततो भिषक् नना उपलप्रक्षिणी'[2]।

यथा च कठोपनिषदि—

पुत्रः (नचिकेता) स्वपितरं वाजश्रवसं पृच्छति—तत कस्मै मा प्रदास्यति? इति[3]।

उभयत्र 'तत' शब्दः पित्रर्थे प्रयुक्तः। परं लौकिकसंस्कृते तु 'ततः' इत्यस्य तदनन्तरं तस्मात्स्थानात् कारणाद्वा इत्यादयोऽर्था अवगम्यन्ते। लोके सर्वथा विस्मृतोऽज्ञातश्च पितृवाचकोऽयं वैदिक स्ततशब्दो युरोपेऽद्युनापि welsh अथ च bretoni भाषयोः tad इति च रूपेण प्रचलित, आंग्ल्यां dad भूत्वा daddy इति जातः। रूमान्यां tatā लिथ्वानियाञ्च tetis इति विद्यते। पितामह इत्यर्थे

---

१. रामचन्द्रवर्मसम्पादिते 'मानकहिन्दीकोषे' 'बाप' शब्दो वप् धातोर्निष्पन्नः इति यदुक्तं तन्निर्मूलमेव।

२. ऋग्वेद—११-११२-३।

३. कठोपनिषद् १-१-४।

ज्येष्ठभ्रातुरर्थे च सुप्रयुक्तः हि० दादा; दद्दा इत्यपि आं० daddy इत्ययैस्व सरूपमस्ति। 'दादा' शब्दोऽनेकत्र पित्रर्थेऽपि प्रयुज्यते। हि० ताया, ताऊ (पितुर्ज्येष्ठभ्राता) इति शब्दावपि वै० पितृवाचकस्ततशब्दादेव निष्पन्नौ। हिन्द्यां स्त्रीत्वविवक्षायां 'ताई' इति शब्दोऽपि जायते।

वै० ततशब्दान्निष्पन्नस्य 'तात' शब्दस्य संस्कृते पित्रर्थे प्रयोगबाहुल्येऽपि पूर्वं भ्रात्रर्थे पुत्रार्थे चार्थविस्तारो जातोऽत एवायं प्रियार्थक इति मन्यते।

सं० पापा > हि० बाबा> बब्बा इत्यस्य पूर्वव्यञ्जनस्य बकारस्य लोपेन पारस्यादिषु अब्बा इति जातस्तथैव मराठ्यां अप्पा यथा अप्पा साहेब इति रूपं प्रचलितम्।

(ङ) एवमेव पूर्वं वै० 'तत' शब्दः स्त्रीवाचक आ प्रत्यययोगेन लिथ्वान्यादिषु tetā, aunt इत्यर्थको जातः। आद्य तकारलोपेन च सं० अत्ता (माता, ज्येष्ठाभगिनी वा), गॉथ० atta आंग्ल्याञ्च अनुस्वारागमेन aunt इति जातः। फ्रेञ्च भाषाया tante, स्पेन्या tia (तु० हिन्द्या ताई), लिथ० teta, पु० बुल्गा teta रूपस्यामथ च बाल्टोस्लावर्गीयसार्बोक्राटिनीयभाषायां सं० 'अत्तिका'वत् tetka तेत्का इति स्वार्थे ते प्रत्ययान्तं रूपजातं विद्यते। डच भाषायाञ्च आंग्लवत् tante इति सानुनासिकं रूपं प्रचलितम्, यत्र च तकारोऽप्यवशिष्टः।

५ **सं० मातृ** mātṛ, **मातर्** mātar, **आं०** mother—मातृवाचकाः शब्दा अपि नाना प्रकृतिजाः सन्ति। यथा (क) √पा धातोर्निष्पन्नः पितृशब्दो नाना सजातीयासु भाषासु विद्यते तथैव √मा इत्यस्मान्निष्पन्नो मातृशब्दोऽपि। यथा च स्वपरिवारस्य पालनं संरक्षणं च पितुः प्रमुखं कर्तव्यं तथैव गृह आवश्यकवस्तुन परिमाणं (कस्य वस्तुनः आवश्यकता अस्ति, किं च विद्यते इत्येतदवधारणम्) मातुःकर्त्तव्यम्। एतदेव मातुर्मातृत्वम्। ग्रीक mētera, लाति० māter, इताल० madre, स्पे० madre, स्कैण्डेनेविया moder, जा० mutter, लिथ० motyna, mote (पत्नी), रूसी mat, लेटिश matē, पु० बुल्गा० mati, अवे० मातर, फा० मादर इति नाना मातृरूपाणि प्रचलितानि सन्ति।

(ख) यथा पा धातोः पालनार्थकस्य 'पा', तस्य द्विरुक्तं रूपञ्च 'पापा' इति विद्यते, तथैव मा धातोः क्विप् प्रत्यययोगेन 'मा', तस्य च द्विरुक्तं रूपं mam, mama इता० mamma इत्यादयो विद्यन्ते। संस्कृते 'मा, इत्यस्य लक्ष्म्यर्थेऽर्थसङ्कोचो जातः, परं हिन्द्यादिषु मात्रर्थे 'मा' इत्येव प्रयुज्यते। इता० mamma

फ्रेञ्च mama, आं० mamma सदृशाः मा इत्यस्य द्विरुक्तसंज्ञाः सर्वासु युरोपीयभाषासु प्रयुज्यन्ते। भारते प्रचलिता आं० मम्मी अपि मा इत्यस्यैव द्विरुक्तं रूपम्। ग्रीक्यां mammē, लातिन्याञ्च mamma इत्येतौ मातामही grand-mother इत्यर्थे प्रयुज्येते।

हिन्द्या 'मासी'शब्दोऽपि मा-स्वसा इत्येवास्ति (न तु मातृ-स्वसा) लिथ्वान्यां मौसा इति शब्दो पितृ-स्वसा (हि० भुआ) इत्यर्थ प्रयुज्यते। lettic भाषायां च māsa इति शब्दो भगिन्यर्थे प्रचलितः। पु० जार्मण्यां muoma जार्मण्यां च muhme इत्येतौ शब्दौ aunt, niece, cousin इत्याद्यर्थेषु प्रयुज्येते। ग्रीक्याः पारस्याश्च मात्रर्थको अम्मा शब्दः, आइसलैण्डीयभाषायां grand mother इत्यर्थे प्रयुज्यते।

सं० मातुलशब्दो 'मा' प्रकृत्या 'तुल' प्रत्ययेन निष्पन्नः, किन्तु हि० 'मामा' मामीत्यत्र प्रकृतेः पौनरुक्त्यम्।

(ग) सं० नना (वै०), आं० nun. मात्रर्थको वैदिको 'नना' शब्दो भारोपीयभाषासु स्वीयं महत्त्वातिशयं बिभर्ति। यतो ह्यस्य रूपाणि युरोपीयासु भाषासु तूपलभ्यन्ते, परं संस्कृते केवलं वेदे, तत्रापि च ऋग्वेदस्यैकस्मिन्नैव मन्त्रेऽयं 'नना' शब्द उपलभ्यते।

'कारुरहं ततो भिषक् नना उपलप्रक्षिणी।'

इति मन्त्रस्तु पूर्वमेवोद्धृतः। एषो 'नना' शब्दश्च मन्त्रमिमं विहाय नान्यत्रोपलभ्यते।

तथापि—

**'भाँत-भाँत की बानगी पूत जण्या रे नानकी।'**

इति राजस्थान्या मेवाड़ीविभाषायां प्रचलितायां लोकोक्त्यां 'नानकी' शब्दस्य सामान्यतो 'नानी'-नन्ही बच्चीत्यर्थोऽवगम्यते। परं यतो हि कापि 'नन्हीं बच्ची' कदापि पुत्रं जनयितुं न प्रभवत्यतोऽत्र 'नानकी' शब्दो मात्रर्थक इति तु स्पष्टमेव। एष च 'नानकी' शब्दः प्रत्यक्षतो वैदिको 'नना' शब्द स्वार्थे 'क' प्रत्यययुक्तोऽन्तेचास्य स्त्रीवाचक 'ई' प्रत्यय आगतः।

अथ च मातुर्मात्रर्थे प्रयुक्तो हिन्द्या 'नानी' शब्दोऽपि वै० 'नना' शब्देनैव सम्बद्धः। अस्य मातुर्माता इत्यर्थस्तु तथैव जातो यथा पित्रर्थकाद् वै० 'तत'

शब्दान्निष्पन्नस्य हि० दादा इति शब्दस्य हिन्द्यां पितामह इत्यर्थो जातः। परं 'तत' इत्यस्य प्रतिरूपमेव आं० daddy इति तु पित्रर्थक एव। ग्रीक nānna (aunt), nēnos (uncle) इता० nonna (grandmother हिन्द्यां 'नानी' इति जातः), ग्रीक annis, लाति० anus (वृद्धा स्त्री) इत्यादयो नैके शब्दा वै० 'नना' इत्यस्यैव प्रतिरूपाणि विद्यन्ते। अपि चांग्ल्या ख्रिस्टीय मतावलम्बिनी भिक्षुणीत्यर्थे रूढो nun इति शब्दोऽपि मात्रर्थकः एव। यतो हि nun अपि शिशूनामन्येषाञ्च मातेव भवत्यतो nun शब्दस्य भिक्षुण्यर्थेऽर्थ-सङ्कोचो जातः।

(घ) सं० जनयित्री, लाति० genitor, इता० genitori.

(ङ) सं० अत्ता, अत्तिका (ज्येष्ठाभगिनी माता च) स्लाव० otici, हित्ती attas, पु० उ० जा० atto, गॉ० atta आं० aunt सादृशा नैकाकृतयोऽत्ताशब्द-स्यावलोक्यन्ते।

६. सं० सूनुः sūnus, आं० son.

संस्कृतसजातीयासु भाषासु पुत्रार्थकाः शब्दा निम्नस्थे वर्गत्रये विभक्ताः सन्ति—

(क) √सु su धातोर्निष्पन्नाः, (ख) √पु pu धातोर्निष्पन्नाः, (ग) √जा jā धातुजा अन्ये च

(क) सू, सु (षूङ् अभिषवे, षूञ् प्राणिगर्भविमोचनयोः)। अनयोरन्यतरेण धातुना सह प्रत्यययोगेन पुत्रार्थका नैके शब्दा निष्पद्यन्ते। यथा हि—

√सू sū प्रकृत्या सह नु प्रत्ययेन सं० सूनुः sūnus शब्दो जायते। su, ग्रीक huios, लाति० sum, गॉ० sunus, zoon, पु० उ० जा० sun, जा० sohn, लिथ्वा० sunus, बुल्गा० syne, रूसी, पोल० syn अवेस्तायां 'हून्' शब्दो कुपुत्रार्थे रूढः। अपि च—

'सूनुः सुतेऽनुजे सूर्ये'

इति कोषवचनेन संस्कृते सूनु रिति शब्दस्य पुत्रः सूर्योऽनुजश्चेत्यर्थत्रयमस्ति। आंग्ल्या सूर्यार्थकस्य सुनुशब्दस्य sun इति वर्तनी तु भिन्ना जाता, परमुच्चारणन्तु 'सन' इत्युभयत्र समानमेव। (वेदे सूनुशब्दस्य लोके च सुतस्य प्रयोगप्राचुर्यमवलोक्यते)।

(ख) पुत्रः putras, लाति० puer.

√पूञ् पवने धातोः त्र प्रत्यययोगेन निष्पन्नः सं० पुत्रोऽवेस्तायां 'पुथ्र' इति पारस्याञ्च पिसर् इति जातः। ग्रीक pais, लाति० puch filius सदृशा नैके शब्दाः √ पु प्रकृत्या एव निष्पन्नाः।

भारतीयासु भाषासु केवलं पञ्जाब्यामेव 'पुत्र' शब्दो 'पुत्तर' इति रूपेण प्रचलितः। हिन्द्याञ्च 'कपूत', 'सपूत' इत्यादिषु गौणरूपेष्वेवायमवलोक्यते। युरोपे सुप्रचलितः 'सूनु' शब्दोऽपि लोकेऽल्पप्रयुक्त एव, हिन्द्यादिषु तु सर्वथा-प्रयुक्तः। हिन्द्याः 'बेटा' शब्दो 'बटुः' शब्दज इत्यनुमीयते, परमयं बटुशब्दोऽपि 'पटु' शब्दोत्थः, पटुशब्दश्च √पा धातोः तु प्रत्यययोगेन जात इति प्रतीयते। बेटा<बटुः<पटुः।

(ग) सं० जातः jātas, फा० ज़ाद।

जा धातोर्निष्पन्नः संस्कृतस्य पुत्रार्थको 'जात' शब्दो यथा संस्कृते समास एव दृश्यते, तथैव पारस्यामपि सं० प्रजातः>फरज़न्दः, शाहज़ादा सदृशेषु शब्देष्वेवावलोक्यते।

यथा संस्कृते जातः, जातिश्च इति भिन्नप्रत्यययोगेन भिन्नार्थकौ शब्दौ-स्तस्तथैव लातिन्यामपि natus इति पुत्रार्थक, जात्यर्थकश्च nation इति आंग्ल्यामपि सुप्रयुक्तः। फ्रेञ्चभाषायाः पुत्र्यर्थकः fill <लाति० puella, puer, सदृशाः शब्दा अपि √ pu प्रकृत्या प्रत्ययभेदानिष्पन्नाः।

(घ) सं० अर्भः arbhas, आं० orphan.

सं० बालकार्थकस्यार्भशब्दस्यांग्ल्यामनाथबालकार्थेऽर्थसङ्कोचो जातः। अर्यते-शीघ्रं वृद्धिं गच्छतीति अर्भः। एवम् √ ऋ धातोर्निष्पन्नेऽर्भशब्दे संस्कृते स्वार्थे 'क' प्रत्यययोगेन यथार्भक इति जायते, तथैवांग्ल्यो न प्रत्यययोगेन orphan इति जातः। orphenage (अनाथालयः) सदृशास्ताद्धिताः शब्दा अनेनैव निष्पद्यन्ते।

७. दुहितर् duhiter आं० doughter.

दुहितृवाचकाः शब्दाः *√धुध्>दुघ् धातोः तर् प्रत्यययोगेन निष्पन्नाः (ख) धेट् पाने धातोर्निष्पन्नाः (ग) अन्ये च।

(क) सं० √दुघ्<*धुध्-तर, दुहितर्, अवे० दुग्तर, ग्रीक thughter, गॉ०, आं० daughter पु० नार्स docter, जा० tochter, लिथ्वा० dute, बुल्गा० dusti, रूसी doc, फा० दुख़्तर।

हिन्द्यादिभारतीयासु वाक्षु यद्यपि भारोपीयो दुहितृशब्दोऽप्रयुक्तस्तथापि तस्य 'दोहता', 'दोहती' पञ्जाब्याञ्च दो (ह) त्रा, दोहत्री, सदृशेषु ताद्धितेषु शब्देष्वयं सुरक्षितः।

(ख) धिता, (वै०), लाति० fatare पं० धी √धेट् पाने इति प्रकृत्या विविधप्रकृतिभर्युक्ता नानाकाराः शब्दाः प्रचलिताः सन्ति। यथा हि—

पुत्र्यर्थको 'धिता'dhitā शब्दो वेदे एव प्रयुक्तः। पञ्जाब्यां प्रयुक्ते धी (पुत्री) शब्दे 'ता' प्रत्ययो घृष्टः। धयति (दुग्धं पिबती) इति व्युत्पत्त्या यथा वैदिको धिता (धितर्) शब्दो निष्पद्यते तथैवैतदर्थक एव लातिन्या fatare इति शब्दोऽपि। (लातिन्यां सं० तवर्गः पवर्गे परिणमति)। रूमानिया fefa, fel सदृशौ शब्दावप्य-नेनैव सम्बद्धौ। स्पेन्यामेष एव hija इति जातः। अत्र फकारो हकारे परिणतः। रुमान्या 'फेफा', हि० फूफा।

८. सं० भ्रातर bhrātar, आं० brother संस्कृतसजातीयासु भाषासु भ्रातृ-वाचकाः शब्दा वर्गद्वये विभक्ताः।

(क) भरणार्थकाद् भरतेर्भ्रातृशब्दो निष्पद्यते। अनेन ज्ञायते यद् भ्राता एव गृह्यावश्यकवस्तुजातैः गृहं सदा भृतं पूर्णं वा विदधाति। एतदेव भ्रातुर्भ्रातृत्वम्। यूरोपीयासु भ्रातृप्रतिरूपाण्यनेकानि शब्दजातान्युपलभ्यन्ते। यथा हि—

लाति०, फ्रेञ्च frater, जा० bruder, आं० brother, फा० बिरादर, हिन्द्या बिरादरी अस्यैव ताद्धितं रूपम्। पञ्जाब्या 'भ्रा' इत्यत्र प्रत्ययो घृष्टः। हिन्द्यां 'भाई' इत्यत्र च रेफस्तकारोऽपि च घृष्टः। स्पेन्याञ्च भकारजस्य लातिन भकारस्य पकारे रेफस्य च लकारे परिणत्या pertalaपरतेला इति शब्दो निष्पन्नः।

(ख) सगर्भ्यः sa-garbhyas, ग्रीक a-delphos. भ्रातृशब्दो भ्रातृत्वसामान्य-मेव व्यनक्ति न तु सोदरत्वम्। परं ग्रीक्या adelphos संस्कृतस्य सगर्भ्य एवास्ति। ग्रीक शब्दे सं० सकारोऽकारे गकारश्च दकारे परिणतः। भारोपीयो लकारश्च संस्कृते रेफे परिवर्तितः। एवम् सं० गर्भ एव आंग्ल्याम् calf (गोवत्स) इति जातः।

ग्रीक (a) delphos <* गोल्भोस् golbhos > सं० गर्भः > आं० calf. (इत्यत्रार्थसङ्कोचः)।

९. सं० स्वसर् svasar, आं० sister.

स्वसृवाचकाः शब्दा अपि वर्गत्रयगताः सन्ति । यथा हि—

(क) संस्कृतस्य सु पूर्वकादस्तेः (अस भुवि, असु क्षेपणे च स्वसृ-स्वसर् शब्दो निष्पद्यते । आंग्ल्यादिषु सं० सृ sṛ इत्यत्र मध्ये तकारागमो जायते । अतएव सं० स्वसृ शब्द आंग्ल्यां sister इति जातः । एवमेव सृ धातोर्निष्पन्न आंग्ल्या stream शब्देऽपि त (t) कारागमो जातः) । पारस्याः ख्वेहर (ख्वेर) <सं० स्वसर् ।

(ख) सं० समक्षीरा >फा० हमशीरा ।

पारस्या 'सोदरा'र्थे हमशीरा<सं० समक्षीरा इति शब्दः प्रयुज्यते । यतो हि सापि (मातुःस्तनाभ्याम्) समानमेव क्षीरं पबति । एतदेव हमशीराया हमशीरा- (समक्षीरा) त्वम् ।

(ग) सं० भगिनी<*भघ-नी>भगिनी (विषमीकरणप्रवृत्त्या घकारो गकारो जातः । भगिन्येव हि० बहिनी, बहिन, गुज० बेन, पं० भैन (जी) इत्यादि रूपेषु विकृता । भग एश्वर्यशालिनीति व्युत्पत्त्या प्रतिपदितोऽयं संस्कृते तज्जासु च भारतीयभाषाष्वेव प्रचलितः । नान्यत्र दृष्टचरः) ।

१०. सं० नप्त्यः (वै) naptyas, नपात्, नप्ता, नप्तिः आं० nephew (भ्रातृजः) । वेदे सुप्रयुक्त 'नप्त्य' शब्दस्य तकारलोपेन आं० nephew शब्दो निष्पन्नः (it, Ruma-nepot, sp. neto, o. ing. nefa, o. gr. nebo), फा० नवासा, हि नाति सदृशाः सर्वेऽपि शब्दा नप्त्यः (वै०) नप्ता नप्ती सदृशैः शब्दैर्निष्पन्नाः । एवमेव आंग्ल्या niece नीस (भ्रातृजा)<पु० जा० nift इत्यस्माज्जातः ।

११. सं० पितृव्यः pitṛvyas जा० vetter '(फेटर' इत्युच्चार्यते) । ग्रीक patros, लाति० patrus एते सर्वे शब्दाः समा एव ।

विवाहानन्तरं वैवाहिकसम्बन्धेनापि परिवारो विस्तरतामुपैति । अद्यत्व आंग्ल्यां तु भर्तुः पत्न्याश्च सर्वे सम्बन्धिनोऽपि स्वपरिवारवर्गीयसदस्यनामभिः सह in law इति योजयित्वा कार्यं साधयन्ति । यथा हि भर्तुः पत्न्याश्च उभयोरपि भ्राता brother in law इत्युच्यते । परमेतेन नैतज्ज्ञातुं शक्यते यदनेन शब्देन श्यालको वा देवरो वा कोऽभिप्रेतः । यतो ह्युभावपि 'ब्रदर इन ला' इत्युच्येते । परं पुरा सर्वासु युरोपीयासु भाषासु प्रभूता सु चाद्यत्वेऽपि स्नुषा, देवर, श्वशुरश्वश्रू

भ्रातृभार्यादीनां पारिवारिकसम्बन्धिनां कृतेऽपि त एव शब्दाः प्रयुज्यन्ते, ये खलु संस्कृते प्रचलिताः सन्ति । तद्यथा—

१२. सं० श्वशुरः, श्वश्रूः, लाति० socer, socrus. आंग्ल्यां पत्युः पत्न्याश्चोभयोरपि पिताद्यत्वे father in law इत्युच्यते, परं लातिन्यामुपर्युक्तः शब्दो विद्यते। पोलीयस्लावीयासु swieker (श्वशुर) सदृशाः शब्दाः सन्ति ।

१३. सं० देवरः, रूसी dever देवर् ।

सं० देवरशब्दो रूस्यां तद्रूपेणैव प्रचलितः, परं लातिन्यां दकारस्य लकारेण levere इति जातः ।

१४. सं० यातरः, रूसी yater यातेर ।

संस्कृतसजातीयासु भाषासु पत्युः कनिष्ठानुजकृते देवरशब्दः सुप्रचलितः ज्येष्ठभ्राता च हिन्द्यादिषु "जेठ" इत्युच्यते। अत्र "भ्राता" अन्तर्भुक्तः। हिन्द्यादिषु देवरस्य पत्नी "देवरानी" ज्येष्ठस्य च जेठानीत्युच्यते। परं सर्वेषां भ्रातॄणां भार्याणामेकसम्बन्धद्योतनाय हिन्द्यादिषु नास्ति कोऽपि शब्दः, किन्तु रूस्यामस्त्येकः शब्दः, स च संस्कृतस्यैव । संस्कृते भ्रातृवर्गस्य भार्या "यातर" इत्युच्यन्ते ।

**भार्यास्तु भ्रातृवर्गस्य "यातरः" स्युः परस्परम् ।**

इत्यमरकोषे पठितमपि तत्रैवापिहितम् । यातरशब्दो रूस्यादिस्लावीयभाषास्वद्यापि सुप्रचलितः।

१५. सं० स्नुषा snuṣā ग्रीक schnur.

पुत्रवधू कृत आंग्ल्यां daughter in law इति प्रयुज्यते, परं संस्कृते तद्वाचकः स्नुषा शब्दोऽस्ति । स्ना बन्धने इति धातोर्निष्पन्नोऽयं शब्दः सूचयति यत् स्नुषा कुलद्वयं परस्परं बध्नातीति। एषः 'स्नुषा' शब्दश्च पंजाब्यां "नूं" मराठ्यां च सोनेर इत्येतौ विहायान्यास्वधुनिकासु ,हिन्द्याद्यासु नोपलभ्यते। परं लातिनजार्मण्यरूस्यादिष्वयं सुप्रचलितः । तद्यथा—

ग्रीक snos अथवा newfe, लाति० nurus, जा० schnur, रूसी snock. तदेवं लातिन पंजाबी सदृशासु भाषास्वाद्यः सकारः समानमेव घृष्टोऽन्यत्र च सुरक्षित इति । स्नायुः आं० senew शब्दोऽपि स्ना धातोरेव निष्पन्नः। हि० 'नस्' अत्रापि शब्दस्याद्यः सकारो लुप्तः ।

१६. सं० विधवा vidhavā, आं० widow सं० विधुरः vidhuras, आं० widower.

विवाहेन पतिभार्ययोर्युगलं couple जायते। परं दम्पत्योरन्यतरस्य निधने सति जीवितस्यान्यस्य कृते विधवा विधुरश्चेति ये विशिष्टे संज्ञे संस्कृते प्रचलिते स्तस्ते एवान्यास्वपि सर्वासु सजातीयभाषासु विद्येते। वि पूर्वकाद् √धू धातोरिमौ शब्दौ निष्पाद्येते। विधूयते, विधुनोतीति वा विधवा, विधुरश्च[1]। एकत्र "आ" इति स्त्रीप्रत्ययोऽन्यत्र च रः प्रत्ययः। अन्यासु भाषास्वेतयोरेतानि प्रतिरूपाणि सन्ति—

अवे० vidava, लाति० vidua, इता० vedova, फ्रेंच veuree, स्पे० viudu, रूमा० vadua, गॉ० viduwo, डच weduwe, पु० उ० जा० wituwa, ग्रीक withwe, रूसी vedova, फा० बेवा।

एवमेव सं० विधुर आ० widower इत्यस्य सरूपाण्यपि सर्वत्रोपलभ्यन्ते।

१७. सं० जातिः, आं० nation.

यदा समग्रोऽपि मानवपरिवारः सं० सजातीयोऽस्ति, तदा जातिः कथं न स्यात्। आंग्ल्या nation शब्दो लातिन्या natus इत्यस्य परिवर्धितं रूपमस्ति। (संस्कृतस्य "ति" इति संज्ञाप्रत्ययस्य "तु" इत्यस्य चान्त आंग्ल्यां on इति युज्यते। एवमांग्ल्या stay < सं० √स्था इत्यस्यान्ते प्रयुज्यमानः tion वस्तुतः सं० "ति" प्रत्ययस्यैव परिवर्धितं रूपमस्तीति पूर्वमेव स्पष्टी कृतम्)। एवं लातिन्या natus सं० ज्ञाति jnātis एवास्ति। राजस्थान्यादिषु प्रचलिते जात्यर्थके न्यात --("छन्यात" शब्दो ब्राह्मणानां जातिषट्कार्थे प्रयुज्यते) शब्देऽपि उत्पत्यर्थक ज्ञा jnā धातोराद्यो जकारो j तथैव घृष्टो यथा लातिन्याम्। लातिन्या आंग्ल्यामागतादस्मान्नातुस् natus शब्दादांग्ल्या nation शब्दस्य national, international ततश्च nationality सदृशा नैके ताद्धिताः समस्ताश्च शब्दा

---

१. संस्कृत एतयोः शब्दयोः "विगत धवा, वि-धुरः इति च व्युत्पत्तिः प्रदर्श्यते। यतो हि वेदे नास्ति कोऽपि 'धव' शब्दोऽपि चैवं व्युत्पादनेनानयोः शब्दयोः कोऽपि सम्बन्धोऽपि न प्रतीयते। अतः वि-धवा वि-धुरश्चेत्युभे अपि संस्कृते प्रदर्शिते निर्वचने भाषावैज्ञानिकदृष्ट्याऽप्रामाणिके एव।
यास्केन वि पूर्वकाद् √धू धातोरेव विधवा व्युत्पादिता।

निष्पद्यन्ते । आं० cognate, सं० sajnātis सज्ञातिः>सजातिः शब्दे धातोराद्यो भारोपीयो गकारः (सं० जकार.) सुरक्षितः । "शब्दस्य गौण (कृत्ताद्धितेष्विति यावत्) रूपेषु मूलध्वनयः सुरक्षिता" इति नियमेन cognate शब्दे गकारः सुरक्षितः एवमेव आं० know इत्यत्र तु गकारः ककारे परिवर्तितः, परं ignore, recognise सदृशेषु शब्देषु गकारोऽपरिवर्तित एव विद्यते, एतत्तु पूर्वमेव स्पष्टीकतम् । एवमेव native (देशीयः) शब्दोऽप्येतेनैव सम्बद्धः ।

## ३. शरीरमङ्गानि च (आभ्यन्तराणि)

### Human body and limbs (Internal Parts of body)

मानवपरिवारस्य सर्वेषां सदस्यानां संस्कृतनामान्येवान्यासु भाषासु प्रचलिता इति तु स्पष्टं जातम् । अधुना मानवशरीरास्याङ्गानाञ्च यानि संस्कृतनामान्यन्यासु भाषासूपलभ्यन्ते, तदेव प्रतिपाद्यते ।

१. (क) सं० √क्लृप kl!p, kalpa, आं० corps.

लातिन्यां corpus, corp, corps सदृशाः शरीरवाचकाः शब्दाः संस्कृतस्य निर्माणार्थकात् √क्लृपि, सम्पद्यमाने च इति धातोर्निष्पन्ना इति भाषावैज्ञानिकैः प्रतिपादितम् । यतो हि शरीरमपि (मातुर्गर्भे) क्लृप्यते, निर्मीयते वात एवेदं corpus इत्युच्यते । आं० corporal शारीरिक, यथा —corporal punishment सदृशा नैके ताद्धिताः शब्दा एतस्मादेव जायन्ते ।

(ख) सं० तनुः, फा० तन । रूसी tēlo <सं० तलः । आं० thin, (संस्कृते शरीरं सूक्ष्मञ्चेत्युभात्रप्यर्थौ सुरक्षितौ) ।

२. सं० कृत्तिः kṛttis, आं० hide.

शरीरं चर्मणाच्छादितं भवतीत्यतश्चर्मपर्याया अपि सर्वासु भाषासूपलभ्यन्ते । यथा हि—

(क) सं०√दृ, दृतिः, ग्रीक dērma, लिथ्, dirti.

(ख) सं० कृत्तिः kṛtits>लाति० cutis, ग्रीक skutos, आं० hide तत्सम्बद्धाश्च नैके शब्दाः पूर्वमेव निर्दिष्टाः ।

(ऋ इत्यस्यान्यासु भाषासूकारो जायते, अत एव सं० कृत्तिः लातिन्या cutis इति जातः । जार्मण्यवर्गे च ककारः खकारो भूत्वा हकारे परिणमत्यत

एव सं० कृत्तिरांग्ल्यां hide इतिजातः)।

(ग) √स्कन्द् skand (to raise, jump up-words सं० स्कन्न skanna आं० skin. जा० schinden (remove the skin).

(घ) सं० चर्म, carma, लाति० corim स्पेनी० cuero, फ्रेंच cuir फा० चरम, हि० चाम, चमड़ी। (√चृति, कृति छेदने धातोरयं शब्दो निष्पन्नः। वस्तुतस्तालव्यीभावेन। "कृति" रेव "चृतिरिति जाता)।

(ङ) सं० अजिनम्, रूसीkoza.

३. सं० मांसम् mānsam, आं० meat.

सजातीयासु भाषासु मांसार्थकाः शब्दा अपि विविधाः सन्ति। यथा हि—

(क) सं० मांसम् mansam, आं० muscle, (मांसपेशी, पुट्ठा), आ० mescular (मांसल) अप्यस्यैव ताद्धितं रूपम्।

(ख) सं० मेदः, mēdas, > आं० meat.

अत्रेदमवधेयं यन्मेदोऽपि मांससंपृक्त एव भवत्यत एवांग्ल्यां सं० मेदः आं० meat (मांसम्) इति जातः। (आं० me-eat इति यान्यत्र व्युत्पत्तिः प्रदत्ता सा तु कल्पितैव)।

(ग) सं० √प्लु plu, आं० flesh.

लघुकाय एकाक्षरिकोऽपि मांसार्थक आं० फ्लेश शब्दः प्रकृतिप्रत्यययोर्योगेन निष्पन्नः। अत्र हि "फ्ले" इति पूर्वपदं प्रकृतिः। सैषा "फ्ले" प्रकृतिः सं० √ प्लु इत्येवास्ति। अनया खलु प्रकृत्या यथा संस्कृते प्लुत, प्लावित, प्लव, प्लवनम् प्लावनमित्यादयो नैके शब्दा निष्पद्यन्ते, तथैवांग्ल्यामपि float रूस्या plot<सं० प्लुत (क्त प्रत्यययुक्ता प्रकृतिः) अस्या flood, flesh इत्यादयश्च विकृतयो जाताः। यतो हि मांसमपि शरीरे सर्वत्र प्लुतमाप्लावितं वा भवत्यत एव flesh इत्युच्यते।

(घ) फा० गोश्त शब्दो द्विधा निरुच्यते। यथा हि—भारतीयैर्भक्षणार्थकाद् घस् (घस्लृ अदने) इति धातोर्थकारस्याल्पप्राणे गकारे क्तप्रत्यये च "गोश्त" शब्दो जात इत्युच्यते। परमेषा व्युत्पत्तिर्नैव समीचीना प्रतीयते, यतो ह्यत्र धातोरकार ओकारे कथं परिवर्तित इत्यस्य किमपि कारणं न प्रदर्श्यते।

वस्तुतोऽयं "गो-अस्त" > गोश्त इत्यस्ति।

४. मांसेन सहैव शरीरे रुधिरमपि वर्ततेऽत एवाधुना रुधिरं निरूप्यते—

(क) सं० रुधिरम् rudhiram, लाति० rubbra (सं० तवर्गो लातिन्यां पवर्गे परिणमतीति त्वनेकत्र प्रतिपादितम्। अत एव सं० धकारो लातिन्यां बकारो जातः)। रुधिरार्थकोऽयं लातिन्या rubbra आंग्ल्या rubbra-plex (रक्तवर्धकोषधिविशेषस्य नाम) सदृशेषु समस्तशब्देषु सुप्रचलितः। आंग्ल्या red अपि सं० रुधिरस्य प्रत्ययविहीनं रूपम्। रक्तवर्णसामान्ये चास्यार्थविस्तारो जातः।

(ख) सं० शोण (शोणित) एव फारस्यां "खून" जातः।

(ग) हि० राज०-लहू सं० लोहित एवास्ति।

(घ) लातिन्या cruon (प्रवहमानं रक्तम्) बाल्टोस्लावीय kruvi (रक्तम्) सं० क्रूर raw, bloody अथ च क्रविष ग्रीक krēas. अवे० xuru इत्यादयः सर्वे शब्दाः समाना एव।

५. शरीरे रक्तं स्नायुभिरेव प्रवहतीत्यतोऽधुना 'स्नायुः', निरूप्यते—

सं० स्नायुः snāyus ग्रीक, आं० sinew.

आंग्ल्यां ग्रीक्या लातिन्याश्चागत sinew शब्दः स्पष्टमेव सं० √स्ना बन्धन इति प्रकृत्या निष्पन्न स्नायुरेवास्ति। यतो हि स्नायवः सम्पूर्णं शरीरमङ्गानि च परस्परं बध्नन्त्येतदेव स्नायूनां स्नायुत्वम्। सं० स्नायुरेव हि० "नस" इत्यस्ति। अत्राप्याद्यः सकारस्तथैव लुप्तो यथा सं० "स्नानम्" हि० नाहना इति जातः।

६. शरीरस्याभ्यन्तरावयवेषु प्लीहाया अपि महत्त्वं वर्तते अत एषाधुना निरूप्यते—

सं० प्लीहा plīhā, ग्रीक, आं० spleen.

इत्युभावपि शब्दावेकस्यैव शब्दस्य रूपद्वयमस्तीति तु स्पष्टमेव। (भारोपीयः) स्तारः संस्कृते आद्यसकारलोपेने यथा तारा इति जातस्तथैव स्प्लीहा > प्लीहा जाता। अथवा संस्कृते यथा √स्तर्, √तर् इति च सकारयुक्तं सकाररहितञ्चेति धातुद्वयं विद्यतेऽपि च संस्कृते "तारा" इत्यनेन सह 'स्तारा' इतिरूपमप्युपलभ्यतेऽतो ज्ञायते यदनेकेषां शब्दानां धातूनाञ्च सकारयुक्तं तद्विहीनञ्चेत्युभे अपि रूपे प्रचलिते आस्ताम्।

७. आभ्यान्तरेष्वयवेषु हृदयं प्रामुख्यं भजते। अतोऽधुना हृदयपरीक्षाप्यावश्यकी।

सं० हृत् hṛt <*$k_v$ordio> ग्रीक kordio < आं० heart.

भारोपीयः क्योर्डियः ककारस्य खकारे तस्य च हकारे परिवृत्त्या जार्मण्यवर्गे heart इति जायते। संस्कृते च *$k_v$ क्यः तालाव्यशत्वमापन्नोऽत एव "श्रत्" इति जातः। परं आं० हार्ट सं० हृत् इत्युभयत्र हकारस्य किं कारणमिति तु विचारणीयमेवेति पूर्वमेवोक्तम्। लिथ्वान्यां cirdis सिरदिस् रूस्याञ्च cerdce इत्यस्ति। क्यः तालव्यीभूतः। (सं० हृत् √*घृधातोर्निष्पन्नःघृत् इत्यस्य घकारस्य हकारे परिणत्या जात इति मन्ये। संस्कृते घृतशब्दस्य तु भिन्नार्थे प्रयोग आरब्धः)।

८. मननान्मनुरित्युक्तम्। मननं च मनसा क्रियतेऽतो मनसोऽपि मननमावश्यकम्।

सं० मनः manas, आं० mind.

उभावप्येतौ शब्दौ सं० √ मन् (मनु अवबोधने) प्रकृतिजौ। आंग्ल्यां पदान्ते स्वार्थिको डः, d प्रत्ययो जातः। हिन्दीराजस्थानीष्वपि हियड़ो, मुखड़ा, सदृशेष्वनेकेषु शब्देषु पदान्ते स्वार्थे ड प्रत्यय आगच्छति। संस्कृतस्यैतन्मनः आयरियां menme मेन्मे स्पेन्याञ्च मेन्ते mente इति रूपद्वयं भजते। एकत्र पदान्त मे इत्यन्यत्र च 'ते' इति स्वार्थिकः प्रत्ययः हिन्द्यामपि 'मनूआ' इत्यत्र स्वार्थे 'आ' प्रत्ययः।

अथवा

सं० मनितं > आं० mind इति क्तान्तं रूपम्।

९, सं० यकृत्, यकन् yakṛt, ग्रीक hipar, लाति० ilcur, फा० हि० जिगर।

१०. सं० अन्त्रम्, अन्त्राणि (प्र० ब० व०) antram, लाति० intrails. आं० entrails (entstine). अथ च entracunal, एन्ट्रावायोफार्म सदृशेषु अन्त्ररोगोपचरौकौषधनामसु 'अन्त्र' इति पदं सुरक्षितम्।

११. उदरम् udram, लाति० आं० uterus. (गर्भाशयः), uterine सोदरः)।

१२. सं० अस्थि asthi, लाति० आं० ostio, लाति os. एवमेव occicle, (क्षुद्रास्थि) ossify, orsiferes सदृशानि ताद्धितानि रूपाणि जायन्ते। फा० अस्तखन् (इत्यत्र स्वार्थे कन>खन् प्रत्ययः)। अवेस्तायाम् अस्ति इत्येवास्ति। हि० हड्डी (अत्राद्यो हकारागमः)। स्लावीय भाषासु osti इत्येवास्ति।

## बाह्यान्यङ्गानि
## External Parts of body

शरीरस्यान्तरिकं प्रमुखमवयवजातं विवेचितम्। अधुना बाह्यानामङ्गानां यानि संस्कृतनामान्यन्यासु सजातीयासु भाषासु प्रचलितानि सन्ति तानि निरूप्यन्ते। देवताया वर्णनं नखतः शिरः पर्यन्तं क्रियते, अत एव "नखशिखवर्णनं" मित्युच्यते। अत एव वाग्देव्या अङ्गानां वर्णनं नखादेवारभ्यतेऽत्रापि।

१. सं० नखः nakhas, नखरः nakharas आं० nail.

संस्कृतस्य स्वार्थे र प्रत्ययेन युक्तः नखरः nakharas जा० nagal इति रूपद्वयं समानमेव। आंग्ल्या nail इत्यत्र तु मध्यगो व्यञ्जनो घृष्टः। ग्रीक honux "होनुख" इत्यत्र त्वादौ हकारागमो, लाति० unguis इत्यत्र चोकारागमो जातः। पं "नंउ" शब्देऽप्यांग्लवद्व्यञ्जनो घृष्टः। हि० नहेरना (नखकर्तनसाधनभूतः क्षुद्रः क्षुरः) शब्दे च खकारस्य महाप्रणांशो हकार—एवावशिष्टः। सं० नखवद् ग्रीकलातिन्यशब्दयोरपि स्वार्थिक र ल प्रत्ययविहीने एव रूपे स्तः। फ्रेंच भाषाया ongle अप्येतदेव। लिथ्वान्या रूस्याश्च nags सं० नखश्च समानावेव। फा० नाखून इत्यत्र पूर्वस्वरस्य वृद्धिरन्ते च नकारागमो जातः।

२. सं० पदम् padam आं० foot.

संस्कृते पदम्, पादः, पाद् इति च रूपत्रयं विद्यते। आंग्ल्या feet इति ब० व० रूपे स्वरपरिवर्तनप्रक्रिया तु संस्कृतानुगैव। निम्नजार्मण्यवर्गीयांग्ल्याः पदान्तगः टः t जार्मण्यादिषु सः (ज़) जायते। अत एव आं० foot,>जा० fuss जातः। गॉथिक्यान्तु futus इत्येवास्ति। प्रथमस्य द्वितीयाक्षर एषा परिवृत्तिर्जार्मण्यवर्गं एव। अन्यत्र तु पकारः सुरक्षितः। यथा हि—

ग्रीक peres (तु० हि० पैर), लाति० peus, फ्रेंच pied (फ्रेंचभाषायां पदान्तगो व्यंजनोऽथ च "टि" रेवानुच्चार्यते, वर्तन्यान्तु विद्यत) एवं फा० पा, हि० पांव।

**अत्रेदमवधेयम्**— (जार्मण्यवर्गीयांग्ल्यादिषु प्रथमस्य द्वितीये तृतीये वा तृतीयस्य च प्रथमाक्षरे परिवृत्तिस्तु मूलशब्द एव न तु गौणे ताद्धिते रूप इति तु पूर्वमेव प्रतिपादितम् ध्वनिनिरूपणप्रकरणे। अत एवांग्ल्या paddle, padestre-an. सदृशेषु शब्देषु पकारः फकारे नैव परिवर्तितः। अपि च quadruped चतुष्पाद् octopod आष्टापद सदृशाः शब्दास्तु लातिन्या ग्रीक्या वा गृहीता अत एवात्रापि ध्वनिपरिवर्तनाभावो दृश्यते।

३. सं० अञ्च् anc <*enk$^{w}$e. आं० ankle.

नखेभ्यः पादयोश्चोपरि गुल्फौ विद्येते। आंग्ल्यां गुल्फवाचक ankle इति शब्दस्तस्मादेवानेकार्थकादञ्च् anjou <* enk$^{w}$ धातोर्निष्पन्नो यस्मात् सं०-अंगुल्यंगुष्ठांगसदृशा नैकेऽङ्गवाचकाः शब्दा निष्पद्यन्ते। अंगुलिः सारल्येन भुग्ना भवितुं शक्यते (आसानी से मुड़ सकती हैं) ankle अपि भुग्नो (मुड़ा हुआ) भवति। एतदेवांगुलीनामंगुलित्वम् ankle इत्यस्य च एंकलत्वम्।

४. सं० √ लग् lag, आं० leg.

गुल्फयोरुपरितनो जान्वोश्चाधस्तनो भाग आंग्ल्या leg हि० लात, पिण्डली-त्यादिभिरनेकैर्नामभिव्याह्रियते। हिन्द्यां पदाघातं "लांग मारना" अपि वदन्ति। लातिन्यां leg, lacertus लेकेर्तुस इति प्रोच्यते। एते सर्वेऽपि शब्दाः सं० √ लग् प्रकृत्या निष्पन्नाः। हि० लगना, अप्येतस्मादेव। एतच्छरीरेण प्रामुख्येन लग्नं भवत्येदेव leg इत्यस्य लेगत्वम्।

५. सं० जानु √ आं० knee.

आंग्ल्या nail, foot, ankle, leg त उपरि knee जानुद्वयमगच्छति। सं० जानुः jānus <*g$_{v}$enus> ग्रीक gonu, लाति० genu इत्येतानि समानान्येव। गॉ० kniu, जा०, आं० knee इति जार्मण्यवर्गीयनामसु स्वरस्य क्षीणं रूपं तथै-वास्ति यथा सं० "प्रज्ञु" prajṇu रित्यत्र। आंग्ल्यां n पूर्ववर्ती k अनुच्चरितः silent एव विद्यते। अतः knee इत्यस्य 'नी" इत्युच्चारणं क्रियते, परं जार्मण्यां क्नी इत्येवोच्चार्यते। general जानुसम्बन्धी' genufleckt पूजार्थं पातितजानुः, सदृशेषु ताद्धितसमस्तरूपेषु जानु स्वरूपेणैव विद्यते।

६. आं० thigh, पु० आं० thiok <*teuk, सं० त्वक्। (अत्रार्थसङ्कोचो जातः)।

७. सं० पायुः pāyus आं० penis.

मनुष्यमूत्रेन्द्रियस्य लिंगस्य वा आंग्ल्या penis इति शब्दस्य सं० मलविसर्जनस्थानस्थ (गुदायाः) पायुरिति शब्दद्वयस्य प्रकृतिरेकैव, प्रत्यार्थौ तु भिन्नौ[1]। परमुभयत्र मलमूत्रेन्द्रियरूपेण गुह्येन्द्रियवाचकावेवेमौ शब्दं ।

८. सं० श्रोणिः śroṇis <*kᵥlonis, ग्रीक closis, लाति० clunis, पु० आइस० hloun, लिथ्वा० slonis.

९. सं० जठरः jatharas, ग्रीक gaster, आं० gastric, संस्कृतप्रकृतिजानि नैकानि जठरनामानि सजातीयासु भाषासूपलभ्यन्ते । यथा हि—

(क) सं० जठरः jatharas< √घस् ghas, ग्रीक gaster, आं० gastro (उदरार्थको निपातः), gastric उदरसम्बन्धी, यथा gastric trouble उदरविकारो, रोगो वा । आं० gastric शब्देन तु भूयांसो जना सुपरिचिताः, परमेषः शब्दः सं० जठरस्य ग्रीक gestero इत्यस्य वा ताद्धितं रूपमिति भाषाविज्ञानेनैव ज्ञायते ।

**अत्रेदमवधेयम्**—यथा खलु घस् धातोरेव सं० घासः (तृणादिकं पशुभोजनम्) निष्पद्यते, हिन्द्यादिष्वप्येषो घासः प्रचलितस्तथैव सं० √ग्रस gras (ग्रसु अदने) धातोर्ग्रीक्यां grastic, आंग्ल्याञ्च grass इति निष्पन्नौ ।

(ख) सं० उदरः udaras, अवे० उदर्, ग्रीक hoderou, लाति० venter, uterus (गर्भाशयः) ।

(ग) सं० √भुज् bhuj धातोर्निष्पन्न उदरार्थको जार्मण्यो bauch शब्द आंग्ल्यां bucket रूपेण तथैव bail बाल्टीत्यर्थको जातो, यथा सं० मञ्जूषार्थकः 'पेटः' हिन्द्यामुदरार्थको जातः, परं हिन्द्यामपि 'पेटी' तु मञ्जूषैवास्ति ।

(घ) रूसी जिवात् jivat (उदरः), पु० बुल्गा० जीवोतु zivotu (जीवनम्), सं० जीवातुः (जीवनौषधेऽर्थसङ्कोचः), इत्यादयः सं० जीव्, *gʷiv धातोर्निष्पन्ना इति तु स्पष्टमेव ।

---

१. Sh. Ox. Eng. Dic.

१०. सं० वक्षः vakṣas, वक्षोजौ vakṣojāu च । वक्षसो वक्षोजयोश्चोदरादुपरि स्थितिरवलोक्यते। संस्कृतप्रकृतिजान्यनयोरप्यनेकानि नामानि विद्यन्ते सजातीयासु भाषासु । यथा हि—

(क) सं० भृष्टिः bhṛṣṭis (वै०, point, नोक) इत्यस्माद् आं० breast शब्दो निष्पद्यते, परं नारीस्तनार्थको breast शब्दस्तु सं० √भृ धातोस्ति प्रत्यययोगेन निष्पन्नो 'भृति' रेवास्ति-पयोभृत्-इति चास्यार्थः। गॉथिकजार्मण्यादिषु च brust इत्येवास्ति।

(ख) सं० स्तनौ, अवे० फा० पिस्तान, ग्रीक stenion-stethos.

सं० √स्त्यै styai (स्त्यै, ष्ट्यै शब्दसंघातयोः) इति प्रकृत्या 'न' प्रत्यययोगेन यथा सं० स्तनशब्दो निष्पद्यते तथैव ग्रीक्यां 'थ' प्रत्यययोगेन stethos इति शब्दोऽपि। ग्रीक stenion अपि स्तनस्यैव विस्तारितं रूपम्। ग्रीक्यां stethos इत्यस्य वक्षोऽर्थः संस्कृते तु वक्षोजार्थेऽस्यार्थसंकोचो जातः। stethoscope इत्यत्रोपपदन्तु stethos (स्तन) इत्येवास्ति। तिङ्रूपं उत्तरपदं scope इत्यस्ति। एषः scope सं० √स्कुभ्, स्कुभ्नाति, इत्येवास्ति। आर्मे० stin, हिन्द्यादिषु च थन (स्तन) शब्दस्य पशुस्तनेऽर्थसङ्कोचो जातः।

(ग) सं० उरः uras, अवे० वर, फा० बर।

(घ) सं० भ्रूणः bhrūṇas, आयर० brū (उदरः, गर्भः), bruinne पयोधरौ।

(ङ) वक्षः vakṣas, फा० आगोश, (पारस्यां पदादौ वकारो गकारो जायते)।

११. सं० पृष्ठम् pṛṣṭham, आं० first.

(च) सं० पर्शूः parśūs, पृष्टिः, अवे० paresu (पसली), पु० बुल्गा० prūsi, स्लाव० prs, prsa. (पयोधरौ)।

(छ) सं० √धेट् पाने dhai, ग्रीक thēlē (teat) चुचूकौ, स्लाव० dojka, dojite <सं० धयति।

१२. सं० ग्रीवा grīvā, गलः galas.

संस्कृतप्रकृतिजा ग्रीवार्थका नाना शब्दाः सजातीयासु भाषासु प्रचलिताः सन्ति । यथा हि—

(क) सं० √गृ निगरणे, गिरति, गिलति इत्यस्माद् ग्रीवापर्याया नैके शब्दा निष्पद्यन्ते । यथा—

(i) सं० ग्रीवा grīvā, अवे० grīvā, फा० गरीव (पर्वतशृंगम्), ग्रीक derē, derſa, पु० बुल्गा० griva.

(ii) सं० गलः galas, लाति० gula, स्पे० gola, फ्रेञ्च gueula (जृम्भा) रूमा० gura (मुखम्), जा० kehle, अवे० गरो (ब० व०) गरेमन, फा० गुलू, यथा गुलूबन्द, हि० गला, लाति० gurges (आवर्तः) jorge आदयोऽप्यनेनैव सम्बद्धाः ।

(ख) सं० वृत् vṛt, वर्तते, परिवर्तते, भ्राम्यति, पु० बुल्गा० vretu, रूसी vret, फा० गर्दन<सं० वर्तनम् (फारस्यां वकारस्य गकारो जायते) ।

(ग) सं० मन्या manyā, आयर० muin, muineal, लाति० monile, necklace.

(घ) सं० √कृ, कर् kar, कल kal, लाति० collum (ग्रीवा), इता० collo, आं० collar (something worn or place about the neck).

१३. सं० हनुः hanus, जम्भः jambhas, गण्डः gandas, अस्याङ्गत्रयस्य नामानि सर्वासु सजातीयभाषासु प्राधान्येन तान्येव नामानि विद्यन्ते । यतो ह्येतान्यङ्गानि परस्परं संश्लिष्टानि सान्त्यत एवैतेषां नामान्यपि मिथः परिवर्तन्ते । यथा हि—

(क) सं० हनुः hanus<*ghonus, $g_v$nus (जम्भो, गण्डौ हनुश्च), ग्रीक genus (जम्भः कपोलौ च) geneion (हनुः), लाति० gena (कपोलौ) गॉथ० kinnus (कपोलौ), आं० chin (हनुः) ।

सं० भृष्टिः (वै० नोक०), आं० beard, आं० breast अप्यनेनैव निष्पद्यत इति तु पूर्वमेवोक्तम् ।

(ख) सं० जम्भः jambhas, आं० jaw, हि० जबड़ा ।

(ग) सं० बुक्का bukkā (अग्रमांसम्), लाति० bucca मुखम्, कपोलौ जा० backe (जबाड़ा)।

(घ) सं० गण्डः gaṇdas, लाति० gena (गण्डः), ग्रीक gnathos (जम्भः)।

(ङ) सं० श्मश्रु śmaśru, आयर० smeech, लिथ० smakras, फ्रेञ्च macher (चर्व), आं० moustaches हि० मूंछ।

१४. **मुखम्** mukham सजातीयासु भाषासु सन्ति मुखस्यापि नैकानि संस्कृत-प्रकृतिजानि नामानि। मुखस्य बाह्यमाभ्यान्तरञ्चेति विभागद्वयम्। अनयोर्द्योत-कानि नामान्यप्यनेकासु भाषासु भिन्नानि सन्ति। पूर्वं तावद् बाह्याननस्य नामान्यु-पस्थाप्यन्ते। यथा—

(क) सं० √भास् bhās आं० face, लाति० faciss, रूमा० fate, एते सर्वे शब्दाः सं० √भास् प्रकृतिजाः। यतो ह्याननमेव सर्वेष्वङ्गेषु प्राधान्येन भासत एतदेव face इत्यस्य भासत्वम्।

(ख) सं० √विद् vid, लिथ्वा० veidus, फ्रेंच visage.

(ग) सं० प्रतीकम् pratīkam, (अङ्गम्) √अक्: अक्ष्, ग्रीक प्रोसोपोन, prosopon, pros<सं० प्र, ops<सं० अक्ष् (प्र-अक्षम्, प्रत्यक्षम्)।

(घ) सं० कित् kit चित्रम् citram, (प्रकाशकम्), अवे० चिथ्र, फा० चेहरा।

एभिर्नामभिर्मुखमण्डलं face इत्येव व्यज्यते।

१५. आननम् ānanam.

मुखाभ्यन्तरभागद्योतकान्यपि संस्कृतप्रकृतिजान्यनेकानि नामानि सर्वासु सजातीयभाषासूपलभ्यन्ते। यथा—

(क) आस् ās (वै) आस्यम्, आसन् (√ असु क्षेपणे इत्यनेन निष्पन्नः)। लाति० ōs, ōra, आं० oral (मौखिकम्, लातिन्यां स्वरमध्यगः सकारो रेफे परिणमति) ostium (नदीमुखम्, उद्गमः), पु० बुल्गा०, रूसी० usi, अवे० फा० आह (श्वासः)।

(ख) सं० √ वच्, वक् vak वक्त्रम्, लाति० vocal (मौखिक)।

(ग) सं० √ वद् vad वदनम्। फारस्यां बदन (यथा तनबदन) इत्यस्य शरीरार्थेऽर्थविस्तारो जातः।

(घ) सं० मुखम् mukham, मुण्डम्, गॉ० munth, पू० नार्स munne देवीय, जा० mued, लेटिश mute, पु० आं० muth, आं० mouth सर्वत्र अनुकरणार्था 'मू' इति प्रकृतिः प्रत्ययाश्च भिन्नाः। ग्रीक्यां लातिन्याञ्च mu इत्यनुकरणार्था प्रकृतिर्विद्यते। पञ्जाब्या 'मु' इत्येवास्ति। हिन्द्यामपि 'मुह' इत्यत्राकारोऽर्धोच्चरित एव। आं face सं० √ भास् इत्यस्मात्।

१६. **ओष्ठौ**

(क) सं० ओष्ठौ oṣṭhāu, अवे० अओश्त, रूस्यादिष्वस्य प्रतिरूपाणि उस्त सदृशानि नामानि मुखवाचकानि जातान्यत्रार्थविस्तारः। हि० होठ (हकर आद्यागमः)।

(ख) सं० लम्ब lamb लम्बते, लाति० labrum, स्पेन labis, जा० lippe, आं० lip, लिथ्, लेटिश luppa, जार्मण्य lobba फा० लब, पञ्जाब्यां लबशब्दः ष्टचूतार्थे रूढो, यतो हि ष्ट्यूतमपि ओष्ठनिस्सृतमेव भवति। 'लबालब भरा हुआ' सदृशेषु हिन्दी वाक्येष्वपि फा० 'लब' सुप्रयुक्तः।

(ग) सं० वर्ष्मन् varṣman उन्नतं शरीरम्, पु० प्रशि० warsus 'ओष्ठौ' लाति० verruca उन्नत, उपरि। (यथा संस्कृतेऽधर इत्यधरौष्ठ एव तथापि द्वयोरेव प्रयुज्यते, तथैव warus इत्युपर्यथकोऽप्युभयोरोष्ठयोर्वाचिकोऽस्ति।

१७. सं० दन्त danta, आं० tooth.

सजातीयासु भाषासु दन्तनामानि (क) दन्त (ख) जम्भ इति वर्गद्वये पतन्ति।

(क) सं० दन्त dant <*अदन्त √ अद् > ग्रीक odōn, edont लाति० dēnts, dentis, गॉ० tunthus, आं० tooth, जा० zahn इत्यादयः पूर्वं प्रदर्शिताः।

(ख) सं० जम्भः*$g^w$embhos > ग्रीक gomphos, अल्बा० dhemp, आं० comb (कंकतिका), पु० बुल्गा०, रूसी zanbu हि० जबड़ा, जम्बूर।

१८. सं० जिह्वा jihvā, लाति० lingua. जिह्वानामान्यपि (क) सं० जिह्वा, लाति० lingua, (ख) सं० दंशिनी>आं० tongue इति भेदाभ्यां वर्गद्वये विभक्तानि ।

(क) सं० √लिह्‌<*ligᵥh संस्कृतेऽपि 'जिह्वा' लिहतेरेव निष्पाद्यते। 'शेवयह्वजिह्वे' त्याद्युणादिसूत्रेण लकारस्य जकारे जाते 'लिह्वा' एव जिह्वेति जाता ।

**अत्रेदं वैशिष्टयम्**—समग्रेऽपि स्लावीयेऽथ च भेरानीये वर्गे लकारस्य जकारे परिणतिरवलोक्यतेऽतो ज्ञायते यद् रूसेरानीयभारतीयाश्च यदा खल्वेकत्रावसंस्तदैवैषा ध्वनिविकृतिर्जाता, परं भारतीयैर्भाषावैज्ञानिकैर्जिह्वायाः प्रकृति 'लिह्' इति न विस्मृता इति तु महदाश्चर्यकरम् । लातिनेतालीय फ्रेञ्चस्पेनीयरूमानीयादीतालीयवर्गीयासु भाषासु त्वद्यापि जिह्वाया 'लिह्' इति प्रकृतिः सुरक्षिता । यथा—

(क) लाति० lingua, फ्रेञ्च lingue, स्पेनीय lenguo एवमेव लिथ्वान्यामपि liezuvis इत्येव विद्यते ।

अतो विपरीतं समग्रे स्लावीये भेरानीये च वर्गे √लिह् इत्यस्य लकारो जकारे परिवर्तितः । यथा हि—

सं० जिह्वा अवे० हिज्वा, फा० जबां रूसी jazyk बुलगारीय पोलीयादिष्वप्येतादृशा एव शब्दा विद्यन्ते ।

(ख) समग्रेऽपि टच्यूटानीये जार्मण्ये वा वर्गे जिह्वा नामानि सं० √दंश् *denkᵥ इति प्रकृतेर्निष्पन्नानि । संस्कृते "दंशिनी," 'संदंशिनी', संदंशः (वै०) (हि० सण्डासी[1]) दंष्ट्रा इत्यादीनि नामानि सन्ति, परं तानि दंष्ट्रावाचकान्येव ।

आंग्लकोशेषु tongue इत्यस्य dengua इति रूपं प्रदर्श्य तल्लातिन्या lingue इत्यस्य प्रतिरूपमित्युच्यते । वस्तुत आं० tongue< √denkᵥ इत्यस्मान्निष्पन्नः अस्य √legᵥ सं० लिह् धातोर्नास्ति कोऽपि सम्बन्धः ।

जार्मण्यां <zunge इति तु t इत्यस्य z इति रूपेण परिवृत्त्या जातः ।

---

१. हिन्दी मानककोषे संडासीति शब्दो नैव प्रदत्तः, सडसी ति तु निर्दिष्टः, परं तस्य व्यात्पत्तिः ? इतिप्रश्नचिन्हेनानुत्तरिता ।

आं० language, linguistis, lingua-frenka. (फ्रांसदेशस्य भाषा इत्यस्याधुना कस्यापि देशस्य राष्ट्रभाषेत्यर्थे विस्तारो जातः)।

एवं स्पष्टं सिद्ध्यति याल्लातिन्या आंग्ल्यामागतो language, फारस्या जबान इत्युभयोरपि विभिन्नप्रकृतिकयोः प्रकृती संस्कृत एव सुरक्षिते। अथ च हिन्द्या 'डंक' आंग्ल्याश्च tongue टंग इत्युभौ सरूपौ, परं भिन्नार्थकावपि शब्दावेकप्रकृतिजावेवेत्यप्यवगन्तव्यम्।

१६. सं० नस् nas आं० nose.

ओष्ठोपरि स्थितास्ति नासिका। ग्रीक्यां विहाय सर्वासु सजातीयभाषासु नासिकावाचक नस् (नास् वा) शब्द एवास्ति। वेदे नासारन्ध्रद्वयवाचक 'नासा' इति द्विवचनान्तं रूपमप्युपलभ्यते। यूरोपीयास्वनेकासु भाषासु नासारन्ध्रवाचको nostril, nostrils (ब० व०) इति रूपमपि विद्यते। तदेवं नासिकावाचकनामान्यपि वर्गचतुष्टयगाः सन्ति। यथा—

ग्रीक्या वर्जमन्यासु भाषासु नस् nos इत्यस्य प्रचलनं सर्वत्र विद्यते।

(क) सं० नस्, नास् nas nās नासा (वै० द्वि० व०) तथा च सं० नासिका इति स्वार्थे 'क' प्रत्यययुक्तं स्त्रीलिङ्गरूपं प्रचलितम्। हिन्द्याञ्च 'नाक' इत्यत्र मध्यगस्य 'सि' इत्यस्य लोपो जातोऽपि च हिन्द्यां फारस्याञ्च सर्वत्र स्त्रीवाचक आकारोऽकारे परिणमत्यत एव नासिका>नाक जाता। पञ्जाब्याञ्च 'नक्क' इत्यनेन सह 'नासां' इति वैदिकं द्विवचनान्तमपि रूपं प्रचलितम्। तत्रानुनासिकागमस्तु आन् इति (पुं० द्वि० ब० व०) अनुकरणवशादागत इत्यनुमीयते।

सं० नस्, नास्, नासा, nas, nāsa, nāsā, लाति० nasaus, इता० naso, रूमा० nas, आं० nose, जां० nase रूसी nos, स्पेनी nariz (अत्र सकारो रेफे परिणतः), अवे० नाह।

(ख) ग्रीक rhis, आयर् srŏn उभावपि शब्दौ सं० √स्रु sru इत्यस्मान्निष्पन्नौ (यतो हि नासिकयापि स्रवते सिंघाणम्)।

(ग) ग्रीक्यामद्यत्वे नासिकार्थे प्रयुक्तो mute इति शब्दस्तु सं० मुखम् इत्यनेनैव सम्बद्धोऽर्थसङ्कोचश्चात्र जात इति प्रतीयते।

(घ) ग्रीक rhegkō (snore), आयर० srōn< skrok-ma सदृशाः शब्दाः सं० सृक्वम् sṛkvam (सृक्वणी) इत्यनेन सम्बद्धाः। आं० snore अपि

nose इत्यस्यैव साद्यं रूपम् । अत्राप्यन्त्यः सः रेफे परिणतः ।

२०. सं० अक्षि akṣi, आ० eye.

सजातीयासु भाषासु नेत्रनामानि—(क) ईक्ष् (ख) लोक् (ग) दी (वै०) तथा च (घ) चक्ष् इति धातुचतुष्टयनिष्पन्नानि । यथा हि—

(क) सं० √ईक्ष् ikṣ, ईक्षणम्, 'अक्षि' अपि ईक्षतेरेव प्रतीयते यद्यपि निरुक्ते चष्टेरित्युक्तम् । अक्ष् धातोरप्यक्षि प्रतिपादिता, परमीक्षतेरीकारस्याकारे परिणत्याक्षिशब्दः सुनिर्वाच्य इति मे मतम् ।

सं० √ईक्ष् ikṣ, ग्रीक, opsomai, opticle, optimist, (ककारः पकारे परिणतः), वेदे अक्षण् इति शब्दोऽप्यस्ति । लाति० oculus, आयर० ugail, गॉथ० augo, जा० auge, लिथ्वा akis, पु० बुल्गा०, पोल० oko, (सर्वत्र मध्यगः कः सुरक्षितः । आं० eye<डेनी ege<सं० अक्षि>पं० अक्खी, हि० आंख ।

(ख) सं० लोक् lok (लोकृ दर्शने), लोचनम्, वेल्श llygad go-lwg (दृष्टिः) । अत्रेदमवधेयं यत् √लोक् धातोर्निष्पन्नो नेत्रार्थक आंग्ल्यां कोऽपि शब्दो नास्ति, तथापि सं० lok, ग्रीक lugen, पु० उ० जा० luogen इत्यादीनामांग्ल्यां look इति प्रकृतिस्तु वर्तत एव, तस्य विकृतिस्तत्र न जाता इति त्वन्यत् । locula लोक्यूला इत्येकस्य विख्यातौषधेर्नाम लोकतेरेव निष्पन्नम् ।

(ग) सं० चक्ष् cakṣ, चक्षण्, चक्षुः, अवे० चश् to teach, पु० फा० चश्मन्<सं० चक्ष्मन्, फा० चश्म, हि० चश्मा ।

(घ) √दी (दीप्त्यर्थकोऽयं धातु वेदे सुप्रयुक्तः, परं वेदादन्यत्रेरान्यामेव प्रयुज्यते प्रकृतिविकृत्युभयोरपि रूपयोः । यथा √दीदन्, दीदा (नेत्रम्, दृष्टिश्च), दीदार (दर्शनम्) दीन (धर्मः) इत्यादयः ।

२१. सं० श्रोत्रम् śrotram, आं० ear.

सर्वास्वेव भाषासु प्राधान्येन संस्कृतवच्छ्रवणनामानि श्रवणार्थकेभ्यो धातुभ्य एव निष्पन्नानि । यथा हि संस्कृतेऽपि श्रवणशब्देन कर्णावाकर्णनञ्चेत्युभावप्यर्थाववगम्येते, तथैवान्यास्वपि भाषासु कर्णवाचकाः शब्दा बाहुल्येन श्रवणार्थकेभ्यो आविष्करणार्थकेभ्यो ज्ञानार्थकेभ्यो वा प्रकृतिभ्य एव निष्पन्नाः ।

सजातीयासु भाषासु संस्कृतप्रकृतिजनीमानि नामान्युपलभ्यन्ते श्रवणस्य—

(क) सं० √श्रु śru <$^*k_y$luen> ग्रीक klio, आयर० cluas, वेल्स० clust पु० नार्स० hlust, (सं० श्रुत), पु० आं० hlyst, hlystan > आं० listen, loud.

(ख) सं० आविस् āvis (प्रकाशनार्थको निपातः, यथा—आविर्भूत, आविष्कारः), ग्रीक ous, ouatos, ōtas, लाति० auris, गॉथ० auso, पु० आं० eare (अत्र स्वरमध्यगः सकारो रेफे परिणतः), आं० ear, अवे० उशी (कर्णौ), फा० होश (ज्ञानं, कर्णौ च)।

(ग) सं० घोषः, अवे० गओशः फा० गोश कर्णौ।

**अत्रेदमवधेयम्**—आंग्ल्या hear इति श्रवणार्थकस्य धातोः ear इत्यनेन नास्ति कोऽपि सम्बन्धः। भारोपीय √$^*k_y$lueu इति धातोः क्यकारः संस्कृते शकारेऽथ च जार्मण्यासु भाषासु खकारो भूत्वा हकारे परिणतः। एवं सं० √श्रु śru, आं० hear इत्युभावपि सोदरौ, परम् आं० ear शब्दस्तु सं० 'आविस्' इति निपातान्निष्पन्नः।

अपि चांग्ल्यां लातिन्या आगतौ aural, तथा च oral इति द्वौ सदृशौ शब्दौ विद्येते, परमनयोः प्रकृतिस्तथैवार्थोऽपि सर्वथा भिन्न एवास्ति। aural (pertaining to the organ of hearing), श्रवणेन्द्रियसम्वन्धी इत्यर्थोऽस्ति। एषः शब्दश्च सं० आविस्>लाति० auris इति निपातोद्भवः। अनेनैवांग्ल्याम् audible, श्राव्यम्, audience श्रोतारः audio-visual (श्रव्य-दृश्य), सदृशा नैके शब्दा निष्पद्यन्ते। अस्योत्तरपदं visual सं० विद्धातोर्निष्पन्नमत एव संस्कृतप्रकृतिकमेव।

अतो विपरीतमांग्ल्या oral इति शब्दोऽस्ति 'मौखिक', 'वाचिकं' वेत्यस्यार्थोऽस्ति। यथा oral-test, मौखिकपरीक्षा। एष oral शब्दः सं० आस् (वै०) आस्यम्, लाति० os इत्यस्य ताद्धितं रूपम्। oratory (वक्तृता) सदृशा नैकेऽन्येऽपि ताद्धिताः शब्दा अनेन निष्पद्यन्त आंग्ल्यां लातिन्योद्भवाः।

२२. सं० भ्रूः bhrūs आं० brow. लातिनीवर्जं सर्वासु सजातीयभाषासु सं० भ्रूः bhrūs इत्यस्य सरूपाण्येव विद्यन्ते। आंग्ल्यादिष्वस्योपपदरूपेणाक्षिशब्दोऽपि प्रयुज्यते।

सं० भ्रूः bhrūs, ग्रीक० ophrūs, नव्यग्रीक phrodi, आयर० brae,

ब्रिटन abrant, आं० eye-brow, जा० augen-braw, रूसी brou, बुल्गा० bruvi, अवे० ब्रवत्, पन्जाब्या 'भ्रुवट्टा', इत्यप्यवेस्ताप्रभावात्तकारागमयुक्तः। फा० अब्रू, हि० भौं।

२३. (क) सं० भालः bhālas, आं० bald (खल्वाटः)। यथा भालोऽपि भाति-दीप्यते तथैव खल्वाटस्य शिरोऽपि। एवं भाल आं० bald इत्यस्य रूढार्थ-भिन्नत्वेऽपि प्रकृतिर्यौगिकोऽर्थश्चैक एव। पु० प्रशियायामल्बान्याञ्च balle, ballo भालार्थकावेव। पु० बुल्ग belu शुभ्रार्थकोऽस्ति।

२४. शिरः, कपालं, मस्तिष्कम्, मस्तकम्। भारोपीयः $k_v$ शतंवर्गीयासु भाषासु शसयोः परिणतः। त्रिविधोऽपि ककारः टयूटानीय (जार्मण्य) वर्गे च खकारो भूत्वा हकारो जात इति सदैवावधेयम्। एनं ध्वनिपरिवर्तनं मनसि निधायैवैतज्ज्ञातुं शक्यते यत् सं० शिरः आं० head, सं० केशः आं० hair, सं० कोषः आं० house, सदृशाः सर्वथा भिन्नाकारा अप्येकार्थकाः शब्दा वस्तुतः सजातीया एव विद्यन्ते। यथा हि—

संस्कृते विदारणार्थकात् √शॄ < $*k_vr$ धातोर्निष्पन्नस्य शृङ्गशब्दस्य शिखरं, शिरः विषाणञ्चेत्यादयोऽनेकेऽर्था प्रदर्शिताः। शिरः शीर्षञ्चाप्यनेनैव निष्पद्येते। वस्तुतः √शॄ, √$*k_vr$ इत्यस्यार्थोऽस्त्युद्गमनमुच्चैर्गमनं वा। यतो हि शृङ्गम् उद्गतं भवति, एवमेव शिरोऽपि शरीरे सर्वाधिकमुन्नतं भवत्यत एव शिर इत्युच्यते। नाना सजातीयासु भाषासु शिरसो मस्तिष्कस्य च संस्कृतप्रकृतिजान्यनेकानि नामानि सन्ति। यथा हि—

(क) सं० √शॄ śṛ < $*k_vr$, शिरः, शीर्षन्, ग्रीक kare, korupse शिखरम्), लाति० cere-brum, पु० उ० जा० hirnı (मस्तिष्कम्), फा० सर, हि० सिर।

(ख) सं० शृङ्गम् śṛngam, लाति० cornu, आं० horn.

(ग) सं० कपालम् kapālam, ग्रीक kephatē, लाति० caput, इता० capo, आं० फ्रेञ्च chef, आं० chief, स्पेनीcabeza, आं० cape इत्यादयः सर्वे शब्दाः (शिरोऽर्थकस्य कपालस्य सोदराः। एवमेवांग्ल्या cup इति पात्रार्थकः शब्दोऽपि कपालमेवाभिधत्ते। आं० couple (युग्म) अप्ययमेव।

(घ) सं० ककुभः kakubhas (वै० औन्नत्यं, शिखरम्, सं० दिक्) लिथ्वा० kaups (राशिः), पु० नार्स० hofuo, डेनी० hoved, जा० haupt, आं० head

इति निरुक्तिः प्रदर्श्यते। परमहं मन्ये यत् सं० ककुद् kakud>आं० head इत्यपि वक्तुं शक्यते।

(ङ) सं० कुल्वः kulvas (वै० शिरः खल्वाटश्च), लाति० colva (skull), रूसी gol (नग्नः, खल्वाटः)। सं० खल्वाटोऽपि वस्तुतः शिरोऽर्थकात् 'कुल्व' इत्यस्मादेव जातः। फा० कुल्ला (ऊँची नोकदार टोपी)। शिरोऽर्थकः 'कुल्व' शब्दो यजुर्वेदे पठितः।

(च) सं० √स्कू, √कू skū, कोशः kośas (container, cover), लिथ्वा० kiause, पु० नार्स० hauss, नार्वे० haus (शिरः), स्वीडीय विभाषा hos, आं० house. (अत्र यौगिकोऽर्थः सुरक्षितः)।

(छ) सं० √मस्ज् masj>मस्त (कः) मस्त-इष्क=मस्तिष्कम्, अवे० मस्तरेगन् (कपालः), फा० मग्ज़।

२५. सं० केशः kēśas, आं० hair अन्ये शब्दाः पूर्वं निर्दिष्टाः।

२६. सं० अंसः amsas, ग्रीक ōmos, ṇomos (अत्र नकारः स्वार्थे निपातः) लाति० umerus, गॉ० amsans.

तथैव—

स्पे० hombro, गॉथ० omsans लातिनवर्गे सः रेफो जातः।

**२७. बाहुनामानि—**

(क) सं० बाहुः bāhus>*bhagus, ग्रीक pēkhus अवे०, फा० बाजू। पु० आं० bog, पु० उ० जा० boug.

(ख) सं० ईर्म irma (वै० बाहुः), लाति० armus, पु० प्रशि० पु० बुलगा० ramo पोलि० ramie, गॉ० आं० arm.

(घ) सं० दोष् doṣ, आयर० doc, अवे० फा० दोश्।

२८. आं० elbow

आंग्ल्यां elbow इति समस्तशब्दस्योपपदम्, सं० कुटिलार्थकम् अराल इति शब्दस्योत्तरपदे विद्यमानम् अल् इत्येवास्ति। सं० 'अराल' शब्दे च अर, अल इति कुटिलार्थकयोरुभयोरपि शब्दयोः पौनरुक्त्यम्। सं० अरत्न्यामप्येषः कुटिलार्थकोऽर शब्दो विद्यते। elbow इत्यस्योत्तरपदं सं०√भुज्, भुग्, भुग्नमे-

वास्ति। एवमांग्ल्यां elbow इत्यत्रापि कुटिलार्थकस्य el-bow इति शब्दद्वयस्य पौनरुक्त्यम्।

२९. सं० हस्तः hastas आं० hand.

आपातत एतावुभावपि शब्दौ सरूपौ सोदरौ च प्रतीयेते, परं भाषाविज्ञान-प्रदर्शित-निरुक्त्या नास्त्यनयोः कोऽपि सम्बन्धः। यद्यपि आं० hand शब्दोऽपि संस्कृतप्रकृतिज एव। तद्यथा—

(क) सं० स्कन्धः skandhas > हि० कन्धा > आं० hand (अत्र सं० स्कन्ध-स्तथैवांग्ल्यां हस्तार्थको hand जातो, यथा सं० भुजार्थको दोष् फारस्यां स्कन्धार्थ-को विद्यते। वस्तुत आस्कन्धं समग्रस्यापि हस्तस्योपाङ्गानि नाना सजातीयभाषासु नामपरिवर्तनं सहन्ते। (सं० ककारो जार्मण्यवर्गे खकारो भूत्वा हकारे परिवर्तत इति तु सदैव मनसि कृत्यैव शब्दनिर्वचने प्रवृत्तिर्विधेया)।

(ख) सं० हस्तः, अवे० जस्त, फा० दस्त।

निरुक्ते हस्तः शब्दो √हन्तेः, अमरकोशस्य क्षीरस्वामिन्यनुगामिन्यां रामाश्रमी-टीकायाञ्च हस् धातोर्निष्पादितः। परमेतन्निरुक्तिद्वयमप्यसमीचीनम्। वस्तुतो √घस् (अदने) धातोर्हस्तो जातः। भारोपीयस्त्रिविधोऽपि घकारोऽवेस्तायां z ज़कारे संस्कृते चानेकत्र हकारे परिवर्तित इति नियमेनाप्येतदेव सिद्ध्यति।

यथा हि—

सं० हस्त < *घस्त > अवे० ज़स्त > फा० दस्त। एवमेव सं० हतः फारस्यां ज़द इति जायते। लिथ्वान्याः पज़स्ते (कक्षः) इत्यत्र पः निपातोऽस्ति। पं० हत्थ, हि० हाथ।

(घ) ग्रीक khēir, khere.

आपाततो ग्रीक्यां 'खेरे' शब्दः सं० करस्य सरूप प्रतीयते, परं नास्त्यनयोः कोऽपि सम्बन्धः। तथापि ग्रीक्याः khere शब्दोऽपि संस्कृतप्रकृतिजोऽस्तीत्यत्र न कोऽपि सन्देहः। सं० √घस् इत्यस्य घकारो ग्रीक्यां खकारे, सकारश्च रेफे परि-णतः एवं सं० √घस् ग्रीक्यां khere इति जातः। यथा च √घस्प्रकृत्या सं० हस्तो जातस्तथैव ग्रीक्या khere इति, प्रत्यय भेदेऽपि प्रकृतिस्त्वनयोरेकैव इति।

(ङ) सं० पंक्तिः paṇktis (पञ्चानां समूहः), आं० fist (मुष्टिः) वस्तुतः

सं० पंक्तिः>पक्तिः>आं० fist इत्येवास्त्यांग्ल्याः fist शब्दस्य निरुक्तिः। सं० पञ्च<*penk$^{w}$e.

(च) सं० मुष्टिः muṣṭis, वेल्स maut (हस्तः), आर्मे० mattu (अंगुलिः) फा० मुश्त।

३०. सं० √पा pā, √पाल् pāl, पाणिः pāṇis, ग्रीक palamē लाति० आं० palm. एकत्र पा धातुरन्यत्र च √पाल् इत्यनयोर्भेदः।

(क) सं० √पचि (समवाये)* penk$^{w}$e पंक्तिः, आं० finger. सजातीयासु भाषासु अंगुलिवाचकाः शब्दा द्विप्रकृतिकाः सन्ति। यथाहि—

सर्वासु जार्मण्यवर्गीयासु भाषासु प्रयुज्यमानः finger इति शब्दः* √penk$^{w}$e >सं० पचि धातोर्निष्पद्यते। सं० पंक्तिः, हि० पञ्जा शब्दावस्मादेव निष्पन्नौ। पञ्जार्थकाः खल्वेते सर्वेऽपि शब्दाः। आं० fist अपि सं० पंक्तिरेवेति तूपर्येवोक्तम्।

(ख) सं० अंगुलिः angulis. अंगुष्ठः, अङ्गम्, अंघ्रिः फा० अंगुश्त (अंगुलिः) आं० ankle (जानुः), लाति० angulis (corner), पु० उ० जा० anch (ग्रीवाभङ्गो जंघा च), आं० angle (कोणः) इत्यादयः सर्वेऽपि शब्दा *√ank$^{w}$e >सं० अंच् प्रकृतिकाः सन्ति। यतो ह्येते सर्वे सारल्येनाङ्क्ना (आसानी से मुड़ जाने वाले) भवन्त्यत एवैते सर्वे शब्दा एभिर्नामभिर्व्यपदिश्यन्ते।

३१. आं० thumb.

सं० √तु tu, तू tu, इति सौत्रो धातुः (फूलना, मोटा होना)। पारस्यामवेस्तायाञ्च तद्वत्संस्कृतेऽपि अंगुष्ठार्थेऽप्यंगुलिप्रकृतिक एव शब्दः प्रयुज्यते, परमांग्ल्यां thumb जार्मण्याञ्च तस्यैव ध्वनिविकरणेन जातं रूपं daumen इति प्रयुज्यते। एष thumb थम्ब शब्दश्च संस्कृतस्य तस्मादेव 'तु' धातोर्निष्पन्नो यस्मात् सं० तुम्बुरुः हिन्द्याञ्च तुम्बा इति जायते। अर्थभेदेऽपि आं० thumb, हि० तुम्बा इति द्वयोरपि प्रकृतिप्रत्ययौ यौगिकोऽर्थश्चैक एव। यतो हि अंगुष्टोऽपि हि० तुम्बावत् (फूला हुआ) भवत्यत एव thumb<tumba इत्युच्यते।

## ४. श्वासमलमूत्रस्वेदवमननिद्रातन्द्राजागरणादयः

१. (क) सं० √अन् an प्राणने, प्राणाः prāṇās. अनिल सदृशान् कांश्चिच्छब्दान्विहाय संस्कृते श्वासार्थकः √अन् सोपसृष्ट एव प्रयुज्यते, परं लातिनांग्ल्यादिषु मूलरूपेणैव विद्यते। यथा—लाति० an-ma, आयर० anal गॉथ० anan, ग्रीक animas (अनिलः), नव्यलाति. alēn, an-hēlāre अत्रापि पूर्वपदं अन्-प्राण एवास्ति।

(ख) सं० आत्मन् ātman, ग्रीक atmos (अनिलः), पु० उ० जा० atum, जा० atem, आं० atmo-sphere, (वायुमण्डलं, वातावरणम्) शब्देऽपि पूर्वपदं ग्रीक atmos इत्येवास्ति।

(ग) सं० √धू dhū (कम्पने), धूमः, ग्रीक thuos आत्मा, लिथ्वा० dvasia (श्वासः आत्मा च), स्ला० duchu.

२. सं० √स्विद् svid, स्वेदः, आं० sweat.

एषः धातुः शब्दश्च नाना यूरोपीयासु भाषासु स्वरूपेणैवोपलभ्येते।

३. सं० वम् vam, वान्तम् वमितम्, आं० vomit एषो धातुः शब्दश्चापि प्रभूतासु युरोपीयभाषास्वनेनैव रूपेण प्रयुज्यते।

४. (क) सं० शकृत् śakṛt, ग्रीक kopsos, koprana.

सं० शकन्, लिथ० sikte, हि० छगन, राज० छाणा (अत्र 'शुष्कगोमये' ऽर्थसङ्कोचो जातः)।

(ख) सं० अव-स्करः ava-skaras, ग्रीक √krinō (sparate), लाति० आं० ex-crement, जा० schemel, उभयत्रोपसर्गौ भिन्नावपि प्रकृतिरर्थश्चैक एव।

(ग) सं० √हद् had<*ghed, >ग्रीक khigo, अल्बा० dhjes, अवे० जदह, हि० हगना।

(घ) सं० √गू gū, गूथ, gūtha वस्तुतो गोमयार्थकस्यास्य शब्दस्य पुरीषसामान्येऽर्थविस्तारो जातः। हि० गू० जा० kudd, kuddel muddl.

(ङ) सं० विष्ठा<विष-था इत्यस्ति, परं संस्कृतकोशेषु वि० पूर्वकात्स्थाधातोरयं निष्पाद्यते। एवं 'विष्ठा' 'निष्ठा' चोभौ शब्दौ सोदरावित्युच्यते। परं भाषाविज्ञानप्रतिपादितनिरुक्त्या नास्ति 'विष्ठा' निष्ठायाः सोदरः। विष्ठा

वस्तुतः शरीरस्थं विषमेवातो 'विष-था', इत्येषा निरुक्तिरेव समीचीना। हि० 'बीठ' इत्यत्र पक्षिगूथेऽर्थसंकोचः।

(च) रूसी० kal, पु० बुल्गा० kalu काला (यथा सं० मलिनं-मलम्) विष्ठार्थको जातस्तथैव रूस्यामपि काल (कृष्ण) मलार्थकोऽस्ति)।

५. सं० पर्द्[1] pard, आं० fart.

आंग्ल्यां fart < सं० पर्दशब्दमश्लीलं मत्वा तस्य स्थाने to break wind पञ्जाब्याञ्च 'हवा नहीं निकल दी' सदृशानि वाक्यानि प्रयुज्यन्ते। परं √पर्द् धातुः शब्दश्च समस्ताष्वपि सजातीयभाषासु विद्यते रूपद्वयेन। (क) एकत्र रेफः सुरक्षितः, (ख) अन्यत्र च रेफो लुप्तः।

(क) रेफयुक्तो यथा—सं० √पर्द् pard, ग्रीक perdomai, आं० fart, जा० farzēn, लिथ्वा० persti, रूसी perdet, अवे० pered इत्यादयः।

(ख) लाति० pēdere, फ्रेञ्च pēter, स्पेन peer हि० पाद, पादना। लोपं गच्छता रकारेण लातिनहिन्द्यादिशब्देषु पूर्ववर्ती अकारस्वरो दीर्घी कृतः।

(ग) आयर० braigin, रूमा basi सदृशेषु शब्देषु पकारस्य बकारो दकारस्य च गकारो जातः।

६. सं० मूत्रम् mūtram, आं० urine.

सजातीयासु मूत्रार्थका अप्यनेक एतादृशाः शब्दा विद्यन्ते ये खलु संस्कृतप्रकृतिजाः सन्ति। यथा—

(क) सं० √वृ vṛ, वर् वारिन्, ग्रीक aurō, ouron लाति० ūrrīna, आं० urine इतालवीय फ्रञ्चस्पेनीयरूमानीयादिष्वस्यैव सरूपाणि विद्यन्ते। एषु शब्देषु सर्वत्र वर् इत्यस्य वकारस्य सम्प्रसारणितं रूपम् उ विद्यते। आं० urinal सदृशास्ताद्धिताः शब्दा अप्यनेनैव निष्पद्यन्ते। अपि च आं० uria अथ च सं० उर्वरा urvarā इत्यनयोरपि प्रत्ययभेदेऽपि प्रकृतिरर्थश्चैक एव।

(ख) सं० √मिह् mih < *miegh, सं० मेहः—प्रमेहः (मूत्ररोगः), ग्रीक

---

१. पाणिनिना 'पर्द कुत्सिते शब्दे' इति पठितम्। परम् पर्दने सर्वत्रैव शब्दो न जायते। आंग्लकोशेषु fert इत्यस्य अपानवायुनिस्सरणमिति 'पर्द' इत्यस्य योऽर्थः प्रदीयते सः समीचीनतरः प्रतिभाति।

omeixma, लाति॰ mingere, स्पेनी॰ mear, आर्मे॰ mizem, अवे॰ mig मिज़ यथा—गोमेज़—गोमेहः, (गोमूत्रम्)।

(ग) सं॰ मूत्रम् mūtram, आयर॰ mūn, अवे॰ मुथ्र (गोमयम्)। जा॰ modder, आं॰ mud.

(अन्यत्र सं॰ मृद् इत्यस्मादांग्ल्या mud निष्पादितस्तच्चिन्त्यम्)।

(घ) सं॰ √सिच् sic<*seik$^{w}$e जा॰ seihen (strain filter), पु॰ बुल्गा॰ sitaci, रूसी scat.

७. सं॰ √स्वप् svap, √शी, शे śi<$k_{v}$ai, √द्रा drā निद्रासुषुप्तिशयनार्थकेभ्य एभ्यो धातुभ्यः सजातीयासु भाषासु नाना शब्दा निष्पद्यन्ते। यथा—

(क) सं॰ स्वप्, ग्रीक hupnos, नोर्स॰ sofa, डेनीय, स्वीडीय sove, पु॰ आं॰ swefen, स्लाव॰ सूप्ती, लाति॰ somnium, sōpīre, लिथ्वा॰ सपनस्, स्पेनी sueno, आयर॰ sūan, रूसी son, हि॰ सपना, सोना। (स्पेन्यायर्रूसीयहिन्द्यादिषु मध्यगः पकारः समानरूपेण लुप्तः। परं √फा॰ ख्वाब्, ख्वाबीदन् इत्यत्र सुरक्षित। आं॰ hipnotise, सदृशेषु शब्देषु 'स्वप्नः' (हि॰ सुलाना) सुरक्षितः। ग्रीक्यां यथानियमं सकारो हकारे परिणतः। लिथ्वानीय सपनस् हिन्द्याश्च सपना इति शब्दौ सर्वथा समानौ।

(ख) सं॰ √द्रा drā, नि-द्रा nidra, तन्द्रा, tandrā तन्द्रालुः आं॰ dream.

आं॰ drowse, drowsy (inclined to sleep, heavy with sleeppiness). आं॰ dormitory अपि द्रातिरेव।

(ग) सं॰ शी śi, *√$k_{v}$ī धातुः संस्कृतवत् केवलं ग्रीक्यामेवोपलभ्यते। यथा सं॰ शये, ग्रीक keimai.

८. सं॰ जागरणम्, आं॰ wake.

(क) सं॰ √शीङ्वत् √जागृ jāgṛ (गृ इत्यस्य द्विरुक्तं रूपम्) अपि ग्रीक्यामेवोपलभ्यते। यथा—ग्रीक igeīro, egerēgor (जागर्मि)। आं॰ eager (manifesting alacrity-cheerful readiness) अप्यनेनैव सम्बद्धः, अत्रापि धातोः पौनरुक्त्यं नास्ति। आदौ स्वार्थे स्वरागमः।

एवमेवावेस्तायामपि जगार (जागृत) सदृशानि रूपाण्युपलभ्यन्ते।

(ख) सं॰ वाजः vājas<*vag$^{w}$ (वै॰ बलम्, शक्तिरन्नादिकञ्च), लाति॰

vegere, आं० vigor, गॉथ० uswakegan, इं० wake[1] awake, waken, awaken, आं० vegetable, vegetarian इत्यादयोऽप्यनेनैव निष्पन्नाः।

## ५. जननम्

मानवस्य समग्रं कार्यजातं तस्य जन्मानन्तरमेवारभ्यत आमरणान्तञ्च सम्पाद्यतेऽतः सजातीयभाषासु जननमरणार्थकाः संस्कृतप्रकृतिजाः शब्दा धातवश्चोपस्थाप्यन्तेऽधुना।

(क) सं० √ जन् jan <* $g^{w}$en (प्रादुर्भावे), ग्रीक genno, लाति० genera, gignere (अत्र धातुरूपं द्विरुक्तम्) आयर० geinim, जन् *√ $g^{w}$en इत्यस्य jṇ ज्ञ इति क्षीणं रूपमपि सर्वासु भाषासु प्रचलितम्। यथा सं० ज्ञातिः <√jnātis. अस्यैवाद्यजकारलोपेन लाति० natus, natis अस्यैवान्ते on प्रत्यययोगेन आं० nation नेशन (जातिः) native (देशीय) सदृशा नैके शब्दाः सम्पद्यन्ते।

सं० जातः jātas, पु० नार्स० get, जा० be-get <सं० वि-जात (विशेषेण, स्पष्टतया जात इति)।

आं० pre-gnant इत्येषैवास्ति।

फा० ज़ाद, ज़ादन।

(ख) सं० √ सू० सु० su अस्य क्रियारूपाणि केवलं संस्कृत एव सुप्रयुज्यन्ते। पञ्जाब्या गौ सुई ए, (ब्याई) सदृशेषु वाक्येष्वद्याप्यर्थसंकोञ्चेन प्रयुज्यते। एष धातुस्तत्र गोमहिष्यादीनां प्रसव एव सुरक्षितः। सं० सूनुः, आं० son, सदृशा नैके विकृतयोऽनेकासु भाषासूपलभ्यन्ते।

(ग) सं० √ भृ bhṛ, भर्, आं० bear, जा० ge-baren, गॉ० ge-bairan सदृशान्यनेकानि रूपाणि जार्मण्यवर्गे प्रचलितानि।

(घ) सं० √ रुह् ruh <* रुध् उद्गमने, यथा प्ररोहः।

रूस्यादिस्लावीयवर्गे rodite (beget, bear)।

(ङ) सं० √ गम् gam <*gūem ग्मा (पृथ्वीः) अस्यैव क्षीणं रूपम्। ग्रीक gamos (विवाहः), लिथ्वा० gimdyat (उत्पद्यते, जनयति), पु० प्रशिय० gemton.

---

१. Sh. Ox. Eng. Dic.

(च) सं √जीव् jiv <*g$^{w}$ei> ग्रीक आं॰ gēo, लाति॰ vivere, vita, आं॰ beo, लिथ्वा॰ gyvos, रूसी zit, zivaz, zizn, अवे॰ जीव्, जीवा, फा॰ ज़ीस्तन्, ज़िन्दा, हि॰ जीना।

६. सं॰ मरणम् maraṇam, आं॰ death.

**पुनरपि जननं पुनरपि मरणं,**
**पुनरपि जननीजठरे शयनम्।**

अस्यां श्रीमद्भगवच्छङ्करपादोक्त्यामागता मरणं विहाय सर्वेऽपि शब्दाश्चर्चिताः। अधुना मरणवाचकाः शब्दा धातवश्चोपस्थाप्यन्ते।

(क) सं॰ √मृ,mṛ,मर् mar, लाति॰ mori, सं॰ मृतः mṛtas, ग्रीक brotos पु॰ उ॰ जा॰ mord, आं॰ murder आदयः शब्दाः पूर्वं प्रतिपादिताः।

(ख) सं॰ √नश् naś <* nak$_{y}$, ग्रीक nekus, लाति॰ nex.

(ग) सं॰ √दो do, (अखण्डने, अदितिः-अमरणशीला), आं॰ die. death.

(घ) सं √क्षन् kṣan (क्षणु अवदारणे), ग्रीक kteinō, आं॰ kill.

(ङ) सं॰ √हन् han <* g$^{w}$hen ग्रीक phonos, फा॰ ज़द, सं॰ घातः।

(च) सं॰ कुश् kuś (विदारणे), फा॰ कुश्तन्, कुश्ता। सं॰ कुशाप्येतस्मादेव।

**५. गमना[1]गमनधावनादयोऽन्ये व्यापाराः**

गमनागमनार्थका नैके संस्कृतधातवस्तेषां विकृतयश्च सर्वासु सजातीयभाषासूपलभ्यन्ते। तेषु √इ (इण्गतौ), गम् इति धातुद्वयं प्रामुख्यं भजेते।

(क) सं॰ √इ (इण्गतौ) ei, *i (√या अप्यस्यैव सम्प्रसारणितं रूपम्)। सं॰ एमि, ग्रीक eimi, लाति॰ ire, फ्रेञ्च irai (भविष्य), रूसी idi, पु॰ फा॰ aitiy अस्यांग्ल्यादिषु बहवो विकृतयोऽनेकत्र यथावसरं निर्दिष्टास्तत्रैव द्रष्टव्याः।

---

१. उत्क्षेपणापक्षेपणप्रसारणाकुञ्चनगमनादानि पञ्च कर्माणि।
अपि च गमनज्ञानप्राप्तिरित्येते त्रयो गमनार्थाः। एवं नानाविधा गमनार्थकाः संस्कृतधातवः सर्वासु सजातीयभाषासु प्रचलिताः सन्ति।

(ख) सं० √ या yā, अस्य रूपाणि भेरानीयबाल्टोस्लावीयवर्गयोरेवोपलभ्यन्ते। अवे० या, लिथ्वा० (याति) joti. सं० याम आं० year सदृशाः कालवाचका विकृतयस्तु सर्वासु भाषासु विद्यन्ते।

(ग) सं० √गम् gam<*g$^{w}$em गच्छ gaccha, (अत्र ग इति प्रकृत्या सह-च्छ<*स्कः प्रत्ययः) अप्यस्यैव रूपम्। आं० go, ग्रीक bainow (गमनम्)। लाति० venire (आगमनम्), गॉ० giman, आं० come (आगमनम्), पु० फा० ज़म >फा० आमदन्<आ-ग्म। (अत्र गकारो लुप्तः)।

(घ) सं √ गच्छ gaccha, ग्रीक baskō, अवे० ज़सइति, फा० गश्तन्.

(ङ) सं० √ पृ, पर्, par, पारयति, पारं गच्छति, लाति portūre, आं० import, export, passport, porter portico, अप्यतेनैव सम्बद्धाः।

गॉथ faran, आं० fare, जा० fahren (यात्रा)।

(च) सं० √ गा gā (गाङ् गतौ), डेनीय स्वीडीय gā-boral (गमन-मार्गः) आं०go , जार्म० gehen, (गमनम् walk).

(छ) √ वल्ग् valg (गतौ शब्दे च) अस्य रूपाणि जार्मण्यवर्ग एवोपलभ्यन्ते। यथा-आं० walk, जा० walken (पूर्ण)।

(ज) √धाव् dhāv (धावु गतिशुद्ध्योः) ग्रीक theō (तीव्र) पु० आं० deaw, आं० dew (अवश्यायः), फा० √ दवीदन् (धावनम्), हिन्द्यां धोना इति रूपेण शुद्ध्यर्थ एव प्रयुज्यते, परं संस्कृते धावति, धौतं वस्त्रम् इत्यादिरूपेणार्थद्वये प्रयुज्यतेऽपि च 'धावक' इति रूपेण हिन्द्यामपि पुनर्गत्यर्थेऽपि प्रयोगः प्रचलितोऽस्य √धाव् धातोः।

(झ) सं० √ऋ, ṛ ऋणोति, ऋण्वति, (चलनम्) आं० run, जा० rennen, सं √ईर इत्यप्यस्यै (गुणितं रूपम्) आं० rise सदृशा नैके धातवः शब्दाश्चानेनैव सम्बद्धाः।

(ञ) सं० √ भुज् bhuj, ग्रीक pheugo, हि० भागना। (भुग्नार्थेऽस्य प्रयोगोऽन्यत्र द्रष्टव्यः)।

(ट) सं० √ प्लु, plu, आं० fly, flow, float, flood अप्यनेनैव सम्बद्धाः।

(ठ) सं० √ पत्, pat, पु० आं० puten, (to thrust, push). वस्तुत: पत् धातुरुत्पतनार्थकोऽस्ति। (अस्य पतनन्तु पश्चाज्जातम्)। अनेनैव पत्रं, पत्री सदृशाः शब्दा निष्पद्यन्ते। ग्रीक petō, सं० पत्रमेवांग्ल्याः feather इत्यस्ति। (एतत्सर्वमन्यत्र निरूपितम्)।

पञ्जाब्यां 'पुट सुट्टया'—(उखाड़फेंका) इत्यत्र पत् धातोःमुख्यार्थःसुरक्षितः।

## ५. वस्त्राभरणानि

### Dress and Ornaments

वस्त्राभरणान्यपि मानवकृतेऽत्यावश्यकानि। वस्त्रादीनां नामान्यप्यनेकासु भाषासु समानान्येव। तद्यथा—

(क) सं० वस् vas, वस्त्रम्, वसनम् वासः ग्रीक hestha, hennumi <* fesnūme, लातिन्यादीतालीयवर्गे vestire, लाति०, आं० vesture (वस्त्रम्), vestiture (तदेव), vestry (चर्चे वस्त्रपरिधानकक्षः), vestment, अत्रैव in उपसर्गयोगेन आं in-vestment इति जायते।

सं० √ वस् vas, गॉथ० wasjan, पु० आं० wrrrian, आं० wear, (पदान्ते सकारो रेफे परिवर्तत एव)।

(ख) सं० द्रापि drāpi (वै० चोगा), लिथ्वा० drapanos, आं० draper drapery. अवे० फा० दरफ्शा (पताका, ध्वजाञ्चलम्)।

(ग) सं० अत्कः atkas (वै० परिधानम्, garment) अवे० फा० खिल-अत, आं० attire.

(घ) सं० अपर्वन् aparvan (ग्रन्थिहीनं-वस्त्रम्), आं० apron.

(ङ) सं० √ पुष् puṣ (धारणे)[1] अवे० फा०, हि० पोशाक। ग्रीक्यामयं

---

१. पाणिनिना धातुरयं चुरादिगणे 'धारणार्थे' पठितः। पु० पारस्यां फारस्याश्च 'पोशाक' इति विकृतावयं सुरक्षितः। हिन्द्यां पोशाक फारसीशब्द एव मन्यते, परमस्य √ 'पुष्' इति प्रकृतिस्तु संस्कृत एव विद्यते। अतोऽयं संस्कृतशब्द एव। Monier William विरचिते संस्कृतकोषे तथैवान्येष्वपि कोषेषु कुत्रापि √पुष् (धारणे, to wear) इत्यर्थो न प्रदर्शितः। सर्वे खलु धारणार्थे पाणिनिना पठिताद् √पुष् धातोरपरिचिताः। अतएव पुशीदन् इति धातुं सर्वे फारस्या एव मन्यन्ते।

धारणार्थकः √पुष् pāpoutse < *'सं० पादपोश, इति समस्तपदे सुरक्षितः। फारस्यान्तु √पुशीदन् इति धातुरस्त्येव। मेजपोश, पोशाकसदृशा विकृतयोऽपि तत्र विद्यन्ते।

(च) सं० √ तक्ष taks, लाति० texere (अनेकार्थकोऽयं धातुः), सं० तक्षन्, ग्रीक tekton. (तक्षः), लाति० textum,textile (वस्त्रवयनयन्त्रम्)। एवमेवान्यान्यपि वस्त्राभरणनामानि सजातीयभाषासु संस्कृतसमानान्येव, तान्यन्यत्रोक्तानि तत्रैव द्रष्टव्यानि।

# प्राणिवर्गः

## अन्ये प्राणिनः Animals

यद्यपि सं० प्राणिशब्देन सर्वे प्राणिनो (मनुष्यसहिता), गृह्यन्ते, परं आं० animal वत् सं० प्राणिशब्देनाप्यन्यान्या जीवजन्तव एव सामान्यतोऽवगम्यन्ते। मनुष्यवदन्येषां प्राणिनां नामान्यपि सर्वासु सजातीयासु भाषासु संस्कृतसमानानि संस्कृतप्रकृतिजानि वा सन्ति। यथा हि—सं० प्राणि prāni, आं० animal इत्युभावपि शब्दौ सं० √ अन् an प्राणने इति प्रकृत्या प्रत्ययभेदान्निष्पन्नौ। अथ च संस्कृते √अन् प्रायेण प्रोपसृष्ट एव प्रयुज्यते, परं यूरोपीयासु भाषासु निरुपसृष्ट एवास्ति।

'आरण्यांग्राम्यांश्च ये'

इति वेदप्रतिपादितदिशा प्राणिनोऽपि वर्गद्वये विभक्ताः। यथा—animal (पशु) शब्दो ग्राम्यपशु domestic animals कृत एव प्रयुज्यते। अतः पूर्वं ग्राम्यपशवोऽत्र निरूप्यन्ते।

१. सं० पशुः paśus<*pek$_{v}$us>लाति० pocus, पु० आं० feoh, आं० fee, जा० vieh एवं जार्मण्यवर्गीयासु सर्वासु भाषासु लातिन्याञ्च पशुशब्दो विद्यते। आंग्ल्यामद्यत्व fee, शुल्कार्थे प्रयुज्यते, परं पुरा पश्वर्थक एवायं शब्द आसीत्।

पारस्करगृह्यसूत्रादिष्वपि 'ब्राह्मणस्य गौर्वरः, अश्वो राजन्यस्य' सदृशेषु प्रसंगेषु दक्षिणाशुल्ककृते गौरश्वादयो शुल्कार्थे प्रयुज्यमानाः दृश्यन्ते।

२. सर्वेषु पशुषु गौर्महत्त्वातिशयं भजते। गौः, धेनुः, नैचिकी, वष्कयणी, स्तरी, वशा, इत्येतानि संस्कृत उपलब्धानि गौर्नामान्यन्यास्वपि भाषासु विद्यन्ते। यथा—

(क) सं० गौः gāus, ग्रीक bous, लाति० bos, (उभयत्र गकारो बकारे परिणतः), स्पे० ganado, वेल्श० gwerth, (go-worth मूल्यम्), रूसी govjado (गव्य), govja-din (गोमांसम्), लेटिश guov (सर्वत्र गकारः सुरक्षितः), आर्मे० kow, डेनी० kveg, पु० आं० cu, आं० cow, जा० kuh. (जार्मण्यवर्गे गकारः ककारे परिवर्तितः), अवे० gao, फा० गाव, हि० गाय।

(एवं गौरित्यस्य 'गावि, गोणि, गोता इत्यादयो नैका विकृतयो दृश्यन्ते,' इति पतञ्जलिना यदुक्तं तत्सर्वथा दृग्गोचरी भवति)।

(क) सं० धेनुः dhēnus, आयर० dinu (मेषी)।

(ख) सं० वशा vaśa, इता० vacca, फ्रेञ्च vaehe, स्पे० vaca.

(ग) सं० स्तरी starī (वन्ध्या गौः), गॉथ० stiur (वत्सः), आं० steer- (युवा गोः) जा० stier (गोः)।

(घ) सं० नैचिकी nāichikī (उत्तमा गौः), पु० उ० जा० nōz, पु० आं० neat.

(ङ) सं० वष्कयणी, हि०, पं०, राज० 'बाखड़ी' (चिरप्रसूता गौः)।

३- (क) सं० उक्षन् ukṣan, उक्षा (प्र० ए० व०), आं० ox जा० oches डच os.

(ख) सं० बल, बली bali, आं० bull, एषोऽपि बली भवति।

सं० बलिवर्दोऽप्येप एव।

(ग) सं० गोः gos, लाति० bos, ग्रीक० bodi.

४. (क) सं० वत्सः vatsas, लाति० vitulus, ग्रीक etos, फ्रेञ्च veaue (सर्वत्र मुख्योऽर्थो वत्सर एव)।

(ख) सं० गर्भः garbhas>आं० calf.

(ग) सं० तर्णकः tarṇakas, स्पे० tierno (युवकः), ternero, रूसी telenok अप्येष एव प्रतीयते।

सं० तरुणः स्पे० teerno.

५. सं० अविः avis, आं० ewe, स्ला० ovinu.

६. सं० रामः rāmas. आं० ram.

७. सं० अज् aj-गतौ, अजः, अजा ajā, ग्रीक agō, aiz, लिथ्वा० ozka रूसी koza, जा० ziege.

इति पयोदपशुनामान्युत्क्रान्तानि।

**अन्ये गृह्याः पशवः**

सं० अश्वः, भारोपीयोऽश्वः<*e$k_w$os पुरा प्रायशः सर्वासु भारोपीयासु भाषासु विद्यमानोऽप्याधुनिकासु फा० अश्व, फा० हि० [1]'अस्वारीत्यस्य गौणरूपञ्च विहाय सर्वत्रादर्शनतां गतः। तत्स्थाने चान्यान्ये शब्दाः प्रचलिताः।

८. (क) सं० अश्वः aśvas<*e$k_w$vas>ग्रीक hippos, hikkos लाति० equus. सं० अश्वा, लाति० equa लिथ् esva, अवे० पु० फा० अस्प, फा० अस्ब।

(ख) आं० horse, जा० (h) ross, सदृशाः शब्दा लाति० currere (run), सं० √कूर्द् >कूर्त् >कोर्स>horse इतिरूपेण निष्पाद्यन्ते।

(ग) सं० अश्वतरः (री) aśvataras, (ri), संस्कृतस्यायं 'खच्चर' वाचको ऽश्वतरशब्दः फारस्यां अश्तर इत्यस्ति।

९. (क) क्रमेलः आं० camel (सर्वासु भाषास्वयमेव शब्दः प्रचलितः)। संस्कृतेऽपि ग्रीक्या एवागतोऽतः कोषेषु क्रम् धातोरस्य या व्युत्पत्तिः प्रदर्श्यते सा तु कल्पितैव।

(ख) सं० उष्ट्रः uṣtras, फा० शुतर।

१०. सं० गजः gajas आं० elephant, ग्रीक elephas, अव्युत्पन्नोऽयं शब्दः संस्कृतस्यासजातीय एव। तथापि ग्रीक elephos, सं० इभः (कलभः गजार्भकः) अत्र शब्दार्थसाम्यन्तु प्रतीयते।

११. खरः kharas एषः शब्द संस्कृतं विहाय फारस्यामेवोपलभ्यते।

१२. सं श्वन् śvan आं० hound. (अग्रे वन्यपशु नामस्ववलोकनीयः)।

१३. सं० शर्ध śardhas, (समजः, हि० रेवड)<* $k_w$erdhas> आं० herd.

**इति ग्राम्यपशुनामान्युत्क्रान्तानि।**

---

१. फा० <अस्बारी सं० अश्वभारी (अश्वेन भ्रियते, धार्यत) इत्यस्ति। कोषेषु अश्ववारी'ति या व्युत्पत्तिः प्रदर्शिता, सा तु कल्पितैव।

**वन्यप्राणिनः** wild animals

१. कपिः kapis, ग्रीक kēpos, आं० ape.

२. सं० वृकः vṛkas, आं० wolf.

३. सं० लोपासः lopāsas स्पेनी raposa, *rapo (पुच्छ) । सं० लोमटः (लोमड़ी) । फा० रुबा० <सं० लोपास् ।

सं० पुच्छ[1] puccha <*posk$^{w}$e. >आं० fox

४. सं० श्वन्[2] <*k$_{v}$von> ग्रीक kuon, लाति० canes, इता० cane, फ्रेञ्च chien, आयर० cu, गॉथ० hund, आं० hound, जा० hund, लिथ्वा० suo, लेटिश० suns, अवे० स्पन्, फा० सग ।

५. सं० सूकरः, श्वा इव सूकरोऽप्यारण्यो भूत्वापि ग्राम्योऽपि जातः । भेरान्यां विहायान्यासु भाषासु ग्राम्यारण्ययोरुभयोरपि सूकरप्रकारयोः कृते विभिन्ने सञ्ज्ञे स्तः ।

(क) सूकरः (सू सू इति शब्दं करोति) sūkaras, ग्रीक hūs, लाति० sus पु० आं० sū, आं० swine, जा० schween, रूसी sviwjn, अवे० hu.

(ख) सं० वराहः varāhas, (वन्यः शूकरः), आं० boar, अनयोः शब्दार्थयोः साम्यन्तु विद्यते, परं साजात्यं चिन्त्यम् ।

६. शृगालः, आं० jackal (तुर्की शब्दोऽयं ग्रीक्याः संस्कृतमागतः) ।

७. सं० शरभः, आं० zirraf.

८. (क) सं० ऋक्षः ṛkṣas, ग्रीक orktos, लाति० vrsus, आयर० cert.

---

१. सं० पुच्छस्य जार्मण्यवर्गे लोमट इत्यर्थेऽर्थविस्तारो जातो, यतो हि लोमटस्य पुच्छमेव प्राधान्यं भजते । एतत्तु तथैव जातं यथा सं० लांगूलम् (पुच्छम्) हिन्द्यां लंगूर (वानर) इति जातः । अत्रापि लांगूलस्यैव प्राधान्येन तस्य वानरार्थेऽर्थविस्तारो जातः ।

२. श्वा अपि लोमटजातीय एव । अतोऽसावप्यत्र गृह्यते ।

(ख) सं० भ्रू: bhrūs, हि० भूरा, आं० bear, जार्मण्यवर्गीयाः सर्वेऽपि शब्दा एतादृशा एव सन्ति ।

९. सं० शषः śaṣas, <* $k_v$esos>जा० hase, आं० hare (*$k_v$e संस्कृते शकारे आंग्ल्याञ्च हकारे परिणतः । सकारश्चांग्ल्यां रेफो जातः) ।

१०. सं० मूषः mūṣas, आं० mous, mece (मूषिका) फा० मूश ।

११. सं० बभ्रुः babhrus (भूरे रंग का जंगली हिंस्र जीव, सिंह, रीछ आदि) आं० bear, (ऋक्षः), boar (वन्यशूकरः) आं० brown (भूरा) अप्येष एव ।

## कृमिकीटपतङ्गाद्याः Insect & Worms

स१. ं० कृमिः kṛmis, आयर० cruim, लिथ्वा० kirmis, फा० किरम, हिन्दी, पंजाबी किरमची (रक्तवर्णः, इन्द्रगोपकारणात्) ।

२. सं० वम्रिः vamris (वै० वाल्मीकः, पिपीलिका च दीमक), फा० मूर (पिपीलिका) ।

३. स० √वृ vṛ, वर्तुल, आं० worm शब्दस्याप्येषैव प्रकृतिः ।

४. (क) सं० सर्पः sarpas, आं० serpent.

(ख) सं० अहिः ahis, ग्रीक० offis.

५. (क) सं० कर्कः karkas लाति०, आं० cancer.

(ख) crab.

६. सं० उद्रः udras (ऊदबिलाव), आं० otter.

७. सं० मद्गुः madgus, आं० marrow, फा० मुर्ग-आबी ।

८. विहगसामान्यस्य वै० 'विः', पत्री चेत्युभे नामान्यन्यास्वपि लभ्यन्ते । यथा—

(क) सं० विः[1] vis (वै० पक्षी), लाति० avi (ब्रिट० vi, वेल्श wy) ।

---

१. वेदा यो वीनां पदमन्तरिक्षेण पतताम् । ऋग्वेदः ।

(ख) सं० √पत् pat, पत्त्री, ग्रीक petnon, pouli (पक्षी chicken).

(ग) सं० पत्रम् patram, आं० feather.

सं० विः vis, लाति० avis, आं० egg <*owe,o, ग्रीक weon, आं० ova, ovalteen खाद्यपदार्थविशेषस्य नामाप्येतस्मादेव ।

सं० अण्डः <*अजः, सं० अण्डकोष इव भवत्यण्डोऽपि । लिथ्वान्यां केवलं कोशिस् kausis (कोषः) शब्दोऽण्डार्थकोऽस्ति ।

९. सं० कोकिलः kokilas, आं० cuckoo.

१०. सं० कुक्कुटः kukku-tas, आं० cock, hen. (यतो ह्ययं कुक् कू, कू-३ इति शब्दं करोति । पं० कुक्कुड़, राज० कूकड़ा फा० मुर्ग <सं० मृगः ।

११. सं० क्रोञ्चः, kronc. आं० crane.

१२. सं० काकः kākas, आं० crow, (अपि सं० क्रोञ्च एव) ।

१३. सं० उलू (कः) ulukas, आं० owl.

१४. सं० चटकः, आं० sperrow <√स्फुर् ।

१५. सं० नक्तं-गायः naktam-gayas, आं० nightangle.

१६. सं भृङ्गः bhṛngas, आं० bee.

१७. सं० मक्षिका, मू-मू (हि० भूं-भूं) इति ध्वन्यनुकरणवाचक √मू प्रकृतेर्मक्षिकामशकाद्यर्थका नैके शब्दाः सजातीयासु भाषासूपलभ्यन्ते । यथा—

सं० मक्षिका makṣikā, ग्रीक mūga, लाति० musca, जा० muckcl लिथ्वा० muse, स्लाव० much, आं० mos-quto <सं० मक्ष >मश्-कीटः, अथवा सं० मक्षी शब्दात् ट प्रत्यययोगेनापि आं० mosqu-to शब्दो निष्पद्यते । फा० मग्ज़ ।

१८. सं० हंसः आं० goos.

### पशुपक्षिणामवयवाः

सामान्येन पशुपक्षिणामवयवा अपि त एव विद्यन्ते ये खलु मानवानाम् । तथापि तेषां कानिचिदङ्गानि विशिष्टानि सन्ति । तेषां नामान्यपि सर्वासु भाषासु

संस्कृतप्रकृतिजान्येव । यथा—

१. सं० शफः śaphas, आं० hoof.

२. सं० ऊधस् ūdhas, आं० udder.

३. सं० मन्या manyā, आं० mane.
(अश्वादीनां कन्धरायाः केशावलिः) ।

४. सं० √शॄ śṛ, विदारणे, शृङ्गम् sṛngam, आं० horn.

५. सं० पत्त्रम् pattram, आं० feather.

इति पशुपक्षिकीटपतङ्गादीनां नामान्युत्क्रान्तानि ।

# पृथिवीवर्गः

**'द्यावापृथिव्योरिदमन्तरं हि'**

इति गीतोक्तदिशा समग्रमपि विश्वं द्यावापृथिव्योरन्तरि वर्ततेऽतोऽत्र द्यावापृथिवी-सम्बद्धपदार्थानां यानि संस्कृतनामान्यन्यासु सजातीयभाषासूपलभ्यन्ते, तान्यत्रोप-स्थाप्यन्ते।

संसारस्येमानि द्वे नामानि संस्कृतप्रकृतिजानि सन्ति—

(क) सं० वीर vīr, लाति vir√-अल् al, अलितम् alitam—आं० world इति पूर्वमेव व्याख्यातम्।

(ख) सं० √लोकृ lokṛ, लोक् दर्शने, ग्रीक lukos (bright), लोकः open space, earth, world, यतो ह्ययं आलोक्यते सर्वत्र स्पष्टं दृश्यते अत एव लोक इत्युच्यते।

लाति० lūcus (grove), लिथ्वा० laukas (क्षेत्रम्), हिन्द्यां लोग पं० लोकि इत्येतौ मनुष्यार्थे प्रचलितौ। संस्कृते लोकशब्दो देशार्थेऽपि प्रयुज्यते, यथा-ऽमरकोशे प्रतिपादितम्—

**'लोकोऽयं भारतं वर्षम्'**

२. पृथ्वीनामानि

पृथिव्या इमानि संस्कृतनामानि सजातीयासु भाषास्वपि विद्यन्ते—

(क) सं० क्ष्मा kṣmā (वै०), ग्रीक xamelos, xamoi (क्ष्मायाम्) लाति० humus.

(ख) सं० √पृथ् pṛth, पृथु, पृथ्वी, आं० plateau (एषोऽपि प्रथितो भवति), आं० flat अप्येतस्मादेव। हि० 'पठार' अप्येष एव।

(ग) सं० √तृष् tṛṣ, तर्षः (be thirsty) लाति० terra (dry up, यतो-ह्येषा जलान्निर्गत्य शुष्का जातात एवास्या एतन्नाम)।

अन्यत्र लाति० terra सं० धरया सम्बद्धा प्रदर्शिता तच्चिन्त्यम् ।

(घ) सं० ऋ गतौ ṛ अर् ar, गतौ इत्यस्मादांग्ल्या earth, गॉ० airtha, जा० erde सदृशाः शब्दा निष्पद्यन्ते ।

(ङ) सं० ज्मा jmā (वै०), अवे० zam ज़म, फा० ज़मीं, हि० ज़मीन ।

(च) सं० ज्या jyā यथा—'ज्यामितिः', ग्रीक gaīa.

(संस्कृते ज्याशब्दो ग्रीक्या आगतः) ।

(छ) सं० पद pad, स्थानम् step, ग्रीक pedon, लिथ्वा० padas.

(ज) सं० मृद्, मर्द mṛd, पु० आं० molde (शिथिला भूमिः soil), आं० mold.

(झ) बुघ्नः budhnas, आं० bottom, जा० boden.

३. (क) सं० √धू dhū, धूलिः dhūlis, नार्श० dupt, आं० dust, जा० duft (fragrance) लिथ्वा० dulkes.

ग्रीक thinos (सिकिता-कूलम्), पु० आं० dun (पर्वतः) आं० down अप्येतस्मादेव ।

सं० द्रोणिः droṇis शब्दादपि दून शब्दो निष्पद्यते, यथा-देहरादून ।

(ख) सं० पृषत् pṛṣat (विन्दुः, विकीर्णम्), रूसी prach, पोलीय pierszye (विन्दुः) आ० sprinkle.

(ग) सं० पांशुः pānśus, पांशुकः pānśukas स्लाव० pesuku.

(घ) सं० मु mu, मू mū, मूत्रम्, पु० आं० mudde, आं० mud (पंकः) ।

(ङ) सं० स्त्यै styāi, ष्ट्यै शब्दसंघातयोः, स्तायते, अस्माद् धातोर्जर्मण्यवर्गीयाः गॉ० stains, पु० आं० stān, जा० stein, आं० stone सदृशाः शब्दा निष्पद्यन्ते।

(च) सं अश्मन् aśman, लिथ्वा० akmon, स्लाव० kamy, फा० संग सं० अश्मकः ।

४. सं० √शृ śṛ<*$k_v$el >शृंगम् (पर्वतशिखरम्), ग्रीक kolōnos, लाति० collis, clivus (slope, hill), आं० hill, आंग्ल्या √lean अप्येतस्मादेव । स्पे० carro (पर्वतः) ।

५. सं० स्ना snā लाति० nāre, ग्रीक nēsos (द्वीपम्), Indo-nesia शब्दे विद्यमानो nesia एष एव ।

१. **समुद्रः**

पर्वतैः सहैव समुद्रोऽपि स्मृतिपथमागच्छति। एतानि संस्कृतप्रकृतिजानि समुद्रनामान्यन्यासु सजातीयभाषासूपलभ्यन्ते ।

(क) सं० उद्रम् udram (जलम्), ग्रीक, आं० hydros (जलम्), समुपसर्गपूर्वकात् उद्र शब्दाद् समुद्रशब्दो निष्पद्यते । एवं समुद्रशब्दे विद्यमानमुद्रमेवाद्यहकारागमेन ग्रीक्यां hydros इति जातः ।

(ख) सं० पाथः pāthas (जलम्) पन्था, ग्रीक pontos (समुद्रः) ।

(ग) सं० ज्रयः[1] jrayas (वै० विस्तारः, प्रसारः expanse), अवे० zrayah, पु० फा० द्रयः, फा० दरया (समुद्रः, विशाला सरिच्च) ।

२. **आपः**

समुद्रेण सहैव अपामपि स्मरणं जायते । इमानि संस्कृतजलनामान्यन्यत्रोपलभ्यन्ते ।

(क) सं० आपः āpas, लाति० aqua (यथा सं० √पच् *pek$^w$e इत्यस्य लातिन्या cook इत्यत्र पकारः ककारे परिणतस्तथैव : 'आप्' इत्यस्य पकारोऽपि que जातः । यथा (aquarium), अवे० आप, फा० आब ।

(ख) ग्रीक्यां जलार्थको nero इति शब्दोऽप्यस्ति, एष सं० नीर इत्यस्य सजातीयः प्रतीयते ।

(ग) सं० उद्रः (उपरि निर्दिष्टः) >आं० water.

---

१. उरुज्रयः ऋग्वेद ६।५२।५

### ३. सरित्

संस्कृतप्रकृतिजानि सरिन्नामान्यन्यत्रैतान्यवलोक्यन्ते ।

(क) सं० स्रु sru, स्रोतः, स्रोतस्विनी, आं० river, पू० फा० rauta, फा० रूदखन् । (सर्वत्र आद्यः सकारो घृष्टः) ।

(ख) सं० रि ri, लाति० rivus, स्लाव reka.

(ग) सं० पत् pat, ग्रीक potamai (पतामि), potamas (नदी) । आंग्ल्यां प्रचलितं मेसोपोटेमिया इतीरानेराकप्रदेशस्य भूभागस्यास्मिन्नाम्न्युत्तरपदं पोतेमिया नद्यर्थकमेवास्ति। पूर्वपदं मेसो messo इत्यपि सं० मध्य शब्दात्तथैव विकसितं यथा प्राकृते सं० मध्य>मज्झ इति जायते । हि० मझला इत्यत्रापि सं० मध्य शब्दः सुरक्षितः । ग्रीक्यामपि ssइत्यस्य ज्ञ इत्युच्चारणं भवति ।

(घ) सं० √प्लु plu, प्लवः, प्लुतः, जा० fluss. (नदी) ।

(ङ) सं० √स्रु sru, आं० stream, जा० strom. (सं० स्रु इत्यत्र जार्मण्यवर्गे मध्ये तकारागमो जायते) ।

### ४. तीरम्

संस्कृतस्यैषः तीर शब्दः √तॄ, तर् धातोर्निष्पद्यते ।

(क) सं० तर्म (वै०) tarm, लाति०, आं० termen, terminal, terminate सदृशा नैके ताद्धिताः शब्दा अनेन सम्बद्धा इति तु पूर्वमेवोक्तम् ।

(ख) सं० √भञ्ज् bhanj, पु० उ० जा० banch, आं० bank.

# अथ पुरवर्गः

**नगरदेशजात्यादिनामानि**

१. सं० अज्रः ajras (वै०), अजिरम्, लाति० ager, आं० accer.

२. सं० भूः bhūs जा० boenu, आं० build.

३. सं० √स्था sthā, स्थानम्, स्लाव० stanu (camp), आं० stool, जा० stuhel, स्लाव० pre-stolu (सिंहासनम्)। जा० stuble.

४. (क) सं० वेश्मन् veśman, जा० vohnung.

(ख) सं० √विश् viś, vēśas वेशः, ग्रीक oikos, लाति० vicus, पु० आं० vic स्लाव० vesi, ला० viscinity अप्येतस्मादेव।

५. सं० दमः damas, ग्रीक domos, लाति० domus, आं० domestic.

६. सं० √कू kū, (कोशः) गॉ० hus, आं० hose >होजियरी, house.

सं० गृहम् gṛham, <*ghordio, >गॉ० gards (house), आं० garth, (yard), garden, जा० garten.

७. सं० ग्रामः gramas, लाति० grāmium (क्रोडः)।

८. सं० √शी śī<*k$_v$ae, ग्रीक keimai>गॉ० haims (ग्रामः), पु० आं० ham, आं० home, (dwelling, house, यस्मिन् जनाः शेरते)।

९. सं० आगारम् āgāram, ग्रीक agora (विपणिः)।

१०. सं० √तनु विस्तारे tanu, आं० tent.

११. सं० शाला śālā<*k$_v$ele (cover, hide) लाति० celāre, पु० आं० helan, आं० hall.

१२. सं० √स्थग् sthag, छदिः chadis, ग्रीक stego, आं० thatch, जा० dach.

१३. सं० अस्तम् astam (वै० गृहम्), अवे० फा० अस्ताना ।

**देशजात्यादिनामानि**

१. (क) सं० पूर् pūr, पुर् pur, पुरी purī, ग्रीक polis, politeia, लिथ्वा० pilis, आं० metro-polis. अत्र सं० मातृ इति उपपदं, cosmo-politan (सार्वदैशिक) politics, politician इत्यादयः शब्दा अप्यस्यैव ताद्धितानि रूपाणि ।

(ख) सं० पृ pṛ < *per, pel, ग्रीक plēthos, लाति०, आं populus, popu-lation, people अप्येतस्मादेव । आं० folk, जा० wolk अप्येष एव ।

२. सं० वर्गः vargas (विभागः, समूहः), लाति० vulgus (जनसामान्यः), लाति०, आं० vulgar, रूसी volom (बाहुल्यम्) ।

३. सं० √ रुध् rudh, वृद्धौ, पु० उ० जा० liotan, जा० leute (जनता) ।

सं० √ रज् raj, राज् rāj. *reg$^{w}$.

४. सं० √ ऋज् ṛj, ऋजु (√ रज् इत्यस्य गुणितस्य रूपस्यैव √ ऋज् इति सम्प्रसारणितं राज् इति च वृद्धिरूपमस्ति । पुनः ऋज् इत्यस्मात् 'अर्ज्' इति गुणितरूपयुक्तो धातुर्निष्पद्यते । सं रिजिष्पं (वै० ऋजुः) सदृशाः शब्दा √ ऋज् धातोर्निष्पद्यन्ते । ग्रीक ōrego, लाति० regere, rēgula, आं० regulate, regular, regulation जा० regieren, लाति० rēx, rēgis, पु० आं० reule, आं० rule, ruller (मध्यगः गकारो लुप्तो) royal (वेदे राज् शब्दो हलन्तोऽप्यस्ति, लोके तु 'सम्राज्' इति सोपसृष्ट रूप एवैष उपलभ्यते । आयरीयभाषायां rig इति षष्ठ्यैकवचनं रूपम् । आंग्ल्या regal सदृशास्ताद्धिताः शब्दाः फ्रेञ्च regir शब्दोऽपि गकारयुक्त एव ।

५. सं० महत् mahat < *magnat, सं० महत्तरः < mag-is-tro, लाति० magister आं० magistrate अप्यस्यैव ताद्धितं रूपम् । पु० आं० maegester, म० आं० maister, meister आं० master.

६. सं० भूः bhūs, पु० आं० buan, नार्स० būa, गॉ० bauan < सं० भुवनम्, भवनम् ।

७. आं० neigh-bour, लाति० nachbar अस्य पूर्वपदं जार्मण्या nach, naach सं० नेदीयस् इत्यस्माद् विकसितम् । 'नेदीयस् भवन'मित्यस्ति यौगिकोऽर्थः आं० neighbour इत्यस्य ।

सं० वस् vas, वास्तु vāstu (गृहम्), ग्रीक hastu (उपनगरम्)।

सं० स्योन (वै.) syona (सुखकरः, providing a comfertable home), यथा —यस्मै त्वं सुकृते कृणवः स्यानम्। स्योना पृथ्वीः। लाति. cīvis, civitas, आं० civil, civilian, civilization इत्येषां संस्कृतलातिनशब्दानां प्रत्ययभेदेऽपि प्रकृतिस्त्वैकैव। लाति०, आं० city अप्येतस्मादेव।

**देशविशेषाणां नामानि—**

सं० ऋ गतौ ṛ, अर्यः, आर्यः, आर्यावर्तम्।

सं० आर्याणाम् > फा० ईरान, Ireland, आं० Armenia उभयत्रपूर्वपदं सं० आर्य एव।

सं० घर्मन् gharman > German[1] जर्मनीत्यत्र स्वार्थे ईकारः (पूर्वं निरूपितम्)

सं० तु tu, तू tū स्थौल्ये दृढीकरणे च इति प्रकृत्या भारोपीयः Teuta, ततश्च Tuton इति जार्मण्यजातेर्नाम निष्पद्यते।

सं० सिन्धुः Sindhus (नदीविशेषस्तत्समीपवर्तीप्रदेशश्च) > फा० हिन्दु > ग्रीक Indic, जा० Indis, आं० India (ईरानीयवर्गे सकारो हकारे परिणमति यूरोपीयास्वनेकासु वाक्षु पदादौ हकारो लुप्यते। एवं सं० सिन्धुः > फा० हिन्दु > आं० India इति जातः।

Indonesia, Mesopotamia इत्येतौ व्याख्यातचरौ।

सं० उषस् usas, ग्रीक ēōs > आं० Asia[2].

---

१. यद्यपि मोक्षमूलरभट्टमहोदयेन स्वसम्पादितस्य ऋग्वेदस्य मुखपृष्ठे स्वनाम्ना सह 'शार्मण्यदेशोद्भवेन' इति लिखित्वा जर्मनदेशस्य शार्मण्य इति समुचितं संस्कृतीकरणं कृतम्, परं भाषाविज्ञाने तु सं० घर्मन् शब्दादेव जर्मन शब्दो निष्पाद्यते।

२. Eric Partridge इत्याख्येन महानुभावेन ORIGINS इत्याख्ये ग्रन्थे Asia, East इत्येत्तु प्रदत्तः, परमेष शब्दः Asu इत्यस्मान्निष्पादयता लिखितम् perh. from Ass, Asu, अपरत्र च East शब्दं व्युत्पादयता तेनैव महानु-

सं० उरुः urus (विस्तृतः)> आं० Europe. पैट्रिज महोदयेन The broad country इत्यस्य शब्दार्थः, प्रदतः ग्रीक्याश्च Eurus, Broad, wide इत्यपि निर्दिष्टं, परमत्रापि तेन ग्रीक्या Eurus इत्यस्य सरूपं सं० उरुः शब्दः नैवोद्धृतः ।

सं० पारसीकः[1] pārsikas, यतो ह्ययं देशः भारतात् पारे वर्तते अत एव भारतीयैरस्य देशस्यायं नाम निर्धारितम् । आं० Persia, हि० फारस ।

सं० अवगाण avagāṇ (The Modern Afagan[2]).

सं० इन्द्रद्युम्न Indra dyumna>आं० Andaman अण्डमान ।

सं० नागद्वीप Nāgadvīpa, आं० Nicobar.

सं० मलयद्वीप Maloya dvipa, (Thigh land) मलेशिया ।

सं० यवद्वीप Yavadvīpa, आं० Jawa जावा । एवमेव सुमात्रा शब्दोऽपि सं० सुमात्र एवेति ज्ञायते ।

सं० वरुण (द्वीपः) Varuṇ, आं० Bornieo[3].

सं० बाली Bali अपि संस्कृत नामैव ।

---

भावेन सं० उषस् इत्यस्मादेष शब्दः निष्पादितस्तथैव Asia शब्दोऽपि स्वत एव सं० उषस् usas इत्यस्मान्निष्पद्यते ।

१. पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना । —रघुवंश ४ ।

२. M. M. W Sanskrit Eng. Di:.

३. दक्षिणपूर्वएशियास्थितानामेषां द्वीपानां नामानि पुराणेषु विद्यन्ते ।

# भक्ष्यपेयपदार्थाः

## Food & Drinking

सर्वेषां प्राणिनां जीवनाधारभूता भक्ष्यपेयाद्याः पदार्था एव सन्ति। 'प्राणा अन्नगता' इत्युक्त्या पूर्वमन्नमेवात्र निरूप्यते।

१. सं० अन्नम् annam आं edible.

सं० √अद् ad*ed धातोः संस्कृते यथान्नं निष्पद्यते, तथैवांग्ल्यां edible (अदनीयम्) इत्यपि जायते। एषा च अद् ad प्रकृतिर्नैकासु भाषासु विद्यते। यथा हि— लिथ्वा, esti, स्लाव, jasti,, jadi (भोजनम्), आर्मे० utem, आं० eat जा० essen, फा० √आस् यथा आस्-पज़ (खाद्यपदार्थपाचक) जा० aas.

२. √सं० गृ gṛ (निगरणे), ग्रीक bebrooka, लाति० varare. हि० निगलना।

३. सं० √भुज् buhaj, भक्ष् bhakṣ, ग्रीक pha (g)o (लृट्) ephagon (लुङ्), लाति० funge, (to be engaged in).

४. सं० पितुः pitus (वै० भोजनम्) आं० food.

सं० √पा pā (पाने, रक्षणे च), √पी pī, लाति० pascere, pabulum (fodder), स्लाव० pista, pist, pitwaniā (मध्याह्नभोजनम्), अवे० पितु (हि० पिस्ता अप्येष एव), पु० आं० foda, आं० food, (भोजनम्), fodder.

५. सं० मेदः mēdas, आं० meat जा० mus (steurd fruit etc, चिलगोजा आदि सूखा भुना हुआ मेवा) आं० mutton (भक्ष्यमविमांसम्), अप्येतदेव।

६. सं० √स्नु, ष्णुह्, उद्गिरिणे snu, (to yeald milk),[1] ग्रीक neō,

---

१. M. M.W. Sanskrit Dictionary.

neusomai, (सं० स्नुही[1] हि० सिहुण्ड: 'थोहर' इति नाम्नि √स्नु धातोः क्षीर प्रस्रवणमित्यर्थः सुरक्षितः। आप्टे, मोनियर-कोषयोरप्येषः स्नुही शब्दो न दृष्टः)। लाति० nutrimento, फ्रेञ्च nūtrish, आं० nourish, nourishment.

७. सं० √खाद् khād, फा० खायद् (दन्तैः कर्तयित्वा भक्षणम्)।

८. सं० स्वृ svṛ, स्वर् svar, अवे० ख्वेर्, फा० खुर्दन, आं० swallow अप्येष एव (अत्र सं० रेफस्थाने भारोपीयो लकारः सुरक्षितः)।

९. सं० गृ gṛ, गृधु <*ghredh, आं glee (to feed, to swallow), glutton (पेटू बहुभक्षी), आं० greedy अप्येतस्मादेव।

## खाद्यपानार्थकाधातवो वनस्पतयश्च

१, सं० ध्रा dhrā, ध्राज् dhrāj (वै०), गॉ० drigken (अत्र 'ध्राज्' इत्यस्य जकारस्थानीयो गकारः सुरक्षितः)। लाति० dūcere, आं० draught (घूंट), drink.

२ (क) सं० तृष् tṛṣ, तर्ष् tarṣ, ग्रीक tersomai (तृषितोऽस्मि); लाति० torrēre, फा० तरस्नगी.

(ख) सं० तृषा tṛṣā, आं० thirst, thirsty.

(ग) सं० √धृ dhṛ, dhar आं० dry.

सं० पानार्थकः √पा धातुरनेकासु यूरोपीयास्वपि भाषासु विद्यते। यथा हि—

३. सं० पा pā, पिब् pib (पा इत्यस्यैव द्विरुक्तं रूपम्)। ग्रीक pīnō (पिबामि), लाति० biber, फ्रेञ्च boire. (समग्रेऽपीतालीयवर्गे एतादृशा धातवः शब्दाश्च विद्यन्ते)।

४. सं० √धेट् पाने dhēt, ग्रीक thētē (teat, चूचकः), पु० उ० जा० taen, जा० tien, स्लाव, dojite (दोग्धि, suckle)।

५. सं० √सु su (press out), लाति० sugere, स्लाव, susati.

---

१. अमरकोषः

अन्ये खाद्यपदार्थाः—

६. सं यूषः yūṣas (Juice & yeast), ग्रीक goumi, लिथ्वा० Juśe, आं० Juice.

७. सं० सूपः sūpas, आं० soup, जा० suppe.

८. सं० वाजः vājas (अन्नम्, शक्तिः), आं० vegetable, vegetation, wake, awake (पूर्वोक्तम्)।

मरीचीलवङ्गादयः (गर्ममसाला spicies) नैकानि फलानि च भारतादरबदेशद्वारा यूरोपं गताः। तेषामनेकानि नामान्यद्यापि तान्येव सन्ति, यानि संस्कृते प्रचलितानि। यथा हि—

सं० पिप्पलः pippalas, ग्रीक pepire, आं० pepp-r, फ० फिलफिल आं० black Pepper श्यामा मरीचीः।

सं० लवङ्म् lavangam आं० clove.

सं० श्रृंगवेरम् śṛngaveram, आं० ginger.

सं० नागरंगम् nāgrangam (अत्र, नाग शब्दः सिन्दूरपर्यायवाचकः, परं नारङ्ग शब्दे 'ना' निषेधार्थकोऽस्तीति[1] मत्वा मुख्योर्थोऽपिहितः)>आं० orange. फा० नारङ्ग, अरबी नारञ्ज। फा० नार>हि० अनार अप्येतस्मादेव। पारस्यां आरब्याञ्च नकारो विद्यते, परं यूरोपे नकारस्याकार (ओ) एवावशिष्टः।

सं० आम्रम् āmram>हि० आम>तमिल मान् (आम्र फलम्), (मानकाय (वृक्षः), आं० mango. यतो हि आम्रं दक्षिणभारततः विदेशे गतः, अत एव mango इत्यस्य नाम तमिलमूलकमस्ति।

सं० वृन्ताकम् vṛntākam. आं० brinjal (राजस्थानस्याजमेरक्षेत्रे बिन्ताक इत्येवोच्यते। पं० बताऊँ)।

सं० मधु madhu, अवे० madu, ग्रीक methu, आं० mead, फा० मय (संस्कृते मधुशब्दो माक्षीकमद्ययोरुभयोरप्यर्थयोःप्रयुज्यते, तथैव ग्रीक्यामपि)।

---

१. रंगी को नारंगी कहें, देख कबीरा रोया।

सं० खर्परः kharpars>हि० खोपरा. आं० copra.

सं० कनकम् kanakam (सुवर्णम्) ग्रीक knēkos, पु० आ० hunig, आं० honey, जा० honig, मध्वपि स्वर्णवर्णं भवति ।

शर्करागुड़ावपि यूरोपे भारतादेव गतौ । एतयोर्नामान्यपि तत्र तादृशान्येव ।

सं० शर्करा śarkarā (बालुका इति मुख्योऽर्थः), ग्रीक sakxarī, लाति० saccharum, आं० sacherine अप्येतस्मादेव । आं० sugar जा० zucker, रूसी sachar फा० शकर इत्यादयः ।

सं० गुडः gudas, सं० शर्करा>आं० jaggery (गुड़ः) ।

सं० गोधूमः godhūmas (यतो ह्यस्य क्षेत्रं गोः-पृथिव्या धूम इव प्रतीयते अत एव गोधूम इत्युच्यते), आं० wheat शब्दः<white<सं श्वेतः<* $k_v$evatas.

सं० सस्यम् sasym, आं cereal (यथा संस्कृते सस्यशब्देन सर्वाण्यप्यन्नानि गृह्यन्ते, तथैव आंग्ल्यामपि इत्यवधेयम्) ।

सं० √जॄ Jṛ<*$g^w$r, जीर्णं, ग्रीक geron (rub-down), लाति० genum, फ्रेन्च, आं० grain, आं० corn (अमेरिकन मक्का) स्पेन०, zrūno धान्य, धान, फा० दाना ।

सं० भृष्टिः bhṛṣṭis, गॉ० barizeins, आं० barley.

सं० व्रीहिः vrīhis, ग्रीक oruga, लाति० oryza, आयर० ris आं० rice, जा० reis.

सं० कलमः kalamas, (व्रीहिः, काण्डञ्च) ग्रीक kalamos, लाति० calamus, फा० कलम, हि० कलम[1] ।

---

१. संस्कृते कलमशब्दो व्रीह्यर्थको व्रीह्यंकुरार्थकः, काण्डार्थको वा विद्यते । यथा च कालिदासेनोक्तम् —

उत्खातप्रतिरोपिताः कलमा इव ते रघुम् । —रघुवंशम् ।

अत्र कलम शब्दः व्रीह्यंकुर एव प्रयुक्तः । यतो हि पूर्वं लेखिनी काण्डादेव

**पात्रनामानि—**

सं० कुम्भः kumbhash, ग्रीक kumbos (vessel, goblet, आं० hump <सं० कुम्ब[1] kumba (वै० कुब्ज) (हि० कुबड़)>कुब्ज। यतो हि कुम्भोऽपि कुब्जो भवत्येतदेव कुम्भस्य कुम्भत्वम्।

सं० कलशः kalaśas, ग्रीक kulix, लाति० calix, (cup).

सं० कूपः kūpas, आं०, फ्रेञ्च cope, आं० coupe.

सं० चरुः carus, आयर० coire, पु० आं० hwer, राज० चरी।

सं० भाजनम् bhājanam< √भज्, ग्रीक phagien, उपर्युक्तम्।

सं० चषकः caṣakas, रूसी० चषक, फा० √चषीदन, चषक। एष 'शब्दः' फारस्याः संस्कृत आगतः।

---

निर्मीयते स्म, अतो लेखिन्यर्थे शब्दस्यास्या प्रयोगः प्रारब्धः। ईरानतश्चाऽयं शब्दः ग्रीकेतालीयदेशौ प्राप्तः. पुनश्च लेखिन्यर्थको भूत्वा भारतमागतः। एतदस्ति कलम शब्दस्य, भारताद् यूरोपपर्यन्तं गमनस्य तत्रत्य पुनरागत्य भारते प्रचलनोदन्तम्।

तथापि 'कालिदास के काव्यों में भौगोलिक तत्त्व' इति संज्ञकस्यमम शोधप्रबन्धस्यैकेन परीक्षकेण ख्यातनाम्ना संस्कृतविदुषा टिप्पणि विहिता—

It was a great pleasur to me to go through the theses under report. The candidate has marshalled all the material bearing on the geographical knoweldge of Kalidasa. .......At a few places the candidāte seems to present unsound philological equations by mere superficial phonetic similarities, for Example, he has mentioned that the word कलम (a sort of fine-rice) and कलम (a graft) are cognate (p. 50).

एम० एम० विलियम विरचिते संस्कृतांग्लकोषेऽपि कलम शब्दस्य rice, इत्यर्थेन सह a riead for writing with, इत्यप्युक्तम्, ग्रीकांग्लातिनादीनां सरूपाः शब्दा अपि तत्रोद्धृताः सन्ति।

१. पं० 'खुम्ब' (कुकुरमुत्ता) इत्यत्र वैदिकशब्दस्तस्य मूलार्थश्च सुरक्षितः।

सं० तक्ष् takṣa, अवे० √तश्, तश्त, फा० तश्त्, तश्तरी, संस्कृतेऽपि 'तष्टा' (पूजायां प्रयुक्तं विशिष्टं (संकल्पजलार्थे प्रयुक्तं) पात्रं विद्यते।

सं० पात्रम् pātram, लाति० poculum (सं० त्र tra इत्यस्य लातिन्यां क्ल cle, cel इति जायते, इति तु ध्वनिप्रकरणे पूर्वमेवोक्तम्)।

सं० स्फायी sphāyī, स्फ्यः sphaya, पु० नोर्स spann, आं० spoon ज्ञा० spun, ग्रीक spathē, आं० spade अप्येष एव।

सं० √ पिष् piṣ, पेषणम्, पेषीणी, ग्रीक ptissó, लाति० pīnsere, आं० piston (मूसलमप्येतदेव)।

सं० √ मृ mṛ, *mel, मर्द, लाति० molere, mola (mill stonc), आं० mill.

सं० √घृष् ghṛṣ, आं० ग्रास grass.

सं० तृणम् tṛṇam, आं० thorn, स्लाव० trunu.

सं० √हन् han, *√gᵥhen, ग्रीक theinō पु० आं० heg, आं० hay.

सं० दर्भ darbha, आं० turf.

सं० √वृध् vṛdh, लाति० radix, पु० फ्रेञ्च ruiz, पु० आं० whirt, आं० root (यथा रुध् धातोः प्ररोहो जायते, तथैव वृध् धातोः आंग्ल्या root निष्पद्यते)।

सं० √से sē सै sāe सायकः, सेना, आं० sow, ब्रिटन, sad, आं० seed, जा० sāāt, (crop) लाति० seges (grain field).

सं० सीरः (लाङ्गलम्)।

सं० उखा ukhā (pot for cooking), लाति० aulla, स्वीडिश ugn, गॉ० auhns, आं० oven, जा० ofen.

# दिववर्गः

यथा पृथिव्याः तत्सम्बद्धानां पर्वतसमुद्रनद्यादीनां विभिन्नासु सजातीयासु भाषासु प्रचलितान्यनेकानि नामानि संस्कृतसमानानि संस्कृतप्रकृतिजानि वा विद्यन्ते, तथैवाकाशस्याकाशस्थग्रहनक्षत्रादीनामपि नामानि संस्कृतसमानानि संस्कृतप्रकृतिजानि वा सन्ति। यथा—

(क) सं० नभः nabhas, ग्रीक nephite, आं० nebula (सामान्यतोऽस्य शब्दस्यार्थो 'मेघ' इत्येव ज्ञायते, परं वस्तुतः an indistiinct cloud like cluster of distant stars इत्यस्ति)। आंग्ल्यां 'नभ' शब्दस्य मेघार्थेऽर्थसंकोचो जातः।

(ख) सं० √दिव् div दिव diva, द्यौः dyāus, ग्रीक zeus, लाति० jovis, ju-pitar, dias, deus (देवः) पु० आं० Tiwes (संस्कृतमवेस्ताञ्च विहायान्यासु भाषासु द्यौः शब्दस्य दिव-शब्दस्य वा दिवार्थे देवतार्थे एव प्रयोगो दृश्यते। सं० देवः dēvas आं० divine अप्यस्यैव ताद्धितं रूपम्।

(ग) सं० अश्मन्, अवे० अस्मन, फा० आसमान।

(घ) सं० √स्तन् stan स्तनयित्नुः (मेघः), आं० thunder, जा० donner. सं० स्तनितम् stanitam.

(ण) सं० √स्तृ stṛ स्ताराः, ताराः, √तृ tṛ. ग्रीक astro, आं० astrology, astronomy अनेनैव सम्बद्धाः। लाति० इता० stella, आं० star, जा० ster, फा० सितारा, हि० तारा।

## ग्रहवाराद्याः

अन्तरिक्षचारिषु सूर्यादिग्रहनक्षत्राणां स्थितिर्महत्त्वपूर्णा। सर्वेषां प्राणिनां सूर्य एव जीवनाधारः। अत एव नवग्रहेषु प्रथमं सूर्यनामान्युपस्थाप्यन्ते।

१. (क) सं० सूनुः sūnus, (ख) स्वर् (वै०) svar, (ग) घृणिः ghṛṇis इति सूर्यार्थकनामत्रयेण सम्बद्धाः सान्ति भारोपीयभाषासु प्रचलितानि सर्वाण्यपि

सूर्यनामानि । यथा—

(क) सं० सूनुः sūnus (सूर्यः), आं० sun.

(ख) सं० स्वर्[1] (वै०) svar (सूर्यार्थक स्वर् शब्दो वेदे सुप्रयुक्तः, यथा—'स्वर्दृशे') परं लोके शब्दोऽयं स्वर्गार्थ एव प्रचलितः। यूरोपीयासु भाषास्वीरान्यासु च सूर्यार्थकोऽयं स्वर् शब्दोऽनेकत्र प्रयुज्यते। यथा गॉ० sauil, लाति० sōl, इता० sole, फ्रेञ्च soleil, स्पे०, डेनी०, स्वी० sol, रूमा० soar, आंग्ल्याः solar सदृशेषु ताद्धितेषु रूपेष्वयं सुरक्षितः। अवेस्ताया huvare शब्दोऽप्ययमेव, फा० खुर्शीद इत्यत्र स्वर् इत्यनेन सह सं० √सीद् धातुः प्रयुज्यते। अवेस्तावत् ब्रिटन्या वेल्श भाषाया heol शब्देऽपि सकारो हकारे परिणतः। एवमेव स्लावर्गीय लिथ्वा० salue लेटिश saule, च० स्लाव० slūnice, पोलीय slonce, रूसी० solnce.

(ग) सं० घृणिः ghṛṇis √घृ क्षरणदीप्त्योः, √घृ धातोः संस्कृते तपनार्थको घर्म ग्रीक thormos, आं० thermos इत्यादयः शब्दा निष्पद्यन्ते, इति तु पूर्वमेवोक्तम्। अस्मादेव धातोः निष्पन्नो सं० घृणिशब्दो संस्कृते सूर्यरश्म्यर्थे संकुचितः। परमायीरयादिषु युरोपीयासु भाषास्वयं शब्दः सूर्यार्थे एव प्रयुज्यते, यथा —आयरीय grian.

२. सं० मास् mās (वै०), आं० moon.

भारोपीयासु भाषासु चन्द्रवाचकाः शब्दा अपि द्विविधाः सन्ति।

(क) माङ् धातोः निष्पन्नाः, (ख) द्योतनार्थकात् सं० रुच् ruc, लोकृ, आलोक, ग्रीक leukos इति धातोश्च निष्पन्नाः। यथा हि—

सं० मास् mās चन्द्रार्थकोऽयं हलन्त स् युक्तः मास् शब्दो वेद एवावलोक्यते। लोके त्वयं चन्द्रशब्देन युक्तः 'चन्द्रमास्' इत्येवास्ति। गॉ० mēna, पु० नार्श० māni, डेनीय० maane स्वी० māne, पु०आं० mōna, आं० moon, ड्च maan, पु० उ जा० māno, जा० mond लिथ्वा० mēnuo, लेटिश mēnesis,

---

१ √स्वृ, स्वर् (शब्दोपतापयोः), इत्युभयार्थकप्रकृत्या जाते (क) स्वरः (शब्दः), (ख) स्वर् (सूर्यः), इत्युभे अपि विकृत्यौ संस्कृते तु सुरक्षिते परमन्यासु सजातीयासु यूरोपेरानीयासु वाक्षु सूर्यार्थकः 'स्वर' इत्येकैव विकृतिर्विद्यते।

अवे० माह्।

(ख) सं० √ रुच्, लुक् (लोकृ दर्शने), ग्रीक धातोः निष्पन्नाश्चन्द्रार्थका इमे शब्दाः सन्ति। संस्कृते रोचिः शब्द आलोकशब्दश्च प्रकाशार्थे प्रयुज्यते एव।

लाति० lūna, स्पे०, च० स्लाव, इता० luna, फ्रेञ्च lune, रूमा० lunā, ब्रिट० loar, रूसी luna.

आं० lunar लुनार इत्यस्यैव ताद्धितं रूपम्।

सं० मंगलः maṅgalas-आं० mars. आंग्ल्या अयं mars शब्दोऽपि यथा—

सं√ मृ, मर् mar प्रकृत्या मरुद्गणाः (युद्धदेवताविशेषाः) निष्पद्यन्ते तथैव mars शब्दोऽपि जायते। यतो ह्ययं मङ्गलग्रहोऽपि युद्धादीना सम्वद्ध इत्युच्यते। तदेव mars (मारक) इत्यस्य मार्सत्वम्।

सं० बुधः budhas, अस्य सं० सजातीयः शब्दः वारनामसु द्रष्टव्यः।

सं० बृहस्पतिः bṛhaspatis, लाति०, आं० Jupitar< सं० द्यौस्-पितर् (सं० बृहस्पतिशब्दो यथास्य सर्वोच्चत्वं सूचयति, तथैव लाति० Jupitar शब्दोऽपि ग्रीक्यां लातिन्याञ्च सर्वश्रेष्ठदेवता-ईश्वरवाचकोऽप्यस्ति)।

सं० शुक्रः śukras (प्रकाशमानः), लाति०, आं० Venus. (goddes of love & beauty)। यतो हि शुक्रः सर्वेषु ग्रहेषु देदीप्यतेतरामतएव चायं नेत्ररञ्जकोऽप्यस्ति। अनेनैव कारणेन यूरोपे एष सौन्दर्यदेवता venus इति कथ्यते। एष venus वीनस् शब्दश्च सं० रुच्यर्थकाद् √ वेन् धातोर्निष्पन्नः।

सं० √ सै sē, सायकः, आं० sow. अनया सं० सै प्रकृत्या तर प्रत्यययोगेन satur इति शब्दो निष्पद्यते। saturn अप्यस्यैव विस्तारितं रूपम्। आंग्ल्या sow[1] अपि बीजवपनार्थको धातुः। seed अस्यैव विकृतिः। तथैव saturn. पुरा इटली इति देशे saturn बीजवपनस्य देवता मन्यते स्म। अत एवास्य saturn[2] इति नाम जातम्।

सं० √ वृ vṛ वर, वरुणः varuṇas, ग्रीक आं० urenus. उभयोरपि प्रकृतिप्रत्ययावर्थश्च समानावेव।

---

१. Sh. Ox. Eng. Dictionary.

२. The god of agriculture. तदेव।

**वारनामानि**

यथा संस्कृते ग्रहनामभिस्सह वारः (हि० बारी) शब्दयोगेन बुधवार (बुध की वारी) इत्यादयः शब्दा निष्पद्यन्ते। तथैव यूरोपीयासु वाक्ष्वपि ग्रहनामभिस्सह दिवसवाचक day शब्दयोगेन वारनामानि जायन्ते। यथा—

(क) सं० आदित्यवारः āditya vāras, > हि० ऐतवार, राज० दीतवार। (हिन्द्यां दकारः लुप्तः, आकारश्च सुरक्षितः, परं राजस्थान्यां आकारो लुप्तः दकारश्च सुरक्षितः, यकारस्तु उभयत्र लुप्तः। अपि च सं० आदित्य शब्द आधुनिकासु भारतीयभाषासु अस्मिन् गोणै समस्ते वा रूप एव सुरक्षितः)। आं० sun-day उभावपि शब्दौ पूर्व व्याख्यातौ।

(ख) सं० सोमवारः somavaras, आं० monday. (व्याख्यातचरः)।

(ग) सं० मंगलवारः mangalvāras, आं० tuesday.
सं० द्यौस् > आं० tues.

(घ) सं० बुधवारः budhavāras, आं० wednesday, वस्तुतोऽयं day of woden इत्यस्ति। एष woden शब्दश्च—

सं० बुध एवास्ति। यथा सं० बुधः जा० boden, यथा च सं० √बुध् आं० √bid इत्यस्ति।

सं० √स्तन् stan > आं० Thunor or Thor-day > Thursday. एषोऽस्ति आं० Thursday इत्यस्य संस्कृताधारेण निर्दिष्टोऽर्थः। एष च day of Jupitar इति मन्यते। एष स्तनयित्नोः मेघस्य (इन्द्रस्येति यावत्) वारः इति यौगिकोऽर्थोऽस्ति आं० thursday इत्यस्य।

सं० √पृ pṛ, प्रीतिः, प्रियः > आं० free (अस्य यौगिकोर्थः प्रिय एवास्ति स्वतन्त्र इति तु लाक्षणिकोऽर्थः)। आं० friday अप्यनेनैव सम्बद्धः। यतो हि शुक्रग्रहोऽपि स्वदीप्त्या सर्वप्रियो भवति, अत एव अनेन ग्रहेण सम्बद्धो वारः friday इत्युच्यते।

आं० saturday-व्याख्यातचरः।

इति ग्रहवारनामान्युत्क्रान्तानि।

# दिक्कालवर्गः

**कालनामानि—**

१. (क) सं० √दाघः dāghas>आं० day (पूर्वं व्याख्यातः) ।

(ख) सं० √रुच् ruc दीप्तौ; फा० हि० रोज (यतो ह्ययं राजते प्रकाशते वा अतो रोज इत्युच्यते)।

(ग) सं० √दी (वै०) dī, दीप्त्यर्थकाद् दि, दी धातोः दिनमिति निष्पद्यते। एष दिन शब्दश्च समस्ते स्लावीयवर्गे सुप्रचलितः। यथा रूसी den पोल० dzien, बुल्गा० din, लिथ्वा० diena.

(घ) सं० √दिव् div, द्यौस् अनेन धातुना लाति० dies, इता० di, आयर० die सदृशाः दिनवाचकाः शब्दा निष्पद्यन्ते।

सं० दिवस, दिवा शब्दोऽप्येतस्मादेव।

२. (क) सं० नक्तम् naktam आं० night.

सर्वासु भारोपीयासु भाषास्वेष शब्दः प्रचलितः। यद्यपि संस्कृतेऽस्य शब्दस्य प्रयोगो निपातरूपेणैव क्रियते, अत एव च नक्तंदिवं, नक्तंचरः सदृशेषु शब्देष्वेवास्य प्रयोगप्राचुर्यमवलोक्यते। परं यूरोपीयासु वाक्ष्वयं संज्ञाशब्द एवास्ति। यथा—ग्रीक nux, लाति० nox, जा० nacht, आं० night इत्यादयः।

(ख) सं० क्षपा kṣpā, फा० शब।

(ग) स० दोषा doṣā, फा० दोश-गतरात्रिः।

(घ) सं० रात्रिः हि० रात, पं० राति।

३. (क) सं० उषा uṣā, उषस् uṣas, एष शब्दोऽपि सर्वासु यूरोपीयासु भाषासु प्रचलितः। अपि चास्यानेकानि ताद्धितानि रूपाण्यपि तत्र प्रभूतानि विद्यन्ते। यथा—ग्रीक aōs, लाति० aurōra, लिथ्वा० ausra, इत्यादयः।

(ख) सं० दाघः>आं० dawn.

(ग) सं० मरीचिः >आं० morn-ing (पृ० ३१२)।

४. सं० अपरः aparas (पश्चात्, पश्चिमः) ग्रीक epi, पु० आं० ēfen, म० आं० even, आं० evening, जा० abend (अत्र अप इत्युपसर्गः सुरक्षितः), ग्रीक heaperos.

५. ह्यस् hyas <*g$^{w}$hes> ग्रीक xthes, लाति० heri, गॉ० gistra-dagis, जा० gestern, आं० yesterday (आंग्ल्यां*हवकरः यकारे परिवर्तितः अन्यत्र सर्वत्र स्वरूपेण सुरक्षितः)।

**मासनामानि**

सं० √मा mā, मासः māsas सर्वासु भारोपीयासु भाषासु √मा प्रकृत्या निष्पन्ना एव मासवाचका शब्दा प्रयुज्यन्ते, तेष्वनेके पूर्वं निर्दिष्टाः। यथा—

आं० month < moon < सं० √मा।

**द्वादशमासानां संज्ञाः**—यथा संस्कृते नक्षत्राण्यधिकृत्य मासनामान्यभिधीयन्ते (चित्रा-चैत्र, विशाखा-वैशाख, ज्येष्ठा-ज्येष्ठ इत्यादयः)। तथैव लातिन्यादि रोमान्सभाषाभाषिभिरपि कानिचिन्मासनामानि स्वदेवता अधिकृत्य निर्मितान्यपरेषाञ्च कृते पञ्च षट् सप्त इत्यादिसंख्याशब्दैर्नामानि विहितानि।

**अत्रेदमवधेयम्**— यत् पुरा यूरोपेऽपि भारत इव मार्च march (चैत्र) मासत एव वर्षारम्भोऽभवत्। ईरान देशेऽद्यापि चैत्रत एव वर्षारम्भो भवति। परं कालान्तरे ग्रेगेरियनकेलेण्डरे वर्षस्यारम्भो जनवरीतः समारब्धः, परं संख्यावाचकमासानां नामानि त्वद्यापि तान्येव व्यपदिश्यन्ते। यथा— आं० september, october, november, december, एतेषु पूर्वपदं सप्तम, अष्टम, <*octos, नवम, दशम इत्यस्ति। उत्तरपदं च ber < सं० भरः इत्यस्ति। एवं सप्तमं मासं बिभर्ति इति september इति संस्कृतप्रकृतिका व्युत्पत्तिर्जायतेऽस्य मासस्य नाम्नः।

एवमेव पुरा Junus, July, August इत्येतयोरपि नाम्नी quinctilis <*penk$^{w}$e> सं० पञ्च तथा च Sextilis—सं० षष्ठ इत्येते आस्तां, परं तदनु पूर्वं Jūlius इत्याख्येन सम्राजा पञ्चममासस्य नाम स्वाभिधानेन प्रचारितम्। कालान्तरे च Augustus इत्याख्येन सम्राजा षष्ठ मासोऽपि स्वनाम्ना प्रचारितः। एवमेव junus इति सम्राज्ञो नाम्नास्यापि मासस्य नाम प्रचलितम्।

परं शेषमासनामान्यधुनापि देवादिनामभिरेव प्रचलितानि। यथा— आं० mars > march.

(क) सं० √या yā, यामः yāmas, आं० year, पूर्वं प्रतिपादितम्।

(ख) सं० हिमा (वै०) सं० हेमन् hēman<*$g^w$heman, ग्रीक xeimōnas, लाति० hiems, ग्रीक horos अप्येष एव, पूर्वं व्याख्यातः। सं० हायनोप्येतस्मादेव।

(ग) सं० वत्सरः vatsaras >आं० weather.

(घ) सं० वासरः vāsaras, vasantas, ग्रीक hear, लालि० vēr, नोर्वे डेनीय vār, लिथ्वा vasara (ग्रीष्मर्तुः), फा० बहार (वसन्तर्तुः)।

(ङ) सं० वसन्तः vasantas, रूसी vesna.

(च) सं० समा samā, (वर्षः, ऋतुः, ग्रीष्मर्तुः), आयर० sam, पु० आ० sumor आं० summer.

(छ) सं० उदन्-तरः, पु० नार्स vatn, आं० wet, winter, (wet season), आं० season शब्दोऽपि सं० सै० धातोर्निष्पन्न इत्यन्यत्रक्तोम्)।

(ज) सं० √गल् gal, गलति (वर्फ गलती है), जा० colt, आं० cold.

## दिङ् नामानि

भारते यूरोपेऽपि दिङ्नामानि तां दिशमधिकृत्य प्रचलितानि यत्रोषोदेति। यथा—

(क) सं० √उसि विवासे usi, उच्छति ucchati, उषा uṣā अवे० उसति (प्रकाशते), लिथ्वा० auśti, ग्रीक aios, आं० east, लातिन्यां सकारस्य रेफे परिणत्या सं० उषस्>oriens फ्रेञ्च orient इति जायते। आं० oriental अप्यस्यैव ताद्धितं रूपम्।

(ख) सं० अवस् avas, अव इति निपातो निम्नार्थको वर्तते। यद्यपि भौगोलिकदृष्ट्या पृथिव्या दक्षिणं गोलार्द्धमधोभागे स्थितमस्ति, तथापि सूर्यो यदास्तमेति तदासावधो गच्छतीत्येवोच्यते। अत एवास्या दिशोऽवाचीति नाम विहितम्। सं० एषावाची एवांग्ल्या west, जा० westen, नार्श vester इत्यादिभिर्नामभिरभिधीयते। ग्रीक hesperos (सायं) अप्यस्मादेव विकसितः।

(ग) सं० सव्यः savyas संस्कृते सव्य शब्दो दक्षिणहस्तार्थेऽपि प्रयुज्यते।

अनेनैव पं० सज्जा इति जातः। आंग्ल्यां प्रयुक्तो दक्षिण दिशाया नाम south<सं० सव्यथःइ त्येवास्ति । यतो ह्येषा दिशा उषः प्रदेशाभिमुखं स्थितस्य जनस्य सव्ये (दक्षिणे) वर्तते अत एवैषा south (सं० सव्यथः) इत्युच्यते । यूरोपीयासु नैकासु भाषास्वनेनैव सम्बद्धाः शब्दाः सन्ति ।

(घ) सं० सनीयान् saniyān (अत्युपयोगी अत्युच्चश्च), पु० इता० sinestro, स्पेनी siniestro, ग्रीक nerteros (निम्न), फ्रेञ्च nord, आं० north (अत्र आद्यः सकारः लुप्तः, नार्वे इति देशस्य नामाप्यनेनैव सम्बद्धः। अत्युच्चा त्वैषा दिगस्त्येव। यतो हि उत्तरस्यां देवा वसन्ति अतो ह्येषा दिक् अत्युपयोगी श्रेष्ठा च मन्यते)।

(ङ) सं० वाम vām>नार्वेडेनीयस्वीडीयादिभाषासु vānster, पु० आं० vyun(हर्षः) इत्याद्याः शब्दाः निष्पद्यन्ते (मनयोर्व्यत्ययस्तु जायत एव)।

(च) सं०√दासृ दाने dāsṛ (दक्षिणः) दक्षिणा दिक्, ग्रीक dezios, लाति० dexter, पु० उ० जा० zeso, रूसी desnoj, अवे० daśina पूर्वोक्तम्।

६. सं०सुव suva, षुव ṣuva दिग्बोधकोऽयं शब्दोऽत्र विषु viṣu, विषुव<द्विपुव, विषुवत् इति समस्ते शब्द एव सुरक्षितः। आप्टे कोषे विषु शब्दस्य In two equal parts इति यौगिकोऽर्थः स्पष्टतया प्रतिपादितः। फारस्याञ्च sū इति शब्दस्य-दिशा, (की ओर, तरफ,)-इत्यर्थोऽस्ति। यथा—
'छायी हुई हैं गम की घटाएं चाहार सू'—चतुर्दिक्।

सं० अद्य adya, जा० heute (अत्र हकारः आद्यागमः जातः) आं० today, to-morrow उभयत्र to सं० तु, तुम् इत्येवास्ति। आंग्ल्यां एष to पूर्वं प्रयुज्यते यथा-to go .

सं० श्वः śvas, अवे० सवहि-पूर्वादिक्, फा० सुबह।

सं० **मध्यन्दिनम्**, आं० noon.

मध्यन्दिनं कृते ग्रीक्यां mesēmeri इत्यस्ति। अस्य पूर्वपदं mes<सं० मध्य इत्यस्माद् विकसितमिति तु पूर्वमेवोक्तम् । लाति० meridies<medīdes< सं० मध्यंदिवस, आंग्ल्या प्रचलितम् A. M., P. M. इति संक्षिप्तं नाम abriviation अपि आं० anti meridian, post meridian इत्येवास्ति। अत्र

anti सं० अन्ति, post-सं० पश्च इति निपातौ स्तः । सं० नवम navama, लाति० nōna (होरा hora) आं० noon . एवमांग्ल्या noon इत्यस्य सं० नवम आं० nine (होरा) इत्येव यौगिकोऽर्थः ।

**सं० अपराह्न आं०** evening .

सं० अपर-अह्न, पु० नार्स aptann, पु० आं० aefen, जा० afend<सं० अपान्त, एतादृशेषु शब्देषु अप इत्युपसर्गः स्पष्टमवलोक्यते । आ० evening इत्यत्र अप इत्यस्य पकारो वकारे परिणतः । यथा च morning इत्यत्र स्वार्थे ing प्रत्यय आगतः तथैवात्रापि । संस्कृते 'अपरान्त' इति शब्दोऽपि सायं इत्यर्थे प्रयुज्यते ।

सं० √तन् tan, ग्रीक teinō, लाति० tempus (अत्र पकारः प्रत्ययः नकारश्च परसवर्णः मकारः जातः, कालः) आं० temporal (सामयिक), temporary अस्यैव ताद्धितानि रूपाणि । स्पे० timpono .

सं० √हृ hṛ< *ghṛ>ग्रीक xronos ख्रोनोस्>आ० chronos, chronology, अस्यैव ताद्धितानि रूपाणि ।

सं० √मा mā, लाति० mētīrē, जा० mal (वारः) यथा ein-mal (एकवारम्) ।

सं० √दय् daya (विभाजनम्) उ० जा० zīme, आं० time, जा० zit, आं० tide यथा sea-tide अप्येष एव ।

सं० √अय् गतौ aya gatāu, आयुः āyus लाति० aetās, aevitas (eternity), गॉ० aiws, आं० age .

सं० प्रा prā (उप)-तर, प्रातर, लाति० prō, ग्रीक prōī जा० fruh, (प्रातः) morning .

सं० √स्फाय् sphāy वृद्धौ, ग्रीक spao, जां० spāt (late) आं० speed अप्येतस्मादेव, स्लाव spete सफलता ।

सं० आशुः āśus, ग्रीक ōkus, लाति० ocior, आं० occesion अप्येतस्मादेव ।

सं० अर्वत् arvat, पु० आं० earu, आं० early .

सं० अन्त anta<अन्ति> पु० उ० जा० ente, जा० ende, गॉ० andeis, आं० end, and .

सं० वि-तराम् vi-tarām, पु० आं० wither, जा० wider (पुनर्) यथा—widersehen विडर जेन (पुनर्दर्शनाय)।

सं० मरीचिः marīci,<merk$^{w}$is ग्रीक maımirō, (मरीचिः), लिथ्वा० merkti निमिषः पलक झपकना, mirgeti चमकना, टिमटिमाना, पु० आं०, जा० morgen (सर्वत्र ककारस्थानीयो गकारः सुरक्षितः)। आं० morning (अत्र ing प्रत्ययो जातः)।

**अवशिष्टानि मासनामानि—**

आं० January पुरा खलु वारनामानीवानेकानि मासनामान्यपि देवानधिकृत्यैव विनिर्मितानि। तदेवं Janus<danus इति संज्ञक देवीमधिकृत्य Januari इति मासस्य नाम निर्धारितम्।

आं० February.

सं० √पू (ञ्) pū पवने इत्यस्माद्यथा pure (पवित्र) इति जायते, तथैव मध्यकालीनांग्ल्यां feverrer>जा० febraur,>आं० february इति जातम्। (a festival of purification on Feb. 15 th).

अत एवास्य मासस्य नाम √पू० pure इत्यनेन सम्बद्ध इति सुस्पष्टम् !

आं० मार्च march, अस्य मासस्य नाम mars (मंगलग्रहः)>आं० march इति रूपेण विहितम्। (संस्कृते मारः इति कामदेवस्य नाम प्रसिद्धं फारस्यां च सर्पो मार इत्युच्यते। वस्तुतो वै० मरुद्गणा एव यूरोपे mars शब्देनाभिधीयन्ते इति तु पूर्वमेवोक्तम्।

सं० अपरः (द्वितीयः) Aparas, आं० April[1] (यतो हि पुरा यूरोपेऽपि मार्च मास त एव वर्षारम्भोऽभवदतोऽयमपरो (द्वितीयो) मासोऽभिधीयते स्म)।

---

१. यतो हि April मासे यूरोपे वसन्तर्तुरारभ्यते तदैव पुष्पकलिकाःमुखान्यपावृण्वन्ति। अतः सं० अपा-वृ>लाति० April इत्येषापि निरुक्तिर्दर्शितान्यत्र।

आं० May, सं० महः mahas<*maghas>ma (सं० माया शब्दादपि आं० May इति निष्पाद्यते)।

आं० June, यथा Julius इति सम्राज्ञः नाम्ना July, Augustus[1] इत्यस्य नाम्ना चास्य मासस्य नामाभिहितं तथैव Jūnjūs इत्यस्य नाम्ना June इति नाम संजातमस्य मासस्य ।

**अन्यानि कालनामानि—**

सं० √ दयते dayatē (to divide) जा० ziet (समयः) आं० tide (ज्वार, पुरानेनापि समयो विभज्यते स्म), आं० time अप्येतस्मादेव ।

सं० वत्सरः Vatsaras>आं० weather.

**अत्रेदमवधेयम्**— यथा सं० वर्षवाचकः 'समा' आंग्ल्यां ग्रीष्मर्तुवाचकः summer इति जातः, अत्र चार्थसङ्कोचः । तथैव वर्षसामान्यवाचकः सं० वत्सरोऽप्यांग्ल्यां ऋतु-सामान्यवाचकः weather इति जातः,तथैवात्राप्यर्थसङ्कोचः ।

**अन्यत्र तु—**

सं० √ उन्दी, क्लेदने undī यथैतस्माद्धातोः सं० उद्रम् ग्रीक आं० hydro सदृशाः शब्दाः निष्पद्यन्ते, तथैव आं० wet इति जायते । आंग्ल्यां ऋतुवाचकः weather अप्येतस्मादेव जायते । यथा च संस्कृते 'शरत्' वर्षवाचकोप्यस्ति तथैव आं० weather इत्यस्य यौगिकोऽर्थः क्लिन्नर्तुर्वर्षर्तुः इत्यस्ति, परमस्य ऋतुसामान्येऽर्थविस्तारो जातः, इत्यप्युच्यते ।

अस्मादेव सं० उन्दी धातोः आंग्ल्यां शर्दर्तुवाचकः winter इत्यपि निष्पद्यते । आं० winter इत्यत्र उन्दीत्यस्यानुनासिको N नकारोऽपि सुरक्षितः ।

सं० √ विज् vij, विजति, वेजते<*vigʷ, आं० week (सप्ताहम्),> इदमपि प्रतिसप्ताहं वेजते-परिवर्तते । दुर्बलार्थक आं० weak अप्येतस्मादेव, यतो ह्येषोऽपि वेजते दौर्बल्येन कम्पते, आं० wicked[2] अप्येतस्मादेव ।

---

१. तत्पश्चादागतानां मासानां संज्ञास्तु सप्तमाष्टमनवमदशमेति संख्या अधिकृत्य प्रचलिता इति तु पूर्वमेवोक्तम् ।

२. आं० wicked इत्यस्य सं० विकट इत्यनेन नास्ति कोऽपि सम्बन्धः ।
सं० वि-कृत>विकट, एवमेव सं०-सं-कृत>संकट, नि-कृत>निकट-

सं० मरीचिः mariche[1] <*markʷe, > जा० margen (अत्र ककारस्थानीयो गकारः सुरक्षितः), > आं० morn, morning.

आं० mercy दया (दयायामप्यात्मनः प्रभाविर्भवति)। अप्येतस्मादेव।

**सं० वाहनानि** Vāhanani, Vehicle, Trānsport ·

सं० √ तृ० tṛ, तरति tarati, पारं गच्छति, तरः, लाति०, trans (पारार्थको निपातः), √ भृ bhṛ, भृतम्, भरितम्, लाति०, आं० trans-port (पारे-अन्यत्र भरितम्-प्रापितम्)। transfer इत्यत्र भृ धातोः मूलरूपं सुरक्षितम्। २.सं० √ वह् vah, वाहनम्, वाहः, ग्रीक hokhos, सं० वहि-त्रम्, लाति० vehiculum, आं० vehicle, आयर० feāu, नार्स० vagn, आं० wagen, wagan, wagon, जा० wagen (अन्यत्रापि द्रष्टव्यम्) । गॉ० wegs, आं० way.

३. सं० गर्तः[2] gartas (वै०, रथः) > आं० cart > chariot (कार्ट शब्दस्यापि chariot रथो वेत्येवार्थोऽस्ति, > car[3], a wheeld vehicle, (in Gt. Britain applied to those of street-tramways, motar-car 1826), हि० गाड़ी[4] शब्दोऽपि वै० गर्त इत्यस्मान्निष्पद्यते।

४. सं० रथः rathas, अनेन संस्कृतशब्देनांग्ल्यादिषु rotate (to move round a center or axis), इति नामधातुर्निष्पद्यते, rotation सदृशास्ताद्धिताः शब्दा अप्यनेनैव जायन्ते। सं रथ्या > फा० रह अप्यस्यैव ताद्धितं रूपम्।

---

इत्यादयः प्राकृतशब्दा निष्पद्यन्ते। एषु शब्देषु तकारस्य टकारो जातः। पूर्वं तावदेतादृशानां सं० शब्दानां प्राकृतीकरणञ्जातम्, ततश्च ते प्राकृतीभूताः शब्दाः संस्कृते पुनरागताः, संस्कृतशब्दाश्चेति स्वीकृताः।

१. Sh. Ox. Eng. Dic.
२. वेदेषु 'गर्त' शब्दो रथार्थेऽप्यनेकत्र प्रयुक्तः। 'रथोऽपि गर्त उच्यते'। निरुक्त-३/१। रथार्थकोऽयं वैदिको गर्तशब्दो हि० गाड़ीति विकृतिं विहायान्यत्र भारतीयासु भाषासु विस्मृतः। 'गड्ढा' इत्यर्थकमेव गर्तं जना अवगच्छन्ति। परं यूरोपे वैदिको रथार्थको गर्तः gartas > आं० cart रूपे सुरक्षितः।
३. Sh. Ox. Eng. Dic.
४. मानक हिन्दी कोषे शब्दस्यास्य व्युत्पत्तिर्नैव दर्शिता।

६. सं० द्विचक्रम् dvi-cakram, आं० bi-cycle द्वि*$k^{w}$eklos. (आद्यभारोपीय भाषायामभ्यासकवर्गस्याकारो ओकारो वा तालव्यस्वरे-एकारे इति यावत्-परिणमति स्म, तालव्यस्वरयुक्तश्च* $k^{w}$ तालव्ये चकारे परिणमति ! क्ववर्गस्य तालव्यभावापन्ने सत्यसावेकरः संस्कृते पुनरकारत्वमापद्यते)।

७. सं० छयति chayati (cuts off)<* √skeē, गाँ० skip, आं० ship.

८. सं० nāus, ग्रीक naus, लाति० nāvis, सं० नावितम्, नावित्रम्। लाति० आं० nautical (संस्कृतस्य त्र लातिन्यां क्ल इति जायते इति तु पूर्वं ध्वनि-प्रकरण एवोक्तम्)।

९. सं० कुम्भः kumbhas, ग्रीक kumbē>लाति० cymba आं०symbiform-boat shaped (अद्यापि भारतेऽपि कुम्भान् संयोज्य नौका निर्मीयन्ते)।

१० सं० √भिद् bhid पु० आं० bāt, आं० boat[1] रूसी bot.

स्वास्थरोगादयः

**सं० स्वस्थः** svasthas, good health.

सं० सु-√जीव su-jīva, ग्रीक hugiēs, hugeik>आं० hygine. सं० ध्रुवः dhruvas, अवे० drava, पु०फा० duruva (सुरक्षित), लाति० durus (hard), फा० दुरस्त<सं० ध्रुव-अस्ति, पु० आ० trewe, आं० true (सत्यम्) अपि सं० ध्रुव एव।

**सं० रोग**: rogas, dis-ease.

सं० दुस्-अयः dus-ayas (कल्याणम्)>आं० dis-ease.

सं० √वा va, ग्रीक oteilē, गॉ० wunds, आं० wound.

सं० √नस्[2] nas (वै०, to approach, resort), गॉ० ga-nizan, जा०

---

१. पहले किसी वृक्ष के मोटे तने को बीच में से खोखला कर के नाव बनाने की प्रक्रिया प्रारम्भ हुई थी। नौका-निर्माण का यही इतिहास अंग्रेजी का Boat बोट शब्द अपने आप में छुपाए हुए है।

२. आप्टे-कोषे धातुरयं नैव निर्दिष्टः, परं M. W. संस्कृत कोषे धातुरयमस्य ग्रीकजार्मण्यादिषु विकृतयोऽपि निर्दिष्टाः।

ge-nesen (गे-निजन recover) ·

सं० ईश् īś<*eik$_v$, ग्रीक iaomi, iaino<*iśnyo, गॉ० aigan, जा० eigen, आं० owe,own (अत्र मध्यककारस्थानीयो गकारो लुप्तः)।

सं० सनः (वै०) sanas दृढः, वृद्धः, शुद्धः, स्वस्थः, लाति० sālus, आं० sane, sanitary, sanitation अप्यनेनैव सम्बद्धाः।

सं० भिषग् bhiṣag- ज्, bhiṣaj (अभि-समन्तात् षज्जति=अभिषक् (अध्ययनाध्यापनम्,>भिषक्), ग्रीक phusike, लाति० physica, पु० आं० fisike, पु० फ्रेञ्च fisique,आं० physic (the theory of disease and their treatment, medical science, medicine) physician अप्यस्यैव ताद्धितं रूपम्। फा० पिज़िश्क।

सं० दिश् diś देष्ट्री deṣṭri (वै० indicator), यथा-'समु-देष्ट्री दधातु नः' (उपदेष्टा) लाति०, आं०, फ्रेञ्च doctor, docter (वस्तुतोऽयं वै० देष्ट्री एवास्ति)। आं० teacher अप्येतस्मादेव । शब्दस्यास्य मुख्योऽर्थः प्रवाचकः एव, चिकित्सक इत्यर्थस्तु गौणः)।

**वर्णनामानि**[1] colours·

सं० वर्ण varṇa> वन्न, अवे० gadna (hair & colour), फा० गून् (ईरान्यासु वकारो गकारे परिणमति)।

सं० रङ्ग rang, रागः rāgas√ रज् raj; ग्रीक rhezo रेज्जो, rhegeus, (dyer).

सं० पृश्नि pṛśni (वै० अनेके वर्णाः, नानावर्णाः), *porky-wo, जा० farbe (वर्ण)। स्वी० farg (वर्ण), ग्रीक perknos (श्यामवर्ण) आय़र० erc- (gay-coloured).

सं० पलित palita, ग्रीक pelios (gray), पु० आं० fealo, लिथ्वा० palvas (reddish yellow) आं० pale, हि० पीला। ग्रीक, आं० polio (gray) अस्मिन् रोगेऽपि रक्तकणाः श्वेता भवन्ति ।

---

१. **गुणे शुक्लादयः पुंसि गुणिलिंगास्तु तद्वति। इत्यमरः।**

सं० तमस् tamas, तमिस्र, तिमिर; आयर० temen, च० स्लाव० timinu, लाति० temebra जा० dunkel

सं० √विद् vid, वि-द् vind, विन्दति, ग्रीक indallomai (appear, seem), गाल० vindo-magus. आयर० आं० find .

सं० श्वेत śveta, *$k_y$vēte, स्लाव० svetu, svetiti (भासते), आं० white . फा०, हि० सफेद ।

सं० अर्जुन arjun, <*arg$^w$en>argos श्वेत, लाति० argentum, (श्वेत, रजतम्), ।

सं० अर्जुनवृक्षः, (एषोऽपि श्वेतो भवति), आं० Argentina (देशनामाप्येतस्मादेव) ।

सं० शुक्रः śukras, शुक्लः suklas, <*$k_y$ekle, नार्स०, डेनी० skear (शुचिः) स्वी० skar (transparent), गॉ० skeirs (clear), पु० आं० scir (bright), जा० hell अत्राद्यः ककारो हकारे परिणतो मध्यककारश्च लुप्तः ।

सं० कृमिः kṛmis, रूसी cermuyj, हि० किरमची ।

सं० कृष्ण kṛṣṇa, रूसी krasnyj (रम्य, चारु), पु० प्रश० kirsnan, >स्लाव० crunu यथा हि० किशन>कान्ह ।

सं० मल mal मलिन, ग्रीक melas, melani. यथा हि० स्याही शब्दस्य मसीत्यर्थेऽर्थसङ्कोचो जातस्तथैव ग्रीक्यामपि) । लेटिश-melns (कृष्ण) ।

सं० कालः kālas (काला), कलंक kalanka. ग्रीक kelainos .

सं० श्याम śyāma, श्याव śyāva, लिथ्वा० semas, पु० प्रश० sywan, रूसी sivyj (gray), पु० आं० haewen (blue), अवे० साम, साव, फा० स्याव, यथा-अफ्रास्याव<अभ्रस्यावः (व्यक्तिविशेषस्य नाम) ।

सं० रुधिर rudhira, आं० red .

सं० हरिः, हरित haris, harita<*ghel>(पीतः हरितश्च), लाति० helvus, पु० आं० geolo, आं० yellow, जा० gelb.

सं० बभ्रु: babhrus आं० brown<*bhru-no<भ्रू-वर्ण,>हि० भूरा। (संस्कृते द्विरुक्ता संज्ञा)।

सं० √तिज् tij, तिग् tig, तीक्ष्ण tīkṣṇa, ग्रीक stixō स्टिग्जो (prick), लाति० īn-stīgare, आं० instigate, stick फा० तेग (तीक्ष्णधारायुक्तः खड्गः, तेज)।

**प्रकाशोष्णतातपनाद्याः—**

सं० दाघः dāghas आं० dawn, (उषा), day .(पूर्वमेवोक्तम्)।

सं० √धृ dhṛ, पु० आं० dryge, आं० dry . प्रकाश उष्णादयः।

सं० घर्म gharm, ग्रीक thermos, पु० लाति० formus, आं० warm .

सं० √तप् tap, लाति० tipidus, आं० tepid (lukewarm) . रूसी tepluj, फा० ताबीदन्, राज० तावड़ा<सं० तापः, आतप इत्यस्माद्विकसितः।

सं० √उष् uṣ, ग्रीक euō, लाति० urere, (burn) सं० उषस् आं० aurora, east. सं० उस्रः (सूर्यरश्मिः)>आं० easter (अत्र स्र इत्यत्र यथा> नियमं त t इत्यस्यागमो जातः), सदृशाः नैकाः विकृतयोऽस्य यूरोपे प्रचलिताः। भारते तु पं० कोसा<कवोष्ण, राज० ऊना, ऊन (तापः, ज्वरः)<सं० उष्ण। सदृशा अस्य विकृतयो दृश्यन्ते। संस्कृतेऽपि उषस्, उष्ण इत्यादिषु विकृतिष्वेवायं सुरक्षितः।

सं० शरत् śarat< *$k_v$erer, $k_v$el, क्यरेरे क्येल्, पु० नार्स० kala (freeze), आं० chill, chilly, लिथ्वा० saltas, अवे० sareta, फा० सर्द।

सं० कित्, केतुः ketus (दीप्त), पु० प्रश० skīstan, स्लाव० cistu आं० heat, hot,, आंग्ल्या भाववाचकः प्रत्ययः hood यथा childhood, जा० heit, kindheit, अप्येतस्मादेव। स्वीडीय, heder (pright) पु० उ० जा० heitea.

सं० √पू०, पवने pu, pavanē, पूत pūta, लाति० purus, आं० pure purify, polish अप्येतस्मादेव।

सं० √शंस् śans *$k_v$ens>koisa>लाति० cura, गॉ० kara, आं० care।

आं० sense, non-sense, censor इत्यादयो नैके ताद्धिताः शब्दाः सं० √शंस् इत्यस्मादेव निष्पद्यन्ते ।

सं० √गृ (वै० गृणाति), ग्रीक gerus (voice), आयर० gair, आं० cry.

सं० √स्मि smi, स्मयः smayas, विस्मयः, लाति० mīrus > आं० ad-mire, ad-miration (अस्य मुख्योऽर्थः विस्मय एवास्ति) । आं० smile अप्येष एव ।

हर्षोद्वेगसुखदुःखाद्या :—

सं० घोरः ghoras, गॉ० gaurs, रूसी० gore (दुःखम्) ।

सं० उप-√भर् bhar > लाति० sub-fere, आं० suffering .

सं० आगः āgas, ग्रीक agos, आं० ache, यथा head-ache (शिरोवेदना) ।

सं० गुरुः gurus, गुर्वी, लाति० grevis, आं० grivee, grief.

सं० अंहुः[1] anhus, अंहीयस्, (वै०) लाति० angustus, जा० eng (संकुचित, निर्बद्धः, भयः), आं० angu-ish .

सं० अंहः anhas (वै०, चिन्ता, क्लेशः), लाति०, आ० anxiety, पु० आ० ange, agony जा० डच angst (क्लेशः), आं० anger (क्रोधः) ।

सं० शम् śam < *$k_{v}$em, ग्रीक kamo (शमनम्, शोकः, श्रान्तः), आयर० came (शोकः) ।

सं० √सूर्क्ष sūrkṣa वै० (to heed or trouble about), सूर्क्षम् (चिन्ता), गॉ० saurge, जा० sarge (care), पु० आं० sorh, आं० sorrow .

सं० सादः sādas, विषादः, आं० sad (कोषेष्वयं sad शब्दः √sad इत्यस्मान्निष्पादितः) ।

सं० पिशुनः piśunas < *pek$_{v}$une पु० आं० foh, आं० foe .

सं० √ह्लाद् hrād < *ghlād, ह्लादिनी hrādinī (बिजली की कड़क to make sound), आं० greet, regret = re-gret .

---

१. अंहोमुचं सुकृतं दैव्यं जनम् । ऋग्वेद-१०-६३-६ ।

सं० √पीय् piy (वै०, निन्दा abuse), पु० उ० जा० fiēn (hate), पु० आं० feond (शत्रुः दुष्टात्मा) आं० fiend, (devil).

सं० √द्विष् dviṣ, ग्रीक deos (भयः), जा० zwist (dis-cord, quarrel).

सं० √इष् iṣ (सुदूरं प्रेषयति, क्षिपति), इषुः, आं० ire (क्रोधः), irritate, जा० irre (confused), irritieren (puzzel).

सं० √धू dhū, लाति० furor, आं० fury (लातिन्या आंग्ल्यामागतः)।

सं० √ ईड् īd (वै०), ग्रीक aidos (लज्जा, modesty, respect, reverenc) जा० ihre (सम्मानं, समादरः honour).

सं० √कित् kit, सं० केतुः ketus (प्रकाशः, आकारः), स्वीडीय heder (clear, fright), पु० उ० जा० heitar.

सं० वृ vṛ, वरः (कामना, इच्छा), ग्रीक elpizō, लाति० velle, आं० will (इच्छा, कामना)।

सं० वाञ्छ vānch, जा० wunchen.

सं० वश् (वै० चाहना), आं० wish.

सं० √इश् (इच्छति) iś, पु० आं० aseian, आं० ask.

सं० गूर्त gūrta (वै०, प्रशंसितः, wellcome), लाति० grātia, आं० gratitude, आं० फ्रेञ्च grace.

सं० √साद् sād, *k̬ad, (सदॢ विषरणगत्यवसादनेषु, fall off, out), लाति० cadere, cāsus, आं० chance.

सं० शक् śak<k̬ek शक्नोति, पु० नार्श० hage (arrange), जा० be-hagen (please, suit).

स० प्री pri, प्रीतिः, प्रीयते, फ्रेञ्च plaisir, आं० pleasure, जा० ge-falen, freude, frein, पु० आं० freon, आं० friend, free.

सं० मयः[1] (वै०) mayas (सुखम्), आं० merry, mirth.

---

१. यथा—नमः शंकराय च मयस्कराय च।

सं० वसु vasu, पु० आं० wist, आयर० feis, आं० feast, स्लाव० veselu.

सं० मृडः[1] mṛdas (वै०, showing mercy, gracious, शिवः), आं० mild (gracious, merciful[2]). पुनश्च-अन्यत्र सं० मृदुरित्यस्मादांग्ल्या mild निष्पादितः, तत्त्वनुमानमात्रमेव।

सं० हःर्ष harṣas (be excited, आनन्दः), लाति० horrere, आं० horrer.

सं० हर्यति haryati, लाति० horiri, गॉ० gairngan, आं० yearn, hurry up.

सं० √क्रीड् krīd<कृष्-द, *kri-zd, ग्रीक skirō (नृत्यम् कूर्दनम्), गॉ० hrisgan, पु० आं० hrissan (shake).

सं० √मृद् mṛd, smṛd, लाति० mordire (दंशः), म० आं० smerte, आं० smart.

सं०√स्फाय् sphāy, आं० speed, जा० spāt (late), लाति० spēs, आं० span, पु० आं० spown (span), स्लाव० speti (समृद्धः)।

सं० √स्फाल्, आं० flesh (मांसमेतदप्यास्फालितं भवति, प्लवतेरपि आं० flesh शब्दो निष्पाद्यते)।

सं० हेड (वै०) hēda<*ghēda, *gheigd, आं० ghost, guest अप्येष एव, यतो हि एषोऽपि अपरिचितो भवति।

सं०√वेन vena (वै० अभिकांक्षा, कमनीय), स्वीडीय for-vana (आश्चर्यम्), लाति० venus (goddess of love and beauty), जा० wahn (delusion), पु० नार्श० van (आशा), आं० ween (to think, be-lieve), wonder अप्यनेनैव।

सं० वि-√स्मि vi-smi, विस्मयः, विस्मयकारी, लाति० mirus (wonder-

---

१. M. M. W. Skt. Eng. Dic.

२. Sh. Ox. Eng. Dic.

ful), mirārē, आं० miracle, लाति० आं० admire, admiration इत्यादयोऽप्यनेनैव सम्बद्धाः।

सं० √भृ bhṛ, भर्, लाति० ferre (bear), लाति० आं० फ्रेञ्च fortune.

सं० √घृ ghṛ *ghreu, म० आं० grete, आं० great, जा० gross, आं० gross income अप्येष एव।

सं० √स्तृ stṛ, आं० stretch, straight (stretched out, extended) अप्येष एव.

**केचिदन्ये पौरजानपदाद्याः**

सं० वास्तु vāstu (आवासः), आं० astute (skill, craft).

सं० वणिक् (ब० व० वणिजः) vaṇik,>हि० बनिया>आं० banyan (वटवृक्षः यतो, ह्यस्य वृक्षस्याधस्ताद् वणिग्जनाः पुरा क्रयविक्रयं कुर्वन्ति स्म, अत एव यूरोपे अस्य वृक्षस्यैतन्नाम प्रचलितम्)।

सं० बृहत् bṛhat गॉ० baurgs, आं० borough (बृहत्-पत्तनम्) जा० burg, अवे० beregant.

सं० आगारः āgāras, ग्रीक agora (assembly, the place of assembly सभागारः)

सं० वर्गः vargas, लाति० vulgus (सामान्य जनः), आं० vulgar, divulge, प्रकाशनम्, घोषणा, promulge, (तदेव)।

सं० जनः Janas, गणः gaṇas, आं० kin, king अप्यस्यैव परिवर्धितं रूपम्।

सं० द्वि-स्थ dvi-sth, आं० twist (द्विधा विभक्त) जा० zwist.

सं० स्वरुः svarus, आं० sword.

सं० वि-दत्तम् vi-dattam वित्तम्,>(विभाज्य दत्तम्, यथा प्रत्तम<प्र-दत्तम्), आं० booty<सं० द्वि-दत्त (divide).

सं० √धा dhā, अस्याः प्रकृतेर्भ्रातृवर्गीया deed सदृशाः फ्रेतृवर्गीयाश्च

आं० thesis प्रभृतयोऽनेका विकृतयः पूर्वं प्रतिपादिताः । लाति० आं० theme, hypo-thesis syn-thetic (सं० (सह)-धानम्, संश्लेषित) इत्यादयोऽन्या अपि विकृतयोऽवगन्तव्याः ।

सं० स्व-√धा svadhā (स्वस्य धारणाशक्तिः, आनन्दः, प्रकृतिः) ग्रीक ethos, ethimos (custom, customary) डेनी० स्वी० sed पु० आं० sidu, जा० sitt (custom, उच्चा० ज़िटे) अवे० फा० ख़ुदा ।

**अन्ये क्रियाव्यापाराः पदार्था विशेषणादयश्च—**

सं० √ वन् (वै०) van, लाति० venēnum, आं० venom, (सर्पदंष्ट्रातो निष्कासितो विषः) ।

सं० √ पा pā, पीतिः pitis, लाति० potiō (drink), आं० poison. (एतत्तु तथैव जातं यथा निगरणार्थाद् √ गॄ (drink) धातोर्विषार्थको 'गरः', गरलश्चेति शब्दौ निष्पद्येते ।

सं० √ धू dhū, गॉ० dumbs, आं० dumb, आं० deaf शब्दोऽप्यनेनैव निष्पद्यते ।

सं √ ग्रथ् grath, पु० उ० जा० krato, आं० crate क्रेट, cradle अप्येतस्मादेव, (सं० दोला>राज० डोलर, हि० हिन्डोला । सं० प्रेंखा>पं० पींग) ।

सं० √ स्कृ skṛ, √ कृ, कृत् kṛ, kṛt, कर्त kart पु० आं० sceran, जा० scheren (a pair of scissors, कर्तरी), ग्रीक keiro लाति० curts, पोल० krojc, (म० आं० cutte, आं० cut अप्येतस्मादेव गृहीत इति प्रतीयते, यतो हि सकाराद्याः स्पर्शध्वनयो जार्मण्यवर्गेऽप्यपरिवर्तिताः) ।

क. सं० √ स्था sthā, लाति० statua, आं०, फ़्रेञ्च statue (यतो ह्येषोऽपि स्थितो भवति) ।

ख. सं० प्रति-√ कृ prati-kṛ, प्रति-कर>पु० फा०, फा० पैकर (प्रतिकृतिः, प्रतिमा) ।

सं० √ तृप् tṛp, जा० durfen (may be, need), ।

सं० √ वह vah>*vegh>गॉ० ga-vign>आं० wag, (to stir, to

move) wawe ।

सं० √ मीव् mīv, >(push, press), आं० move.

सं √ राध् rādh, गॉ० ga-rēdan, (care for), जा० rat-en (advise) rettan, चर्चस्लाव raditi (care for) आं० ready, rescue अप्येतस्मादेत्र निष्पाद्यते ।

सं० √ क्मर् kmar, क्मरति (is crooked), ग्रीक kampto (bending, turning), अवे० फा० कमर (कटिः) ।

सं० √ नह् nah, बन्धने, लाति० nodus, आयर० nascim (बन्ध), गॉ० nati आं० net, node, noduleअस्यैव ताद्धितं रूपम् । (आं० knot< सं० √ ग्रन्थ्) ।

सं० √ वन् van, वन्धुर vandhur, आं० wend, wind, पु० आं० winde अद्यत्वे ध्वनियन्त्रस्य ध्वनिपट्टिकायाः कृते wind & rewind (आगे पीछे घुमाना) शब्दौ प्रयुज्येते, तावेतावेव ।

सं० √ ऋ, ऋणोति, ऋण्वति ṛ, ṛṇoti, गॉ० ur-reisan, आं० rise, raise अत्र धातोरन्ते s आगमः अत एव प्रेरणार्थकमिदं रूपं स्वार्थेऽपि प्रयुज्यते ।

सं० √ तुल् tul, लाति० tollere, आं० tolerance, tolerate जा० dulden, आं० endure, (धारणम्, सहनम्) आं० tol-tax इत्यादयः पूर्वं निर्दिष्टाः ।

सं √ उद्-सल् ud-sal>उच्छल्, उच्छलति ucchal, लाति० salire (कूर्दनम्) ।

सं० √ श्रू srū>*k,lou>श्रोण śroṇa (लंगड़ा, खंजः) आं० lame, leap, जा० laufen (धावनम्) ।

सं० √ स्पृह् spṛh>*spergyh· ग्रीक sperxomai (स्पेर्खोमई= move rapidly), जा० आं० spring.

सं √ स्कन्द् skand, लति० scandere, पु० आं० scacan (shake), रूसी pry-gnut (अत्र प्रु इति निपातः पूर्वपदम्) ।

सं० √ नृत् nṛt, नृतिः nṛtis, नृत्यम्, ग्रीक hornumi(stir up, arouse).

सं √ अश् aś, नस् नंस् nas nans प्राप्तौ, ग्रीक ēnegka ऐनेंक जा० ankundi-gen आं० announce.

सं० उत्-√सद् ut-sad, उत्सादयति, चर्च स्लाव० chodu-choditi, आं० sit इत्यादयः पूर्वमेवोक्ताः ।

सं० √ मन् man ग्रीक men, लाति० manēre, सं० ममन्धि (व० बिलम्बं करु), आर्मे० mnam, इता० ri-manere, म० आं० re-mayne, आं० re-main.

सं० √ लिप् lip, लिप्त lipt आं० be-lieve, जा० bleiben (remain).

सं० √ लि li, लयते layatē, लयः layas, *legh, लीनः linas, ग्रीक lekhomai, लाति० lectus (bed), आयर० laigeim, गॉ० ligan, स्लाव० legan, आं० lie, lay, जा० liegen.

सं० अप apa, अपा apā-√वृ vṛ, वर् var, लाति० aperire सं० अपावृणु[1] आं० open.

सं० √ लभ्, रभ्, लम्भ labh, rabh, ग्रीक lambana.

सं० √ भृ bhṛ, ग्रीक pherō, लाति० ferre, आयर० beirim, आं० bear, जा० ge-baren, रूसी brat (take).

सं कुलायः kulāyas (संस्कृते कुलायः 'नीड' शब्दे संकुचितः), ग्रीक kellŏ आं० hold, जा० holten,. सं० कलायः (मटरः) ।

सं० √ तन् tan, लाति० tenēra अनेन धातुना लतिन्यांग्लादिषु intend extend, attend, लाति० obtinere, आं० obtain, retain, इत्यादय एकत्र अन्यत्र च लाति० tempus (समयः) temporal, आं० temporary, tempt, tempted, attempt इत्यादया नैका विकृतयो जायन्ते ।

---

१. हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥
—ईश० उप—१८ ।

सं० √ दा dā, संस्कृतस्यास्य दा धातोः साधारणं, द्विरुक्तं चत्युभे अपि रूपे सर्वासु सजातीयासु भाषासूपलभ्यन्ते। संस्कृते त प्रत्ययेन सह दत्त<दद्-त इत्यत्र द्विरुक्तं रूपं दानमित्यत्र च साधारणम्। यथा संस्कृते कृत् प्रत्ययान्तं रूप-द्वयं जायते, ते एव रूपे आश्रित्यान्यासु भाषासु शतशः शब्दा निर्मीयन्ते। संस्कृतवद् ग्रीक्यां लटि didomi, सं० ददामि (इत्यत्र धातोर्द्विरुक्तं रूपम्) लुङि च सं० अदात् ग्रीक edoka, इत्यत्र साधारणं रूपं विद्यते। लातिन्यां तु dare, द्विरुक्तं रूपं नास्ति। आंग्ल्या donner, donate, donation सदृशेषु शब्देषु सं० दान इति विकृतिः सुरक्षिता, परम् आं० dedicate इति नामधातो द्विरुक्तं रूपं 'त' प्रत्यश्च विद्येते। एवमेव आयर० do-diur (give) इत्यादयो नैके धातवोऽनेनव निष्पद्यन्ते।

सं० अप-√धा,-ap-√dhā, अपधानम्, अभिधानम्, लाति० आं० ab-domen, (उदरस्याधोभागः)।

सं० अधि-√धा adhi-√dhā, अधिधानम्, लाति० आं० addend, addendum (न पुं० प्र० ए० व०) addenda ब० व० (संस्कृतवल्लातिन्यामपि नपुंसके प्रथमाद्वितीयैकवचनयोः अम् इति विभक्तिः, बहुवचने तु आनि इत्यस्य स्थाने वेदवत् आ, इति तु पूर्वमेव कारकविभक्तिप्रकरण उक्तं तत्सर्वमत्रावधेयम्)।

सं० अधि-धृ, धर् adhi-√dhṛ, dhar, लाति० आं० adhere, adhere-nce (संश्लेषः, दृढताः, भक्तिः), adherent.

सं० √मृ mṛ, मर्द् mard, आं० amalgam (हि० मलना इत्यत्र भारोपीयो लकारः सुरक्षितः)।

सं० अथ atha, ग्रीक eti (more over), लाति० et (च), आं० and, तथैव अन्तार्थको end अप्येष एव।

सं० √ आप् āp, आप्त, आं० apt, aptness, aptitude, attitub (अत्र पकारस्य समीकरणं परसावर्ण्यं वा जातम्) co-operate, co-operation इत्यादयो नैका अन्या विकृतयः संजायन्तेऽस्य धातोस्तासु काश्चित्पूर्वं निर्दिष्टाः।

सं० √ वृ dhvṛ, ध्रुतिः dhrutis (deception), धूर्त लाति० fraudic, आं० froud.

सं० माया māyā, रूसी na-magat (deceive), फा० माया।

सं० कलः kalas, ग्रीक kalos (सुन्दर), सं० कल्यः, कल्याणं अप्येतस्मादेव।

सं० भद्र bhadra, गॉ० batiza, batisats आं० better,best.

सं० उप (निपातः) up, गॉ० uf, ubils आं० evil, जा० ubil.

सं० √ तङ्क tank, गॉ० thagkjan (थंकजन), डेनीय स्वी० tanka, आं० think, जा० dunken.

सं० अन्तर्-लयः antar-layas, लाति० inter-legere>intlleger (अत्र रेफस्य समीकरणेन लकारः जातः, r>l), आं० intellegence इत्यादयः शब्दा अनेनैव निष्पद्यन्ते।

सं० √ तनु विस्तारे tanu लाति० in-tenteue आं० intend.

सं० √ स्था sthā>आं० stand, under-stand (सं० अन्तर>आं० under) एवमेव जा० verstehen<सं० प्र-स्था।

सं √ गै gāi, गीतःम्, आयर० gaith (wisdom प्रज्ञा)।

सं० √ विद् vid, आं० wise, जा० weise, आं० witness, vit, wisdom.

सं० मेधा medhā, ग्रीक manthano (learn), अवे० मज्दा <सं० मेधस् यथा— अहूरा मज्दा<सं० असुरः मेधस्।

सं० √ तुप् tup, (स्तुप्), ग्रीक tuptō, आं० stupid.

सं० महत्तरः mahattaras<*mages-ter>लाति० magister>म० आं० maister, आं० master, जा० meister, आं० mister (अन्येऽपि प्रभूताः शब्दा निष्पद्यन्ते)।

सं० √ वद् vad, वाद्य ग्रीक hudeo (praise, sing of), audē, odeum,-on, (a roofed building, akin to a theater, hall). सं० वाद्यम् ग्रीक, आं० ode (संगीतम्), लाति० ode.

सं √गृ gṛ, गृणाति, गिरति, ग्रीक gērus, आं० cry .

सं० कुद् kud<*keud, सं० कुत्स, ग्रीक kudago कुदेग्जो, आं० shout.

सं० √क्रुश् kruś, अवे०, फा० खरोश ।

सं० √वृ vṛ, वर् var √वर्त्, √वर्ध्, आं० word, स्लाव० rod (जातिः वंशः परम्परा) ।

सं० √ स्फूर्ज् sphūrj<*sphergᵥ>पु० आं० sprecan>specan> आं० speak, जा० sprache .

सं० √राध् rādh (to perform, prepare), गॉ० rodgan, ge-redan (दत्तावधानो भव), जा० reden (speak), आं० reading, ready लाति० ratio (अनुपात) ।

सं० √दिश् diś <*dekᵥ>आं० dictionary, आंग्ल्या dictate,-tion, tor, इत्यादयः शब्दाः पूर्वमेवोक्ता ।

सं० √स्वृ svṛ शब्दोपतापयोः, पां० swear, an-swer इति गौणे रूपे स्वर शब्दः सुरक्षितः ।

सं० नहि nahi<negyhe>लाति० negāre, आं० negative,>de-ny.

सं० पृत् pṛt, पृतना, रूसी peret .

**विशेषणानि—**

सं० √भिद् bhid . आं० bitter, पु० नार्स० bita (bite) . लाति० re-fūtāre, आं० re-fuse अप्येतस्मादेव ।

सं० √घृ ghṛ घृणिः ghṛṇis प्रकाशः, आं० glisten, पु० उ० जा० glizan, जा० glasen, आं० glaze अप्येतस्मादेव ।

सं० √दी dī दीद्यति (वै० प्रकाशते)>द्युत्>ज्योतिः दीप्, दिव्, लाति० diēs (दिवा), ग्रीक deato, dēlos (दृश्य), फा० दीदन् (देखना), दीदा (नेत्रम्) ।

सं० √ भ्राज् bhrāj, गॉ० bairhts, आं० bright.

सं० √ क्रुड्, > क्रूड krud (to become thick) लाति० crūdus, आयर० cruaidh, आं० crude.

सं० √ ह्लाद hlād>*ghlādh, आं० glad.

सं० गुरु gurū>ग्रीक barus, लाति० gravis, आं० gravity इत्यादयः। आं० barometer इत्यस्य पूर्वपदमपि सं० गुरुरेवास्ति। एवमेव गॉ० kaurus कोरुस>आं० coarse इति जातः। ग्रीक्या आंग्ल्यामागतः brutus, brute (rude, stupdid) brutal अप्येतस्मादेव।

सं शूरः,>*$k_{v}$ūre>ग्रीक (kūros, kūrios, master ,Lord), kuriakos>(शूरस्य ओकः निवासः), पु०नार्स० kirkja, जा० kirche, आं० church. एवं चर्च शब्दोऽपि सं० शूर<*$k_{v}$ure>ग्रीक kuros (Lord, god) इत्यस्मान्निष्पद्यते।

सं० कर्करः karkarsas (कर्कशः, कठोरः), ग्रीक krateros, गॉ० hardus, आं० hard.

वि० सं० रुधिरः rudhiras, लाति० rubra, robus, robustus, आं० robust (दृढ पुरुषः)।

वि० सं० √स्तृ stṛ, स्तर्, ग्रीक stereos (stifl, hard) जा० starr, आं० strong.

सं० जवः Javas (वेगः शक्तिः), अवे० zāvar, फा० ज़ोर।

सं० √ लग् lag, लग्न, लाति० legare (to bind) लाति० आं० religion. (यतो हि धर्मो मानवेन सह स्वभावतो लग्नो भवत्यत एवैतस्यैतन्नाम)।

सं० √ हु hu<*ghu, आ-हुतः hutas<*ghutas>गा० guth>आं० god,God. (यतो ह्ययमाहूयते जनैरत एवास्यैतन्नाम। ऋग्वेदस्य प्रथम एव-'आग्निमीले पुरोहितम्' इत्यादि मन्त्रेऽपीश्वर 'होता' इत्यभिहितः)।

सं० दिव् div, देवः devas, आं० divine.

सं० द्यौः dy$^{a}$us, लाति० deus, ग्रीक zeus,zeupater<सं० द्यौस्-पितर्।

सं० √तन् ten, लाति० tampus, temple अप्येतस्मादेव।

सं० पृच्छ pṛcch>*proske$^{w}$ इता० pregare, फ्रेञ्च prier, आं० pray, prayer.

सं० √ विद् vid, ग्रीक eidos, eidon, आं० idol.

सं० विः (वै० पक्षी) vih, लाति० ovi, ग्रीक oivōs, लाति० ōmen, (यतो हि पुरा पक्षिणं दृष्ट्वैव शकुनं परीक्ष्यते स्म । राजस्थान्यामपि खंजनं सगुन चिड़िया, हि० सोन चिड़िया इत्युच्यते । अत एव आंग्लयां लातिन्यां च omen> सं० अवि-मन् इत्युच्यते ।

सं० अंगिरा angirā, आं० angel.

सं० √ भास् bhās, आं० fairy, फा० परी ।

सं० √ भा bhā, (दीप्तौ) आं० fame (यशः, प्रसिद्धिः), famous (ख्यातः) ।

सं० √ उष् दाहे uṣ, आं० com-b-uṣt (ज्वलनम्), combustune (distructon by fire)

सं० √ ज्वल् Jval<*g$^{w}$el>-पु० आयर० qual, आं० coal.>colk.> coke.

# संकीर्णवर्गः

अनेके एतादृशा धातवः शब्दाश्च यूरोपीयासु भाषासु विशेषत-आंग्लभाषायां प्रचलिताः सन्ति येषां मूलरूपेण सहोपसर्गनिपातादयः संयुज्याथवा कृत्तद्धित-प्रत्यया युक्त्वा नानाकारान् भिन्नार्थकांश्च प्रभूतान्नवनवान् शब्दान्निष्पादयन्ति । अथ चैतादृशा अपि प्रभूताः धातवः शब्दाश्चाग्ल्यां प्रचलिताः सन्ति ये संस्कृत-सजातीयाः सन्तोऽपि प्राङ् न चर्चिता, एतादृशा एव केचिद् धातवस्तन्निर्मिताः शब्दाश्चात्र प्रदर्श्यन्ते ।

सं॰ √ दशस्य daśasya (वै॰ to favere, serve, oblige अर्हता) <* dek$_{y}$es दशस्या (paying homagedecent deign (योग्य समझना कृपा दिखाना), dignity, dignitary, dainty (स्वादिष्टम् वस्तु), dogma (सिद्धान्तः) अप्येतस्मादेव सम्बद्धः ।

सं॰ √पुट् puṭ, पुटः (to fold, to bind together) लाति॰ आं॰ com-pute, com-puter. de-putation. am-putate (शल्यक्रियया‌ङ्ग-विच्छेदः) अत्र am<अ निषेधार्थको विपरीतार्थको वास्ति ।

सं √ भृ, भर् bhar आं॰ bear, लाति॰ di-ferre सदृशानि सरूपाणि पूर्वमेवोक्तानि । कानिचित्सोपसृष्टान्यत एव भिन्नार्थकानि रूपाण्यत्र प्रदर्श्यन्ते । लातिन्या di-ferre इत्यस्मादांग्ल्यां सर्वथा भिन्नार्थकं प्रकृतिद्वयं निष्पन्नम् । तद्यथा—(क) de-fer (कस्यचिन्मतं स्वीकरणम्, प्रदानम्), de-ference (submission अनुरोधः, आदरः) इत्याद्याः ।

(ख) dlffer (मतभेदः), diflerence.

उभयोत्रपसर्गभेदस्तु स्पष्टमेव लक्ष्यते । क वर्गे de दे<सं अधि॰ ख वर्गे च dis<सं॰ दुस् इत्युपसर्गभेदेनैकस्यैव भृ>लाति॰ ferre.

धातोः सर्वथा भिन्नार्थौ जातौ । एवमेव pre-fer, con-fer, re-fe proffer, offer <उप-भर् इत्याद्यान्यनेकानि रूपाणि जायन्ते 'क' वर्गीयप्रकृतेः । आं॰ bier (आरथी) अपि भरतेरेव (अत्रार्थापकर्षो जातः) ।

सं० √ स्फाय् sphay, स्फिर sphiras (वै० वृद्धि:, much, abundant) आं० pro-sper, prosperity, pro-sperous despair, desperation, (निराशा) अत्रापि आं० des<सं० दुः इत्येवोपसर्गोऽस्ति ।

सं० √ स्खल्, स्फल् sphal ग्रीक sphallo, लाति० fallo, आं० fall, fallen.

सं० खिद्यते: लाति० आं० fratricide (भ्रातृघातक) सदृशा उपपदयुक्ता घातकार्थका नैके शब्दा निष्पद्यन्त इति प्रतिपादितम्। तथैव de-cide, de-cisive (निर्णय:, निश्चय: निश्चितम्) इत्याद्याः शब्दा अपि निष्पद्यन्ते । (de< अधि इत्युत्कर्षेऽस्ति) ।

सं० √ लिख्, रिख rikh, रेखा rēkhā, जा० reihe, आं० rwo.

सं० छाया cchāyā<*sk$^w$a (सूर्यपत्नी, दीप्तिः, कान्तिः) ग्रीक skiā आं scene, scenery, shine, अन्ये शब्दाः पूर्वमेव प्रतिपादिताः ।

सं० जूट: jūṭas, जूटिका (हि० जूड़ा) एष एव आं० jute इत्यस्ति। jute अपि भारतादेव विदेशेषु गतोऽतोऽस्यैतन्नाम तत्रापि प्रचलितम् ।

सं० सुमन: sumanas (पुष्पम्), सुमना sumanā (जातिपुष्पम्) । यथा संस्कृते सुमनः, सुमना इत्यस्य पुष्पसामान्यं जातिपुष्पञ्चेत्यर्थद्वयं विद्यते, तथैव पारस्यामपि समन इत्यस्यैतदेवार्थद्वयमित्यवधेयम्। अथ च पारस्या यासमीन (चमेली) इत्यत्रादौ यकारागमः। तदेव यकारागमयुक्तं पारस्या यासमीन इति रूपमांग्ल्यां jasmine इत्यस्ति ।

सं इदम् idam, लाति idem (असौ) अनेन सह भाववाचक te (ता) प्रत्यय योगेन आं० identify, identical, identity (अयमसावस्तीति यौगिकोऽर्थ:) सदृशा नैका विकृतयो निष्पद्यन्ते ।

सं० √ शुष् śuṣ, शोष: आं० sear शुष्क: (अत्र ष: रेफे परिणतः) ।

सं० मल: malas, मलिन malina आं० melan-choly (मानसी व्यथा) ।

सं० √ लम्ब् lamb आलम्ब:, अवलम्ब, आं० labour, co-llaborate, collapse, re-lapse इत्यादयोऽनेका विकृतयोऽस्य जायन्ते ।

सं० मर्या maryā-dā (marke, limit) लाति० mare, लाति० आं० margin, marine, (belonging to sea) mariner अप्यस्यैव ताद्धितं रूपम् ।

सं० √ लुम्प् lump जा० laub, आं० leaf (पत्रम्) यतो ह्येतदपि वृक्षाल्लुप्तं छिन्नं वा भवति, अनेनैव पुस्तकस्यापि पृष्ठं leaf, इत्युच्यतेऽनेनैव च librāreus (यत्पुस्तकेऽस्तीति विशेषणञ्जातम्) एतस्मादेव आं०, library (ग्रन्थालयः) इति निष्पन्नम्।

सं० √ पच्, पक्तः, द्वि-पक्तः >आं० twice-cooked-biscuit.

स० चारुः cārus आं० ceer, (cherish, charity).

सं० √ भ्रंश् bhranś<*bhrekᵤ√>आं० break, burn.

सं √ भुर् bhur (वै०), ग्रीक phuro, लाति० furere, आं० furn, fury (क्रोधः) अप्येतस्मादेव।

सं० √ बर्ह् barh<*bhergʷe (to cover) आं० burry<burg (to protect).

सं० गुरुः gurus>ग्रीक barus>आं० brutal, brutality.

स० पूर्वः (श्रेष्ठः), प्रवः, आं० brave, bravo.

सं० भगः bhagas (योनिः) आं० bitch (योनियुक्ता शुनी, वृकी वा)।

सं० तरः taras>लाति० आं० trans (पारम्, पारे) म० आं० thoru, आं० thorough, जा० durch, आं० through, thrill अप्येतस्मादेव।

सं० √ तुर् tur (वै० to press forward with force) आं० throw.

सं० √ तम् tam (to perish[1]) ग्रीक tomos (a piece cut out or off), √temeien (to cut) आं० a-tomos, एवमत्र अ a निषेधार्थको निपातः प्रकृतिस्तु सं० तम् tam अथ च ग्रीक temien एकैव।*एवम् ग्रीक्या आंग्ल्यामागतस्य a-tom इत्यस्य संस्कृते ग्रीक्याञ्चोभयत्र 'अ-खण्डनीय' इत्येष एव यौगिकोऽर्थोऽवगम्यते।

**अत्रेदमवधेयम्**— यद्यप्येवं संस्कृताश्रयेणापि आं० ग्रीक atom (परमाणुः) शब्दः सुनिर्वाच्यस्तथाप्यस्य आं० atom शब्दस्य सं० 'आत्मा' शब्देन नास्ति कोऽपि सम्बन्धः। (सं० आत्मन् शब्दो ग्रीक्यामाग्ल्याञ्च atmos, (वायुः) इत्यस्ति।

---

१. M. M. V. S. कोश।

phere (वायुमण्डलम्) इति रूपेण प्रयुज्यते। ग्रीकया वाय्वर्थकः atmos, संस्कृतस्य च आत्मा उभावप्येतौ शब्दौ। अत् सातत्यगमने इति प्रकृत्या मन् (म) प्रत्यययोगेन निष्पन्नौ।

सं० ऊन ūna, ग्रीक eunis (वञ्चितः) लाति० vuānus, anes (रिक्त) फ्रेञ्च आं० vain (व्यर्थ, निस्सारः) vanity (निस्सारत्वं, व्यर्थता, दिखावा) vanish (अदृश्यता) अप्येतस्मादेव।

(सं० वि-नश् इत्यनेन लाति० आं० vanish इत्यस्य नास्ति कोऽपि सम्बन्धः, यद्यप्यनयोरुभयोरपि शब्दार्थयोः सम्यम् दृश्यते)।

सं० √ वृज्, वर्ज् varg (to lean, to bend, to incline) लाति० vergere, आं० con-vergent, divergent, इत्यादयः।

सं० √ वेप्, वेपते vēpatē लाति० vipere, अनयैकयैव सं० वेप् vep. प्रकृत्या यूरापीयासु भाषासु नैका भिन्नार्थकाः, सर्वथा भिन्नाकाराश्च विकृतयो जायन्ते। यथा हि—

(क) आं० vibrate,vibration (कम्पनम्)।

(ख) wave (वेला, उर्मिः)।

(ग) पु० आं० wif. आं० wife (पत्नी) जा० weib यतो ह्येषापि (स्व पत्युः) वेपतेऽत इयमेवमभिधीयते।

(घ) आं० whip (प्रतोदः), एषोऽपि wipe, wiper (वाष्पयानाग्रे काचोपरितो वाष्पप्रोञ्छनार्थं लग्ना क्षुद्रा ऋष्टिका-stick, सापि निरन्तरं वेपतेऽतोऽस्या- एतन्नाम।

सं० √ विज् vij, उद्-विजति, वेजते, आं० week, (प्रतिसप्ताहं वेजते, परिवर्तते) weak, एषोऽपि उद् विग्नो (दुर्बलो) भवति wicked अप्येष एव। यतो ह्ययमप्यात्मनि दुर्बलो भवति। सं 'विकटेन' सह नास्त्यस्य कोऽपि सम्बन्धः। सं० वि > कृत > विकट।

सं० √ मय् may (to go, mov) आं० migrate, (move from one place to other) अनेके चास्य ताद्धितानि रूपाण्यपि।

सं० √ नु nu, नौति (नमति) लाति० nutare आं० nod (to bend the head slightly),nutate, nutation.

सं √ नश् naś नश्, आं० nox, noxious, noxal (injury done by a person) लाति० in-nocere (to hurt)—सं० अ-नाशयन्, आं० innocent. अहानिकरः, निरीहः ।

सं० √ स्कु sku, (वै० to cover,) स्कौति-आवृणोति, सं० अप-स्कु, आं० ob-scure, ob-scurity, (in-dstinct, hidden, अस्पष्ट, दुर्बोध, गूढ) ।

सं० √ पृ, pṛ, पूर्त, आं० pre-pare, re-paire, spare, separata इत्यादयाऽनेका विकृतयः ।

सं० √ तिज्, तिग् स्तिग् tig-stig निषाणे, तिग्म, तीक्ष्ण tīkṣṇa, तिक्त tikta आं० √stick, stitch, stigma (चिन्हम् हि० निशान) di-stinct, di-stinguish, instigate, instinct, style, stimate, tiger सदृशा नैका भिन्नार्थकाश्च विकृतयोऽस्य जायन्ते ।

(सं० √ स्तर् √तर् वदनेकेषां धातूनां सकारवत्सकाररहितञ्चेति द्विविधे रूपे संस्कृते स्वीकृते इत्यपि सर्वदावधेयम्) ।

सं √ लिम्प् limp आं० life, be-lieve (अत्र lieve इति प्रकृत्याः पूर्वं be<√भू इति धातुर्विद्यते ।

सं० √ स्था>√स्थू sthū स्थूणा (स्थिरः) आं० stoic (सुखदुःखे स्थिरोऽनुद्विग्नो वा) ।

सं० स्तुभ् stubh (to stop) आं० stop, stuff अप्येतस्मादेव ।

सं० √ स्तृ, स्तर् star आं० stratum, (स्तरः, तह) strata (ब० व० तहें) pro-strate (प्रसृतः दण्डवत् प्रसृतः), street, (विस्तृता-रथ्या) startle.

सं० स्तृणोति stṛṇoti. (scetters) strew, (बिखेरना), straw तृणम् ।

सं० √ तुद् tud (to urge to provoke) लाति० studēre, आं० study, studious, student, (यतो ह्येषा तुदति प्रेरयत्युत्साहयति वा ज्ञानाय अत एव study इत्युच्यते) ।

सं० √ स्तभ्स्तम्भ् stabh, स्तम्भ् stambh, आं० stamp, step.

सं० √ तु tu स्थौल्ये इति यस्याः प्रकृते आं thumb इति निष्पन्नस्तस्या एव आं० thigh (जंघा) अपि जायते, यतो ह्येषापि स्थूला भवति ।

अत्रेदमवधेयं यत्संस्कृतस्य लौकिकवैदिकेत्युभयोरपि रूपयोर्वैदिका शब्द-सम्पत्तिरेव तुलनाकृतेऽधिकतरोपयुज्यते। भारतीया आर्यभाषा अपि तस्या एव भाषाया विकसिता यस्याः साहित्यिकं रूपं वेदेषूपलभ्यते, न तु लौकिकसंस्कृत-भाषायाः।

विवेचनेनैतेनैतत्सुस्पष्टमवगम्यते यत्सर्वासां संस्कृतसजातीय (आर्य भारोपीयभाषाणां) प्रकृतिः संस्कृताश्रयेणैव सम्यगवम्यते।

अपि चैकस्यैव व्यक्तेर्भावस्य पदार्थस्य कृते नाना सजातीयभाषासु प्रयुज्यमानाः सर्वथा भिन्नाकाराः शब्दाः अपि संस्कृतप्रकृतिजा एव। यद्यपि समग्रोऽयं ग्रन्थ एतादृशैरुदाहरणजातैरोतप्रोतो विद्यते, तथाप्युदाहरणद्वयमत्र पुनः प्रदर्श्यते।

उषःकालस्य प्रभातस्य वा विभिन्नासु भाषास्वेतानि नामानि सन्ति—

**१. आं मोर्न, मोर्निग (मारो-टुमारोऽप्यनेनैव सम्बद्धः, जा० मोर्गन। २. आं डान ३. जा० फ्रुह ४. लाति अरोरा** aurōra . **५. रुसी ब्रेजित्** brrezzit<**सं० भ्राज्। ६. फा. सुबह्**<**अवे सवहि**<**सं० श्वः। ७. हि० पौ-फटना अथवा फूटना**<**प्रभा-स्फोटनम्। ८. हि० सवेरा**<**सं० स्वर् सूर्यः, प्रकाशः।**

ऐतेषु प्रथमा शब्दचतुष्टयी ग्रन्थे व्याख्याता, तत्रैव द्रष्टव्या।

एवमेव स्त्री (पत्नी नारी च) वाचका ऐते प्रमुखाः शब्दाः प्रचलिताः सन्ति—

**१. ग्रीक-(क) गेने (चिकित्सालयेषु सर्वत्र महिलावार्ड कृत आंग्ल्या गेने वार्ड इति नाम पट्टेषु दृश्यते। तत्रायमेव गेने शब्दः प्रयुज्यते)। (ख) पोलिआ। २. लाति० आं० फिमेल, फेमिना, वुमेन। ३. आं० वाइफ (पत्नी)। ४. जा० फ्राउ (नारी, पत्नी च)। ५. मेडम (महिलानां कृते सम्मानसूचकः शब्दः)। ६. फा. जन। ७. हि० पं० नार**<**सं० नारी ८. राज० लुगाई**<**सं० लोकः (अस्य स्त्रीलिंगे रूपम्)।**

एतदतिरिक्तं आं० क्वीन (सम्राज्ञी) फा० कनीज़ एते सर्वथा भिन्नाकारा अप्येकार्थबोधकाः शब्दाः संस्कृतप्रकृत्या सम्यग्व्याख्याताः। अथ चैकस्यैव सं० धातोः नानाभाषासु नानाविधाः प्रभूता विकृतयः कथं जायन्त इत्येतदप्यत्र सम्यक् स्पष्टीकृतम्। अनेनाध्ययनेनैकतोऽस्याः शंकायाः सम्यक्समाधानं भविष्यति यद् ग्रीक्या अदोल्फोस्<सं० संगर्भ्य एव संस्कृतशब्दो नास्त्यपि तु आं० काफ (वत्सः) शब्दोऽपि सं० गर्भज एव।

एवं सर्वासां सजातीयभाषाणामेकमूलत्वं स्पष्टतया प्रतिपादितम्। अनेन तुलनात्मकाध्ययनेन संस्कृतस्य महत्त्वेन सहैव भारोपीयभाषाणामैक्यप्रतिपादनेन विश्वैक्यभवानापि स्वत एव उद्बुद्धा भविष्यति, विभिन्नदेशवासिनां पारस्परिका भ्रातृत्वभावना च वर्धिष्यते।

## यूरोपे प्रत्ना भाषाविज्ञान[1]परम्परा

यूरोपे सुकरातोऽभूद्ग्रीकीयो वाग्विदादिमः।
प्लेटो[2] तस्यैव सच्छिष्यो घोषाघोषाववर्णयत्॥१॥
विख्यातोऽर[3]स्तुराचार्यो भाषां यो पर्यभाषत।
व्याचष्टे यः पुरा भाषां थ्रे[4]क्सो व्याकृतिपुंगवः॥२॥
एवं प्रवर्तिता ग्रीसे शब्दशास्त्रपरम्परा।
परं तत्रैव सा लुप्ता ख्रीष्टाब्दे प्रथमे शनैः॥३॥

## यूरोपे नवाभाषाविज्ञानसरणिः

अष्टादशशताब्दान्ते ज्ञानेन संस्कृतस्य वै।
भाषाविज्ञानमारब्धं यूरोपे संस्कृताश्रितम्॥४॥
सम्बन्धोऽज्ञात एवासीद् ग्रीकलातिनयोः पुरा।
संस्कृतस्याश्रयेणैव सम्बन्धो विदितोऽनयोः॥५॥
विलियमजोन्स आंग्लीयो विद्वान्पूर्वं प्रकीर्तितः।
शाकुन्तलानुवादेन तेनांग्ल्यां रचितेन च॥६॥

---

१. अमरसिंहेन शास्त्रविज्ञाने एवं परिभाषिते—

'विज्ञानं शिल्पशास्त्रयोः।'

एवमत्र भाषाशास्त्रं भाषाविज्ञानञ्चेत्युभावपि शब्दौ पर्यायवाचकरूपेण गृहीतौ। नव्यदृष्ट्यापि भाषाशास्त्रं भाषाविज्ञानमप्यस्ति। यतो हि विज्ञानस्य सर्वं वैशिष्ट्यमत्र विद्यते, इति तु पूर्वमेव (कारिकायां) निरूपितम्।

२. अस्य समयः ई० पू० ४२९ तः ३४७ पर्यन्तं निर्धार्यते।

३. अरस्तुः सिकन्दरस्य विख्यातो गुरुर्दार्शनिकश्चासीत्।

४. यूनानदेशस्य ख्यातनामा वैयाकरणः थ्रेक्सः पतञ्जलिसमकालिक आसीत्।

५. एवं खलु यूनाने यदा व्याकरणस्यास्पष्टं रूपमेवारब्धं, ततः पूर्वमेव भारते (ई० पू० पञ्चमे शतके) पाणिनिरष्टाध्यायीं व्यरचयत्। ततः पूर्वं (ई० पू० सप्तमे शतक एव) यस्को निरुक्तं प्रणिनाय। तदा खलु समग्रेऽप्यवशिष्टे यूरोपमहाद्वीपेऽन्धकारयुगमेवावर्तत।

यूरोपे संस्कृतं व्याप्तं स्वल्पेन समयेन वै।
बुधास्तत्र ततो जाता भाषाशास्त्रधुरन्धराः ॥७॥
ग्रन्था यैर्निर्मिता नैके जार्मण्यैस्तु विशेषतः।
कोल्ब्रुक्श्लेगलौ बन्धू हेम्बोल्टरास्करेज्मसाः ॥८॥
अगस्त्य एफ पाटश्च ग्रिमो याकोबि शब्दवित्।
ग्रास्मानवर्नरास्कोली बेडस्टार्फोऽपरो बुधः ॥९॥
फ्रान्त्सबॉप्पाख्य जार्मण्यो भाषाशास्त्रपितामहः।
एल्बर्टथुम्बरीचर्डसौशील्डाख्या बुधास्तथा ॥१०॥
मोक्षमूलरभट्टस्य बर्नूफो वेदविद्गुरुः।
तच्छिष्यैर्वेदवेदांगाः सुसम्पाद्य प्रकाशिताः ॥११॥
रुडाल्फरोथस्तच्छिष्यो बोथलिंगस्तथैव च।
आभ्यां संस्कृतजार्मण्यकोषो विरचितो महान् ॥१२॥
रोथेन वैदिकाः शब्दा बोथलिंगेन लौकिकाः।
सप्तखण्डात्मके कोषे महत्यस्मिन्समाहृताः ॥१३॥
ऋग्वेदभाष्यमांग्ल्यां हि व्यधाद्यो सायणाश्रितम् ॥१४॥
विल्सन ऑक्सफोर्डस्य प्राध्यापकपदे बभौ।
सम्पाद्य सायणं भाष्यम् ऋग्वेदं तेन संयुतम् ॥१५॥
प्रकाशनाय संलग्नो वर्षाणि षट् च त्रिंशतिः।
वेदभारतयोर्भक्तः संस्कृतस्य हिते रतः ॥१६॥
जार्मण्यदेशजो विद्वानिंग्लेण्डे यो सदावसत्।
मोक्षमूलरभट्टोऽसौ भाषाविज्ञानमर्मवित् ॥१७॥
पदवाक्यप्रमाणज्ञो व्याकर्ता नवपाणिनिः।
आल्ट इण्डेशग्रामाटीक्[1]कर्ता वाकरनेगलः ॥१८॥
व्यधाद् व्याकरणं प्रत्नभाषाणां तुलनात्म[2]कम्।
विभक्तं पञ्चखण्डेषु कार्लब्रुग्मानपण्डितः ॥१९॥

---

१. प्रत्नभारतीय (संस्कृत) व्याकरणमित्याख्यं जार्मण्यभाषायां बृहदाकारेषु सप्तभागेषु विरचितं सुमहत्संस्कृतव्याकरणम्। आग्ल्यामयं ग्रन्थो नैवानूदितः।

२. Grundriss der vergleichenden Gramatik der indo-germānischen sprachen.
इत्याख्य जार्मण्यभाषायां विरचितस्यास्य तुलनात्मकव्याकरणस्य

कीथो ह्विट्नी च वेदज्ञौ मेक्डानलोऽपि वेदवित्।
निर्मितं वैदिकं भव्यं येन व्याकरणद्वयम् ॥२०॥
ब्लूम्फील्डोऽमेरिकावासी भाषावैज्ञानिको महान्।
सूचीं वेदपदानां यो मन्त्रावृत्तेश्च निर्ममे ॥२१॥
शौस्यूरो रेणुमेयेजूल्बाखयास्पर्सनादयः।
ख्याताः सर्वे तथान्येऽपि भाषावैज्ञानिका बुधाः ॥२२॥
उपनिषत्परमो भक्तः शोपन्हारस्तु तत्त्ववित्।
पार्जीटरः पुराणानां महत्त्वं प्रत्यपादयत् ॥२३॥
व्याख्याताऽत्यत्रभाषाणां हिन्द्यादीनां सविस्तरम्।
भारते भारतीं तन्वन्नांग्लो ग्रीयर्सनो बुधः ॥२४॥
व्यधात्प्राकृतभाषाणां व्याकरणं तुलनात्मकम्।
पिशेल इत्याख्यजार्मण्यो भाषाविज्ञानपण्डितः ॥२५॥
शार्मण्यो वुल्नरो वेत्ता भाषाणां हि चतुर्दश।
प्राच्यविद्यालयाचार्यपदे लवपुरे बभौ ॥२६॥
रता अहर्निशं ये हि भाषाशास्त्रे च संस्कृते।
यूरोपेऽमेरिकायाञ्च सन्ति विज्ञाः सहस्रशः ॥२७॥

## भारतीया विद्वांसः

निरुक्तप्रत्नव्याख्याता दुर्गाचार्यो हि विश्रुतः।
स्कन्दमाहेश्वरेणापि टीकास्य विहिता पुरा ॥२८॥
यज्वा च देवराजोऽपि निरुक्तप्रत्नभाष्यकृत्।
सामश्रमीति विख्यातो निरुक्तालोचनं व्यधात् ॥२९॥
राजवाड़ेस्वरूपाभ्यां[1] नवे व्याख्ये विनिर्मिते।
सीतारामाभिधः शास्त्री राजारामश्च पण्डितः ॥३०॥
हिन्दीटीके व्यधत्तां द्वे छात्रलाभप्रदे उभे।
शिवनारायणः शास्त्री व्याख्याकारोऽस्ति नूतनः ॥३१॥

---

A Comparative Grammer of the indo-germanic Languages इति नाम्नांग्ल्यामप्यनुवादो जातः। परमस्यैव महाव्याकरणस्य तेनैव संक्षिप्तं रूपं संशोध्य प्रकाशितम्, तस्यांग्ल्यामनुवादो नैव जातः।

१. काशिनाथस्त्र्यम्बकः, २. लक्ष्मणस्वरूपश्च इति पूर्णाभिधाने।

सिद्धान्तकौमुदीकारभट्टोजीदीक्षितात्मजः ।
क्षीरस्वामिनमाश्रित्य भानुजी दीक्षितो बुधः ॥३२॥
अमरकोशस्य विख्यातां टीकां रामाश्रमीं व्यधात् ।
तिलको लोकमान्योऽभूद्भारतीसमुपासकः ॥३३॥
ज्योतिर्विज्ञानवेत्तासौ गीताटीकां व्यधान्नवाम् ।
भाण्डारकरसंस्थानस्थापको सुमहद्यशाः ॥३४॥
जात. श्रीरामकृष्णो हि विदुषां मार्गदर्शकः ।
गुणे च पारसो तारापूरवालेत्युभौ बुधौ ॥३५॥
सद्ग्रन्थावनयोर्मान्यौ भाषाविज्ञानपण्डितैः ।
आप्टेकोषस्य **निर्माता** शिवरामो हि वामनः ॥३६॥
श्रीसुनीतिकुमाराख्यश्चट्टोपाध्यायवंशजः ।
देशदेशान्तरख्यातो भाषावैज्ञानिको महान् ॥३७॥
वेदवेदाङ्गव्याख्याता विद्वान्सातवलेकरः ।
विश्वबन्धुर्महाप्राज्ञो वेदादीनां प्रकाशकः ॥३८॥
पदानुक्रमनिर्मिता वेदसाहित्यिकस्य यः ।
वर्मा सिद्धेश्वरोऽप्यस्ति भाषाविज्ञानपुंगवः ॥३९॥
धीरेन्द्राख्यश्च वर्मापि भाषाशास्त्रस्य पारगः ।
तिवार्युदयनारायणोऽप्यस्ति वाग्विदांवरः ॥४०॥
रामकृष्णस्य सच्छिष्यो विवेकानन्दविश्रुतः ।
वेदानां भाष्यकृत्स्वामिदयानन्दो भविष्यदृक् ॥४१॥
भारतीकृष्णतीर्थः श्रीशंकराचार्यपीठयुक् ।
गणितस्य हि विज्ञानं वेदेषु प्रत्यपादयत् ॥४२॥
अरविन्दो महायोगी वेदवेदान्तपरागः ।
संस्कृतेः संस्कृतस्यापि भक्तो भारतभूषणः ॥४३॥
मालवीयो महान्राष्ट्रनेता मदनमोहनः ।
मधुसूदनझा प्राज्ञो वेदविज्ञानवित्तमः ॥४४॥
विद्वान् गिरिधरःशर्मा चतुर्वेदविदांवरः ।
गोपीनाथः कवीनां यो राजैवासीद् बुधोत्तमः ॥४५॥
व्यासपाणिनिबाणानां कालिदासस्य मर्मवित् ।
अग्रवालो बुधो वासुदेवशरणसंज्ञितः ॥४६॥

राधाकृष्णन्निति ख्यातो नवदार्शनिकोत्तमः।
कविर्दिनकरो वाग्मी व्याख्यातात्रत्य संस्कृतेः ॥४७॥
'करपात्री'[1] मुनिर्वन्द्यो वेदव्याख्यातृसत्तमः।
मुनिर्गंगेश्वरानन्दो वेदसंरक्षणे रतः ॥४८॥
विश्वेऽखिलेऽपि वेदस्य प्रचारणपरायणः।
विज्ञो महेशयोगी च वेदवेदांगरक्षकः ॥४९॥
यूरोपेऽमेरिकायाञ्च प्रस्तोतात्यत्र संस्कृतेः।
प्रभुपाद्भक्तिवेदान्तश्चैतन्योऽपर उच्यते ॥५०॥
सच्छिष्योऽस्ति विख्यातशिवानन्दमहत्मनः।
सर्वोपकारनिरतः सेवानन्दसरस्वती ॥५१॥
सर्वतन्त्रस्वतन्त्रोऽभूदाचार्योऽमृतवाग्भवः।
शैवागमविशेषज्ञो बलजिन्नाथपण्डितः ॥५२॥
शब्दनिर्माणनिपुणो रघुवीरो हि कोषकृत्।
देशे तथा विदेशेषु संस्कृताय प्रयत्नकृत् ॥५३॥
विद्वान् दाण्डेकरो[2] ह्यस्ति कर्मठो विश्वविश्रुतः।
सीतारामश्चतुर्वेदो ग्रन्थनिर्माणपण्डितः ॥५४॥
बलदेवोऽप्युपाध्यायो वैदिकैतिह्यलेखकः।
मोक्षमूलरभट्टस्य भाषाविज्ञानभाषणान् ॥५५॥
हेमचन्द्राभिधो जोशी लेभेऽनूद्य यशो महत्।
भाषावित्सच्चिदानन्दवात्स्यायनो हि सूक्ष्मदृक् ॥५६॥
नाना वाक्कोशकारो हि माचवेऽस्ति प्रभाकरः।
भोलानाथस्तिवार्यस्ति भाषाविज्ञानपुङ्गवः ॥५७॥
सूर्यनारायणो व्यासो ज्योतिर्वित्कविसत्तमः।
प्रारब्धा कालिदासस्य येनोत्सवपरम्परा ॥५८॥
उत्सवायोजने दक्षः प्रत्यब्दं सत्कवी रथः।
संस्कृतस्य हिते लग्नः सर्वत्र च सदैव हि ॥५९॥

---

१. करपात्रीत्यभिधानेन विख्यातस्यास्य पूर्णं नाम श्रीहरिहरानन्दसरस्वती करपात्रमित्यस्ति।

२. डा० रामचन्द्रनारायण इति पूर्णं नाम। अनेन विदुषा संस्कृतांग्लजार्मण्य-भाषास्वनेके ग्रन्था निर्मिताः।

रामकरणशर्मास्ति भाषाविज्ञानमर्मवित् ।
श्रीरसिकविहारी च जोशी जार्मण्यवित्तमः ॥६०॥
कविः शुक्लो रमाकान्तः संस्कृतोन्नयने रतः ।
रामजीत्यस्त्युपाध्ययः संस्कृते नवग्रन्थकृत् ॥६१॥
द्विवेदः सूक्ष्मदृग्रेवाप्रसादः पाठशोधने ॥
ग्रोकावेस्तादिभाषाणां तुलनात्मकग्रन्थकृत् ॥६२॥
सत्यस्वरूपमिश्रोऽस्ति भाषाविज्ञानपण्डितः ।
गदाधरो व्यधान्नव्यं यूभातः संस्कृतं प्रति ॥६३॥
संस्कृतजार्मण्यकोषस्य योऽनुवादे कृतोद्यमः ।
मधुसूदनमिश्रोऽस्ति भषावैज्ञानिको नवः ॥६४॥
मेक्डानलप्रणीतं यो वेदव्याकरणं नवम् ।
हिन्द्यामनूद्य विख्यातः शास्त्रिसत्यव्रतो बुधः ॥६५॥
लोकसभाशुभाध्यक्षो बलरामोऽस्ति जाखडः ।
विज्ञो मण्डनमिश्रोऽस्ति मण्डनं संस्कृतस्य यः ॥६६॥
संस्कृतस्य प्रतिष्ठैभिर्बुधैरन्यैश्च वर्धिता ।
भारतीयाश्च पाश्चात्याः प्रत्ना आधुनिका अपि ॥६७॥
वन्द्या उक्ता अनुक्ता वा सर्वे संस्कृतसेविनः ।
रक्ष्यते संस्कृतेनैव भारतञ्चास्य संस्कृतिः ॥६८॥

## ग्रन्थकृत्परिचयः

राजस्थानेषु मेवाड़ः प्रदेशः सुमनोरमः।
अस्ति रायपुरं तत्र भीलवाड़ाख्यमण्डले ॥१॥
तिवारीलोइमागोत्रो गुर्जरगौड़तल्लजः।
तत्र श्रीटेकचन्द्रोऽभूत् षट्सुता[1]स्तस्य जज्ञिरे ॥२॥
तेष्वेव रम्यगौराङ्गो बिहारीलालपण्डितः।
जातौ तस्य सुतौ श्रीमान्कालूरामस्तथापरः ॥३॥
श्रीहरदेवशर्माख्योऽस्त्यस्य पुत्रः सुधाकरः।
उज्जयिन्याश्च सिप्रायाः कालूहेड़ास्ति सन्निधौ ॥४॥
राजा उदयसिंहो हि सुहृत्तत्रास्ति साम्प्रतम्।
श्रीमान्नाहरसिंहोऽस्य पिताभूद्धार्मिको नृपः ॥५॥
बिहारीलालशर्माणं व्यधात्स राजपण्डितम्।
परिवारसमेतौऽसौ तत्रागत्यावसच्चिरम् ॥६॥
तत्रैव लब्धजन्मा श्रीकालूरामात्मजोऽस्म्यहम्।
पितामहे गते स्वर्गं शिशोर्मे जनकौ गतौ ॥७॥

---

१. श्रीरामेश्वरजी, श्रीकृष्णजी, बिहारीलालजी, मायारामजी, मुरलीधरजी, रामप्रतापजी। एषु-श्रीकृष्णजीत्यस्य नारायणजी, गोविन्दरामजी, गणेशलालजीति त्रयः सुतास्तस्ययैषा सन्ततिपरम्परा—

१. नारायणजी > { १ मांगीलालजी
२ रामचन्द्रजी (गोविन्दरामजीत्यस्य-दत्तकपुत्रः)

३ गणेशलालजी।

रामप्रतापजीत्यस्यापि > लक्ष्मणजी, रामनाथजी, रामेश्वरजीतित्रयः पुत्राः।

लक्ष्मणस्य सन्ततिर्नाभूत्।

२ रामनाथजी > माधवलालः > बंशीतालः > मनोजकुमारः।

३ रामेश्वरजी > { १ नन्दकिशोरः > श्यामलालः।
२ गंगाधरः।

गंगाधरः > { १ वसन्तकुमारः > १ राजेन्द्र २ विपिनः
२ गोपालः > १ गोविन्द २ कृष्णचन्द्र

पितरौ[1] रटितौ बाल्ये उज्जयिन्याञ्च व्यावरे।
पुरामृतसरः प्रेम्णापूर्णं लवपुरं ततः ॥८॥
साहित्यिकप्रवृत्तीनां स्वाध्यायाध्यापनस्य च।
क्षेत्रे मे शोभने आस्तां कौमारेऽप्यथ यौवने ॥९॥
त्यक्त्वा लवपुरं रम्यं भारतस्य विभाजने।
प्राकारपरिखोपेतं भव्यद्वारैश्च भूषितम् ॥१०॥
वापीपद्माकरोद्यानकुल्याप्रासादमण्डितम्।
वणिग्जनैश्च सामन्तैर्व्याप्तं विद्वद्विभूषितम् ॥११॥
शाहपुराख्यमागच्छं पुरं स्वश्वशुरालयम्।
तत्र नहर्रसिंहस्य प्रख्यातनृपतेः सुतः ॥१२॥
विज्ञो राजाधिराजेतिपदवीभाक् प्रजाप्रियः।
श्रीमानुम्मेदसिंहोऽभूदाहिताग्निर्नृपोत्तमः ॥१३॥
राज्ये सुदर्शनं देवमभिषिच्य सुतं स्वयम्।
वानप्रस्थाश्रमं लेभे राजासौ शास्त्रमर्मवित् ॥१४॥
तेनैव राजकीयस्य ब्रह्मविद्यालयस्य वै।
प्रधानाध्यापकस्याहं पदे श्रेष्ठे नियोजितः ॥१५॥
परं साहित्यसेवार्थं त्यक्त्वा तत्पदमुत्तमम्।
दिल्लीं प्राप्तो वसाम्यत्र निर्वहन् येन केनचित् ॥१६॥
रविशर्मा सुभाषश्चानन्दो भारतभूषणः।
सन्त्येते हि सुताः सौम्याः वामाङ्गं मे शकुन्तला ॥१७॥
रवेर्विजयकृष्णोऽथ पुत्रोऽन्यो जयशंकरः।
राजीवश्चारविन्दश्च सुभाषस्य सुताविमौ ॥१८॥
गुरुवर्यः शिवः साक्षादाचार्योऽमृतवाग्भवः।
जीवनं मे च साहित्यं कृपया तस्य राजितम् ॥१९॥
सद्गुरुः साइनाथोऽस्ति शिडर्यां यो हि विराजते।
सिद्ध्यन्ति तद्दयादृष्ट्या कार्याण्यखिलान्यपि ॥२०॥
सेवारतस्य वाग्देव्याः शंकरस्य प्रसादतः।
सप्तमो दशको मे हृद्रुग्णस्याप्यधुना गतः ॥२१॥

---

१. अष्टाध्यायी जगन्मातामरकोशो जगत्पिता।

नववागर्थसम्पृक्तभवानीशङ्करार्चनाम् ।
विलोक्य विबुधा आत्मालोकनानन्दतन्मयाः ॥२२॥

पञ्चविंशतिवर्षाणि गोपितो ज्ञानशेवधिः ।
तं ज्ञापयितुमेवार्यभाषाणां तुलनात्मकः ॥२३॥

ग्रन्थो विनिर्मितो नित्यनूतनोऽपि पुरातनः ।
गुणैकपक्षपातिभ्यो विबुधेभ्यः समर्प्यते ॥२४॥

वैशाखपूर्णिमायां वै० नेत्राब्धिखाक्षिवत्सरे ।
ग्रन्थस्य मुद्रणं पूर्णं शशिमौलेरनुग्रहात् ॥२५॥

संस्कृतं यूरोपीयाभाषाश्च इति ग्रन्थस्योत्तरार्धं समाप्तम् ।

समाप्तश्चायं ग्रन्थः ।

श्रीशिवार्पणमस्तु

# सङ्केत-चिह्नानि

* धातोः शब्दस्य वाद्यार्यभाषायास्तस्यामेव भाषायां वा पूर्वं रूपम् ।

√ धातुचिह्नम् ।

> विकासचिह्नम् ।

.. रोमनाक्षरेणु संस्कृतध्वनीनां द्योतनायेमानि चिह्नानि प्रयुक्तानि—

१ स्वरोपरि दीर्घचिह्नम् । यथा—ā आ, ī ई, ū ऊ, ē ए संस्कृते दीर्घैकारो न प्रयुज्यते ।

२ ś शः

३ ṣ षः

४ ñ ञ्

५ ṇ ण

६ ṅ ङ

७ ṭ टः

* $k_y$ भारोपीयः क्यः

* $k^w$ भारोपीय क्वः

* $g_y$ भारोपीयः ग्यः

* $g^w$ भारोपीयः ग्वः

ṛ ऋः

ḷ लृः

c चः

ch छः

cch च्छः

संक्षेपचिह्नानि गुप्रसिद्धान्येव प्रयुक्तानि ।

१ Shorter Oxford English Dictionery कृते Sh. Eng. Dic. इति प्रपुक्तम् । २ वैदिकसंस्कृतेः कृते वै० इति प्रयुक्तम् ।

**If index of all the languages included the volume of the book would have been a big one, hence the indexes of English, and Sanskrit Words only are presented here.**

# English Words

## A

D

M

## O



## P

# संस्कृतशब्दानुक्रमः

एषां शब्दानामन्यासु भाषासु प्रयुज्यमानाः सजातीयाः शब्दा अग्राङ्कितेषु पृष्ठेषु द्रष्टव्याः ।

## कुछ सन्दर्भ ग्रन्थ*

१. मैक्समूलर—लेक्चर्ज ओन कम्पेरेटिव फिलोलोजी
डा० हेमचन्द्र जोशी—इसकाहिन्दी अनुवाद
२. कार्ल ब्रुग्मान्—कम्पेरेटिव ग्रामर आफ इन्डोजर्मनिक लेंग्वेजिज (अंग्रेजी अनुवाद:)
३. पेट्रिज—ओरिजिन
४. डा० गणेशदत्त शर्मा—ऋग्वेद में दार्शनिक तत्त्व
५. ब्लूमफील्ड—लेंग्वेज
६. यास्पर्सन—लेंग्वेज
७. तारापुरवाला—साइन्स आफ फिलोलोजी
८. गुणे— ,,
९. सत्यस्वरूपमिश्र —कम्पेरेटिव ग्रामर आफ ग्रीक लेंग्वेज
,, ,, आवेस्तिक लेंग्वेज
१०. डा० भोलानाथ तवारी—भाषाविज्ञान कोष
११. गंगाधर पिलसुले—यूभातः संस्कृतं प्रति
१२. टी० बरो—संस्कृत लेंग्वेज
१३. आचार्य विश्वबंधु—वैदिकपदानुक्रम कोश
१४. शार्टर आक्सफोर्ड इंग्लिश डिक्शनरी
१५. मोनियर विलियम—संस्कृत इंग्लिश डिक्शनरी
१६. आप्टे—संस्कृत कोश
१७. डा० धर्मेन्द्र कुमार गुप्त तथा आचार्य विपिनचन्द्र बंधु—पद्मचन्द्र कोश
१८. डा० मण्डन मिश्र व डा० रुद्रदेव त्रिपाठी—शोधप्रभा विशेषाङ्क
१९. प्रो० युगजीत नवलपुरी—तुजके बाबरी (हिन्दी अनुवाद)
२०. डा० रमाकान्त शुक्ल—अर्वाचीन संस्कृतम्
२१. डा० सत्यव्रत शास्त्री—मेक्डानल प्रणीत वैदिक ग्रामर का हिन्दी अनुवाद।
२२. श्री राम कृष्ण नौटियाल—बांग्लादेशोदयम्

* अनेक वर्ष पूर्व दृष्टि में आए इनमें ले अनेक ग्रन्णों व उनके लेखकों के नाम जैसे ध्यान में आए यहां वैसे ही दे दिए गए हैं।

## त्रिवेदीजी की कुछ विशिष्ट रचनाएं

१. **संस्कृतं यूरोपीया भाषाश्च**

२. **मोक्षमूलरवैदुष्यम्** ( हिन्दीअनुवादसहितम् संस्कृतनाटकम् ) मूल्यम्—४०

३. **भारत की विश्वको देन** (मैक्समूलर की विख्यात रचना India what it can teach us तथा उनके कुछ अन्य निबन्धों का विस्तृत भूमिका, मैक्समूलर के जीवन-परिचय, टिप्पणियों एवं परिशिष्ट के साथ हिन्दी अनुवाद), सजिल्द, पृष्ठ—२६२, मूल्य—रु० ६५

४. **संस्कार प्रकाश** (संस्कार, परिभाषा, महत्त्व, नवग्रहादि पूजन, नान्दी श्राद्ध, पुण्याहवाचन आदि पूर्वांग एवं शोडष संस्कारों तथा अन्य आवश्यक विधि-विधानोका ऊपर संस्कृत तथा नीचे हिन्दी में वैज्ञानिक विवेचन, विधि-विधान एवं मन्त्रार्थ सहित)। रॉयल साइज।

५. **नित्यकर्म प्रकाश**

६. **हमारा हिन्दी साहित्य और भाषापरिवार** पृष्ठ—५०० (तृतीय संस्करण छप रहा है)।

७. **हिन्दी कवि सर्वस्व** (चन्दवरदायी से दिनकर तक तक प्रमुख हिन्दी कवियों के व्यक्तित्व एवं कृतित्व का समीक्षात्मक सचित्र अध्ययन) पृष्ठ—३०० (तृतीय संस्करण छप रहा है)।

८. **बीसलदेव रासो** (राजस्थानी के इस आदि काव्य का समालोचनात्मक पाठ-निर्धारण एवं व्याख्या-विवेचन। मूल्य—रु० १०/-

### शीघ्र प्रकाशित होने वाले कुछ ग्रन्थ

१. **कालिदास के काव्यों में चर्चित बृहत्तर भारत का भौगोलिक अध्ययन** (शोध-प्रबन्ध)

२. **संस्कृत और ईरानी भाषाएं।**

३. **संस्कृत और यूरोपीयन भाषाएं।**

४. **Sanskrit and European Languages.**

